Rasārṇavasudhākara is 1330 A. D.[1] while Kumārasvāmin and Kallinātha flourished in the beginning of the 15th. century A. D. This lower limit can be further shortened by 50 years; thus bringing the terminus at 1250 A. D. because of the citation of the present work in a treatise entitled the Rasaratnadīpikā by Allarāja.[2] Allarāja calls himself a son of one Hammīra[3] who was a man of letters, and had a Koṅkaṇa king as his vassal. Allarāja the author of the work also was equally learned in all Śāstras and was a patron of learning. This Hammīra, may be identified with the Chowhan king of Mewar of the same name whose history is described in a poem Hammīramahākāvya by Nayacandra-sūri because the Chowhan prince is described by Nayacandra as having attempted a conquest of the southern countries including Koṅkaṇa. The reign of Hammīra as stated by Nayacandra begins in Saṁvat 1339 or 1283 A. D. The date of his son Allarāja the author of the Rasaratnadīpikā, therefore, can be fixed as the first decade of the 14th. century. In the work Rasaratnadīpikā, the author while mentioning the previous writers from whom he acquired his knowledge on the subject, mentions the Bhāvaprakāśana among the earliest works.[4] Bhānudatta

---

1. For details, See the introduction of the Rasārṇavasudhākara. T. S. S.

2. A MS copy No. 11330 of this work is preserved in the Library of the Oriental Institute, Baroda.

3. The drama Hammīramadamardana GOS. on the other hand, deals with another Hammīra who is a Mohamedan invador on Guzerat.

4. आसीत्कोङ्कणभूमिपालमुकुटव्याकीर्णरत्नावलिज्योत्स्नाविस्फुरिताङ्घ्रिपद्मयुगलः क्ष्मापालचूडामणिः।
प्रस्फूर्जत्प्रबलप्रतापतपनप्रक्रान्तलोकत्रयः श्रीहम्मीरमहीपतिः वितरणप्रख्यातकीर्तिः सदा ॥२॥

शास्त्राणां पारदृश्वा प्रबलभुजबलोत्क्षिप्तवैरीन्द्रवृन्दः शश्वन्माणिक्यमुक्ताकनकवितरणैः पूरिताशः कवीनाम्। दिक्प्रान्तख्यातकीर्तिः सकलगुणनिधिः प्रौढकन्दर्पमूर्तिः नारीणां चित्तजन्मा नृपमुकुटमणिः शुद्धवंशप्रदीपः ॥ ३ ॥

लक्ष्मीकेलिनिकेतनं च विदुषां विश्रामभूमिः परा वाग्देवीसुहृदालयं सुविपुलं धर्मस्य मुख्यायनम्।
नानाकौतुककारणं रसतरोर्बीजं कलाजन्मभूस्तस्मादल्लमहीपतिः समभवद्वीराग्रणीर्वीरहा ॥४॥

काश्यपं कोहलं चैव मतङ्गं दत्तिलं तथा। विशाखिलश्च माहेशं नाट्यं गिरिसुतामतम् ॥ ५ ॥
नारदं तुंबुरुं चैवार्जुनं रावणचोदितम्। पूर्वाचार्यैर्विरचितं नाट्यार्णवमथापि च ॥ ६ ॥
नाट्यलोचनमानन्दवर्धनं भरतोदयम्। भावप्रकाशनं चैव तथा शृङ्गारसागरम् ॥ ७ ॥
इत्थमालोक्य शास्त्राणि ॥ etc.

refers to this Rasaratnadīpikā in his Rasataraṅgiṇī.[1] The date of Bhānudatta is approximately fixed as 1300–1350 A. D.[2] and if we allow at the least 50 years for the present work to become famous so as to be quoted by the later writers as an authourity along with other comparatively ancient writers, we can safely fix the lower limit of the date of Śāradātanaya as 1250 A. D. The date of composition of the Bhāvaprakāśana, therefore, may fall in a period ranging between 1175–1250 A. D. This is also corroborated by the fact that all later writers on Alaṅkāra, who quote Śāradātanaya, such as Śiṅgabhūpāla, Srīvidyācakravartin, Gopendratippabhūpāla, Kumārasvāmin, Kallinātha, Vāsudeva, Raṅganātha, Rāghavabhaṭṭa and others, are given a date later than this period. Viśvanātha, the author of the Sāhityadarpaṇa (1300-1384 A. D.) however, cannot be said to have known the Bhāvaprakāśana though Śāradātanaya is earlier than him, because dissimilar points in these two works on the subject of the Uparūpakas far exceed the points of similarity.[3]

The question may be raised that this date is not correct because the present author depends for his meterials on a work entitled the Kalpalatā[4] which belonged to a latter period. There are two Kalpalatās known at the present time, one composed by Arisiṁha and the other by Deveśvara who flourished according to the estimation of certain scholars in the second quarter of the 13th century, and the beginning of the 14th. century respectively.[5]

Against this it may be pointed out that the Kalpalatā referred to by the author can not represent any of the two Kalpalatās composed by Arisiṁha and Deveśvara. Śāradātanaya's Kalpalatā deals with the Rasas and the relation of the words with their meanings and the behaviour of the Nāyikās towards their lovers when they are angry owing to the conduct of the other party. But neither Arisiṁha nor Deveśvara treats of Rasas and Bhāvas or any other subjects referred to by Śāradātanaya. In the Kalpalatā of Arisiṁha,

---

1. Grantharatnamālā ed. P. 3.

2. S. K. De S. P. Vol. I P. 249. and P. V. Kane, Sāhitya. intro, P. cxviii.

3. For details see section IV *Supra.*

4. PP. 131, 4; 175, 18.

5. S. K. De. H. Sanskrit Poetics Vol. I. PP. 212, 213.

indeed, we find a topic treating of the relation of words with their meanings. But while he treats of three kinds of words and their meanings, in the Kalpalatā referred to by our author, the words and their meanings are said to be of four kinds. Therefore, on the ground of Śāradātanaya's references to the Kalpalatā alone the date arrived at above cannot be vitiated. The age of Kalpalatā referred to by Śāradātanaya seems to be earlier than that of Mammaṭa, because Śāradātanaya says that both himself and Mammaṭa followed the teachings contained in the Kalpalatā with regard to the four kinds of meanings.[1]

Some scholars identify Bhaṭṭagopāla the commentator of the Kāvyaprakāśa of Mammaṭa[2] with Bhaṭṭagopāla the father of Śāradātanaya. This identification may not be quite correct but it is certainly probable because of two considerations: viz., (1) that the commentator Bhaṭṭagopāla does not quote any author or work later than Mammaṭa and (2) that he is at the same time quoted by the authors like Kumārasvāmin and others in the early part of the 15th. century.

---

1. इत्थं कल्पलतायां तु वाच्याद्यर्थचतुष्टयम् ।
निर्णीतं वाचकादेश्च शब्दस्यापि चतुष्टयम् ॥
तच्च काव्यप्रकाशेन मयाप्यत्र प्रदर्शितम् । P. 175, 18.

2. Published in the Trivandrum Sanskrit Series.

# CONTENTS.

# विषयानुक्रमणिका।

## प्रथमोऽधिकारः।

### भावनिर्णयः।

## द्वितीयोऽधिकारः ।

### रसस्वरूपाश्रयवृत्तिनिर्णयः ।

## तृतीयोऽधिकारः ।

### रसभेदतत्प्रकारनिर्णयः

---

## चतुर्थोऽधिकारः ।

### शृङ्गारालंबननायकनायिकादिस्वरूपनिर्णयः ।

---

## पञ्चमोऽधिकारः ।

### नायकनायिकाभेदतत्तदवस्थादिनिरूपणम् ।

## अथ षष्ठोऽधिकारः ।

### शब्दार्थसंबन्धतद्भेदप्रकारनिर्णयः ॥

---

## सप्तमोऽधिकारः।

### नाट्येतिवृत्तशरीरलक्षणाभिधानम्।

## अष्टमोऽधिकारः।

दशरूपकलक्षणम्।

---

## नवमोऽधिकारः ।

### नृत्यभेदस्वरूपनिरूपणम् ।

## दशमोऽधिकारः।

### नाट्यप्रयोगभेदप्रकारविशेषनिर्णयः।





शारदातनयविरचितम्

# भावप्रकाशनम् ।

## प्रथमोऽधिकारः ।

प्रश्च्योतन्मदमन्थरभ्रमरिकाझङ्कारगीतं[1] मुहुः
[2]हेलाबृंहितवाद[3]व्यतिकरं भावोल्लसत्प्रक्रियम् ।
नृत्यन्नस्तु सुखाय वः करिमुखः [4]पुण्योपहारैश्चिरा-
दानन्दी[5] नटभावितैरिव यथाभावैः स सामाजिकः ॥

वन्दे वृन्दावनचरं गोविन्दं गोपिकापतिम् ।
गाः पालयन्तं गायन्तं वेणुना षड्जवा[6]दिना ॥

अम्बिकारसिकापाङ्गमा[7]विस्मितमुखाम्बुजम् ।
[8]भजे भुजङ्गललि[9]तं महो[10] वैयाघ्रचर्मिणम् ॥

नमामि मानसोल्लासभावना[11]फलदायिनीम् ।
शारदां शारदाम्भोजविशदामभयप्रदाम् ॥

आर्यावर्ताह्वये देशे स्फीतो जनपदो महान् ।
मेरूत्तर इति ख्यातस्तस्य दक्षिणभागतः ॥

ग्रामो माठरपूज्या[12]ख्यो द्विजसाहस्रसम्मितः ।
तत्र लक्ष्मणनामासीद्विप्रः काश्यपवंशजः ॥

त्रिंशता क्रतुभिर्विष्णुं तोषयामास वेदवित् ।
वेदानां भाष्यमकरोन्नाम्ना यो[13] वेदभूषणम् ॥

तस्य श्रीकृष्ण[14]नामासीत्पुत्रः कृष्ण इवापरः ।
वेदानधीत्य [15]निखिलान् शास्त्राण्यप्यखिलानि च ॥

---

1 B तिक्रम॰ । 2 B स्फूर्जद्बृं॰ । 3 B वादिनिर्वृ॰ । 4 A पण्योपहा॰ । B पुण्योपचा॰ । 5 A नन्दानल॰ । 6 A नादि॰ । 7 C ष्कृत॰ । 8 B भुजे । 9 B लपि॰ । 10 C तमहा । 11 B पद॰ । 12 B पूजा॰ । 13 BC वै । 14 BC कण्ठ॰ । 15 AB सक॰ ।

[1]स पुत्रार्थी महादेवं वाराणस्यामतोषयत् ।
तस्यासीद्भट्टगोपालनामा[2] सूनुः [3]सुलोचनः ॥

अष्टादशसु विद्यासु बहुशः स[4] कृतश्रमः ।
उपास्य शारदां देवीं पुत्रं लेभे गुणोत्तरम् ॥

तमाह्वयत्पिता प्रीतः शारदातनयाख्यया ।
अधीतवेदवेदाङ्गो [5]वर्धमानः पितुर्गृहे ॥

कदाचिच्छारदां देवीमुपासितुमुपाययौ ।
उपास्य [6]सवनं तस्याश्चैत्रयात्रामहोत्सवे ॥

आसीनां नर्तना[7]गारे तां देवीं प्रेक्षकैः सह ।
प्रणम्य तैरनुज्ञातस्तस्याः पार्श्वं उपाविशत् ॥

त्रिंशत्प्रकारभिन्नानि रूपकाणि पृथक्पृथक् ।
[8]नटैः प्रयुज्यमानानि भावाभिनयकोविदैः ॥

दृष्ट्वा स देवीं बरदां नाट्यवेदमयाचत ।
नाट्यशालापतिः कश्चिद्दिवाकर इति द्विजः ॥

तयैव नाट्यवेदस्य नियुक्तोऽध्यापने तदा ॥
प्रीतस्सोऽपि सदाशिवस्य शिवयोगौर्यो मतं वासुके-
वाग्देव्या अपि नारदस्य च [9]मुनेः कुम्भोद्भवव्यासयोः ।
शिष्याणां भरतस्य यानि च मतान्यध्याप्य तान्यङ्गना-
सूनोरप्यथ नाट्यवेदमखिलं सम्यक्तमध्यापयत्[10] ॥

शारदातनयो देव्यास्तान्यधीत्य च सन्निधौ ।
आदाय सारमेतेभ्यो हितार्थं नाट्यवेदिनाम् ॥

भावप्रकाशनं नाम प्रबन्धमकरोत्तदा ।
एतस्मिन्प्रथमं भावस्तस्य भेदास्ततः परम् ॥

1 A पुत्रार्थे स, C स पुत्रार्थं। 2 A ळो नाम्ना०। 3 AB सलो०। 4 BC सु०। 5 B वर्त्त० 6 A० स वसंस्त ०। 7 C ० नेऽगा०। 8 C० Omits two lines. 9BC गुरोः। 10 A सम्यक्तथाध्यापिपत्, B सम्यक्तथाध्यापयत्।

तद्वान्तरभेदाश्च तत्तत्कार्येषु[1] कौशलम् ।
तत्साध्योऽर्थस्तथा[2] तेषामुपकार्योपकारिता ॥

रसोपादानता तेषां चरस्थिरविभागत[3]ः ।
तद्दर्शनानि तद्दृष्टिः [4]दृष्टिधर्माः पृथग्विधाः ॥

परस्परस्य सामर्थ्यं साहचर्यात्कचित्कचित् ।
इतिभागतया[5] भावा द्वादशैते ततो रसः ॥

तद्भेदा भेदभेदाश्च तेषां जन्म च नाम च ।
जनकत्वं च जन्यत्वं तेषामन्योन्यतः पृथक् ॥

प्रधाने[6]तरभावश्च तेषामन्योन्यसङ्करः ।
तन्मेलनं च तत्सिद्धिर्विशेषः सङ्करोद्भवः ॥

तद्व्यङ्ग्यता वाच्यता च तन्मैत्री तद्विरोधिता ।
तत्कालनियमस्तत्तद्वर्णास्तद्दैवतानि च ॥

स्थायि[7]सञ्चारिभेदाश्च तेषां तद्दृष्टयोऽपि च ।
इति विंशतिरुद्दिष्टाः प्रकारा रसगा[8]मिनः ॥

ततः शब्दार्थसम्बन्धस्तत्प्रकाराः पृथग्विधाः ।
तद्वृत्तयो[9] रूपकाणि तद्भेदा[10]स्त्रिंशदात्मकाः ॥

एतैरर्थैः प्रबन्धोऽयं[11] यथावत्कथ्यतेऽधुना[12] ।
कथ्यन्ते ये[13]ऽन्तरा भावास्त[14]त्तदर्थानुषङ्गिणः ॥

तत्र तत्रैव विज्ञेयास्ते[15] सूक्ष्मेक्षिकया बुधैः ।
उद्दिष्टानामिहार्थानां लक्षणप्रतिपादनम्[16] ॥

यथाक्रमं भवेत्क्वापि यथौचित्यं क्वचिद्भवेत् ।
भावः स्याद्भावनं[17] भूतिरथ भावयतीति[18] वा ॥

---

1 B च कौ ० । 2 A C ०स्ततस्ते० । 3 A ०गता । 4 A तस्य ध ० । 5 AC भावगतां । 6 A प्रधाने तदभावाश्च । C प्रधाने रसभावश्च । 7 B स्थायी. । 8 B नामि. । 9 BA तद्दृष्ट० । 10 B दार्विं० । 11 B ० ऽथ । 12 A ०ऽथवा । 13 A ०ऽप्यन्त० । 14 B ०त्तत्त० । 15 B ०यास्तु ० । 16 B ०कम् ० 17 C ०द्भवनं० । 18 A ०तेति ।

पदार्थो वा[1] क्रिया सत्ता[2] विकारो मानसोऽथवा ।
विभावाश्चानुभावाश्च स्थायिनो व्यभिचारिण[3]: ॥

सात्त्विकाश्चेति कथ्यन्ते भावभेदाश्च[4] पञ्चधा ।
अर्थान्विभावयन्तीति विभावाः परिकीर्तिताः[5] ॥

विभावितार्थानुभूतिरनुभाव इति स्मृतः[6] ।
अवस्थिताश्चिरं चित्ते सम्बन्धाचानुबन्धिभिः ॥

वर्धिता ये रसात्मानः ते स्मृताः स्थायिनो बुधैः ।
अनवस्थितजन्मानो भूयोभूयः स्वभावतः ॥

स्थायिना रसनिष्पत्तौ चरन्तो व्यभिचारिणः ।
सत्त्वजा ये विकाराः स्युः स्त्रीयास्त्रीयविभागतः ॥

त एव सात्त्विका भावा इति विद्वद्भिरुच्यते ।
ललिता ललिताभासाःस्थिराश्चित्राः खरा इति ॥

रूक्षाश्च निन्दिताश्चैव विकृताश्चेति च क्रमात् ।
[7]शृङ्गारादिरसानां ते विभावा नामभिः कृताः ॥

ललिता ललिताभासा भावाः शृङ्गारहास्ययोः ।
स्थिराश्चित्रा विभावा ये[8] ते [9]वीराद्भुतयोः क्रमात् ॥

खरा रूक्षा[10] विभावाः स्यू रौद्रस्य करुणस्य च ।
भयानकस्य विकृता बीभत्सस्य च निन्दिताः ॥

एकेन वाऽथ द्वाभ्यां वा त्रिभिर्भावान्तरैरपि ।
संसृष्टाश्चेद्रसोत्कर्षे [11]त एवोद्दीपनाः[12] स्मृताः[13] ॥

ये मनोह्लादजनना[14]स्तत्तदिन्द्रियगोचराः ।
ललितास्ते विभावाः स्युः शृङ्गारोत्कर्षहेतवः ॥

---

1 B या । 2 AB ०सत्त्व० । 3 B ०णाम् । 4 B ०दास्तु । 5 After this AC add: "विभावितोऽर्थोऽनुभव इति विद्वद्भिरुच्यते" । 6 After this A omits six lines । 7 A omits this line. 8 B स्युः । 9 A वीर्या० । 10 A रौद्रा । 11 AC ते भा० । 12 A ०काः, 13 C मताः । 14 A ०नका० ।

संसूचिताः श्रुता[1] दृष्टाः स्मृता[2] ये हासकारिणः ।
ते भावा ललिताभासा हास्यसम्पत्प्रकाशकाः[3] ॥

श्रुता दृष्टाः स्मृता ध्याता भवन्ति स्थैर्यहेतवः ।
ते स्थिरा इति विज्ञेयाः वीराख्यरसपोषकाः[4] ॥

[5]सदानुभूयमाना ये हृदि वैचित्र्यकारिणः ।
भावाश्चित्रा इति ज्ञेयास्तेऽद्भुतैश्वर्यभावकाः ॥

स्वगोचरैश्च विषयैः क्लिश्यन्तेऽक्षाणि तत्क्षणात् ।
ते रूक्षा इति कथ्यन्ते [6]करुणोत्पत्तिकारकाः ॥

गृहीतमात्रा[7] मनसः [8]कातरोत्पादनक्षमाः ।
ये भावास्ते खरा[9]ः ख्याता रौद्रोत्कर्षविवर्धनाः ॥

अक्षीणि द्राङ्निमीलन्ति येभ्यो न स्पृहयन्ति च ।
ते भावा निन्दिताख्याः स्युर्बीभत्सोल्लासकारकाः[10] ॥

विषया[11]स्त्विन्द्रियैः स्पृष्टा विकृतिं जनयन्ति ये ।
ते भावा विकृताः ख्याता भयानकविभावकाः ॥

अत्रैवालम्बना भावाः कथ्यन्ते रसभूमयः ।
अनुद्दिष्टा अपि यथा रसा[12]नुभवसिद्धये ॥

मधुराः सुकुमाराश्च रूपयौवनशालिनः ।
शृङ्गारालम्बना भावा[13]स्तन्वङ्ग्यस्तरुणादयः ॥

व्यङ्गाश्च विकृताकाराः परचेष्टानुकारिणः ।
[14]हास्यस्यालम्बना भावाः प्रायेण कुहकादयः ॥

त्यागिनः सत्त्वसम्पन्नाः शूरा वीराः सविक्रमाः ।
वीरस्यालम्बना भावाः शस्त्रास्त्रक्षतिशोभिनः ॥

---

1 C स्मृता। 2 B श्रुता०। 3 B त्प्रसाधकाः। 4 A वीरैश्वर्यभावकाः। 5 A. Reads here "स्वविस्मयास्पदा भावास्तत्तद्ग्रहणमात्रतः। नानारूपाश्च ते चित्रास्त्वद्भुतोत्पत्तिहेतवः" 6 B C ०णास्थिति०। 7 AC० त्रे०। 8 A खरत्वो०। 9 A B ख्याः स्युः ०। 10 A ०ल्लासहेतवः;B त्कर्षकारकाः। 11 A याः स्वे। 12 A० भिनय०। 13 A०स्तरुणीत०। 14 C०हास०

विचित्राकृतिवेषा[1]श्च विचित्रा[2]चारविभ्रमाः ।
अद्भुतालम्बना भावा मायालीलाविलासिनः ॥

बहुबाहा[3] बहुमुखा भीमदंष्ट्राः सिताङ्ककाः ।
रौद्रस्यालम्बना भावाः क्रूरोद्वृत्तशठादयः ॥

कृशा विषण्णा मलिना रोगिणो दुःखिनस्तथा ।
करुणालम्बना भावा दारिद्र्योपहताश्च ये ॥

निन्दिताकृतिवेषाश्च निन्द्याचाराङ्गरोगिणः ।
बीभत्सालम्बना भावास्ते पिशाचादयोऽपि च ॥

महारण्यप्रविष्टाश्च महासङ्ग्रामचारिणः ।
भयानकालम्बनाः स्युर्गुरुराजापराधिनः ॥

ललिताद्या[4] विभावास्ते भावेष्वालम्बनेष्वमी[5] ।
पुष्णन्ति स्थायिनो भावान्यथायोगं रसात्मना ॥

अनुभावश्चतुर्धा[6] स्यान्मनोवाक्कायबुद्धिभिः ।
मन [7]आरम्भानुभावा भावाद्या[8] दश योषिताम्[9] ॥

[10]वागारम्भानुभावाश्च द्वादशालाप[11]पूर्वकाः ।
गात्रारम्भानुभावाश्च लीलाद्या दश योषिताम् ॥

[12]बुद्ध्यारम्भानुभावाश्च रीतिवृत्तिप्रवृत्तयः ।
अष्टौ तु सात्त्विका भावास्तेऽपि स्तम्भादयः स्मृताः ॥

निर्वेदाद्यास्त्रयस्त्रिंशद्भावास्ते व्यभिचारिणः ।
यौवने सत्त्वजाः स्त्रीणामलङ्कारास्तु विंशतिः ॥

तत्र [13]लीलादयो भावा यद्यपि स्युर्न सात्त्विकाः ।
छत्रिणां[14] गतिवत्तेऽपि तल्लिङ्गत्वेन[15] सात्त्विकाः ॥

यत्सत्त्वपरिणामि स्याद्द्रव्यं तन्मन उच्यते ।
ईश्वरस्य च मुक्तानां तत्सङ्कल्पो भविष्यति ॥

---

1 B चेष्टा०। 2 A घा०। 3 B भावा०। 4 B न्या०। 5 B ष्विह०। 6 B र्थः०। 7 B आलम्बना०।
8 A द्वा०। 9 B तः०। 10 B गात्रा०। 11 A दूष०। 12 B Omits two lines.
13 A वीरा०। 14 B० णो०। 15 B० पि०।

संसारिणां मनस्त्वेन[1] परिणम्य प्रवर्तते ।
तत्सत्त्वपरिणामित्वात्सत्त्वमित्युच्यते बुधैः ॥

यद्रजःपरिणामि स्याद्द्रव्यं [2]स प्राण उच्यते ।
ईश्वरस्य च मुक्तानां क्रियाहेतुः स ईरितः ॥

संसारिणां पुनरसौ प्राणाकारेण तिष्ठति ।
यत्तमःपरिणामि स्याद्द्रव्यं सा वागुदाहृता ॥

ईश्वरस्य च मुक्तानां सा वाग्भवति शोभना ।
संसारिणां परिणमेच्छब्दाकारेण सा पुनः ॥

[3]उक्ता क्रोधादिभिर्भावैस्तत्फलाव्यभिचारिणी ।
या मुक्तेश्वरवागुत्था[4] सा[5]वाणीत्युच्यते बुधैः ॥

रविः सोमश्च वह्निश्च तस्य तस्य यथाक्रमम् ।
अधिष्ठातार इत्येषा व्यवस्था योगिभिः कृता ॥

तत्तद्रूपमधिष्ठाय तिष्ठन्नात्मा च [6]तन्मयः ।
एते मनःप्राणवाचो मुक्तानामीश्वरस्य च ॥

कार्योप[7]करणात्मत्वाद्देवा इत्येव कीर्तिताः ।
अन्तर्यामी स एव स्याद्यः प्राणमय उच्यते ॥

जीवः शरीराधिष्ठाता तन्नियच्छन् स्वकर्मभिः ।
कर्ता भवति सर्वस्य शरीरेण सह स्वयम् ॥

करणानि च जीवं च[8] पृथिव्याद्याश्च देवताः ।
नियच्छन्नप्यधिष्ठाय कर्ता प्राणमयो भवेत् ॥

अयं नान्तर्गतस्तस्य कर्तुर्जीवस्य न क्वचित् ।
मनोमयस्तु जीवानां कर्मकारयिता भवेत् ॥

बुद्धिचित्ताहङ्कृतयः तस्य[9] त्रिगुणसंभवाः ।
सर्वेषामपि जीवानां सर्वव्यापारहेतवः ॥

---

1 B॰ नस्थे॰ । 2 AB तत्प्रा ॰ । 3 AC ॰ या न॰ । 4 B वागर्थो । 5 A वागि
6 A यन्म । 7 B पकारकत्वादेदें । 8 AC वश्च । 9 AC तिस्रश्चि ।

एतेभ्यः सर्वभावानां प्रभवः समुदाहृतः ।
[1]आदित्यः सर्वसाक्षित्वान्मनो यत्तदधिष्ठितम् ॥

यत्संस्कारवशाद्वेत्ति सर्वं तत्तेन निर्मलम् ।
तादृगेव मनः सत्त्वं गुणैरस्पृष्टमुच्यते ॥

तस्मादवि[3]कृता[4]द्याद्यः स्पन्दो भाव उदाहृतः ।
चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति ॥

ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ।
[5]अतो मनोविकारस्य भावत्वं प्रकटीकृतम् ॥

वाग्भिरङ्गैर्मुखरसैर्यैस्सत्त्वाभिनयेन च ।
भावयन्बहिरन्तस्स्थानर्थान्भाव उदाहृतः ॥

हेलाहेतुः स श्रृङ्गारो भावात्किञ्चित्प्रकर्षवान् ।
सग्रीवारेचको हावो नासाक्षिभ्रूविलासकृत् ॥

स एव हावो हेला स्याल्ललिताभिनयात्मिका ।
नानाप्रकाराभिव्यक्त[6]श्रृङ्गाराकारसूचिका[7] ॥

रूपोपभोगतारुण्यैर्योऽलङ्कारोऽङ्गसंश्रयः ।
सा शोभा सैव कांतिः स्यान्मन्मथाप्यायिता च्छविः ॥

कान्तिरेवोपभोगेन देशकालगुणादिभिः ।
उद्दीप्यमाना विस्तारं[8] याता[9] दीप्तिरिति स्मृता ॥

सर्वावस्थासु चेष्टानां माधुर्यं मृदुकारिता ।
निस्साध्वसत्वं प्रागल्भ्यं प्रयोगेषु च सर्वतः ॥

मानग्रहो दृढो यस्तु तद्धैर्यमिति कथ्यते ।
औदार्यं प्रश्रयः प्रोक्तः सत्त्वा[10]वस्थानुगो बुधैः ॥

भावो हावश्च हेला च शोभा कान्तिः [11]सदीप्तिका ।
प्रागल्भ्यं धैर्यमौदार्यं माधुर्यमिति सात्त्विकाः ॥

---

1 B अनित्यः। 2 B तत्सं। 3 B दपि। 4 B तम्। 5 B ततो। 6 B व्यक्ति। 7 BC ता। 8 B रा। 9 B सा। 10 C र्वा। 11 B श्च।

लीला विलासो विच्छित्तिर्विभ्रमः किलिकिञ्चितम् ।
मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा ॥

विहृतं चेति विज्ञेयाः शारीरा दश योषिताम् ।
मनोमधुरवागङ्गचेष्टितैः [1]प्रीतियोजितैः ॥

प्रियानु[2]करणं लीला सा स्यात्पुंसः स्त्रिया अपि ।
प्रियसङ्गमकाले[3] तु नेत्रभ्रूवक्त्रकर्मणाम् ॥

विशेषो यस्स[4] विज्ञेयो विलासोऽङ्गक्रियादिषु ।
स्वल्पोऽप्यना[5]दरन्यासो माल्यादीनां स्वमण्डने ॥

यः परां जनयेत्[6] शोभां सा विच्छित्तिरुदाहृता ।
वागङ्गसत्त्वाभिनयभूषास्थानविपर्ययः ॥

त्वरया [7]कल्पितोऽभीष्ट[8]दर्शने यः स विभ्रमः ।
क्रोधाभिलाषहर्षादेः सङ्करः किलिकिञ्चितम् ॥

प्रियस्तुतिकथालापलीलाहेलादिदर्शने ।
[9]तद्भावभावनं मोट्टायितमित्युच्यते बुधैः ॥

सौख्योपचारैः सानन्दाधर[10]केशग्रहादिभिः ।
दुःखोपचारवत्कुप्येद्बहिः कुट्टमितं तु तत् ॥

[11]इष्टभावोपगमने तथाऽभीष्टस्य दर्शने ।
गर्वाद्यथाभिमानाद्वा बिब्बोकोऽनादरक्रिया ॥

सुकुमारोऽङ्गविन्यासः[12] सभ्रूनेत्राधरक्रियः ।
अनुल्बणश्च[13] मसृणः[14] स्त्रीणां ललितमीरितम् ॥

स्वभावाद् व्रीडया वाऽपि प्राप्तकालमनुत्तरम् ।
विहृतं तदिति प्राहुर्मानेर्ष्याभ्यामथापि वा ॥

गात्रारम्भानुभावां[15]स्तानिमान्पश्यन्ति सूरयः ।
शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यमेव च ॥

---

1 AB प्रति । 2 B सर । 3 BC ऽपि । 4 B यस्य । 5 B C रत । 6A नयन् । 7 B च कृतो । 8 A B ष्टं । 9 A शनैस्तु । 10 AB देश । 11 B तुष्टा । 12 B C विन्यासभ्रूनेत्राद्य-धरक्रिया । 13 B श्च । 14 B णा । 15 A B वान्ता ।

ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ।
दक्षता शौर्यमुत्साहो नीचे कुत्साऽधिके मुहुः ॥
स्पर्धोऽधि[1]क्रियते[2] यत्र सा शोभेति प्रकीर्तिता ।
वृषयानं[3] स्मितालापो विलास इति कथ्यते ॥
माधुर्यं चेष्टितालापस्पर्शानां[4] स्पृहणीयता ।
[5]शुभेऽशुभेऽर्थे तद्धैर्यं व्यवसायाद[6]चालनम् ॥
अविज्ञातेङ्गिताकारो भावो गाम्भीर्यमुच्यते ।
चेष्टितं यस्य शृङ्गारमयं तल्ललितं भवेत् ॥
प्रियालाप[7]स्मितोदारं दानमौदार्यमुच्यते ।
अवमानासहत्वं यत्तत्तेजस्समुदाहृतम् ॥
एते साधारणाः सत्त्वगात्रारम्भानुभावयोः ।
स्थैर्यं[8] गाम्भीर्यमाचार्यैः चित्तारम्भावुदाहृतौ ॥
प्राचुर्यमेषां शृङ्गारे[9] वीराद्भुतसमा[10]गमे ।
अन्यत्र तेषां संसर्गवशात्कार्यवशादपि ॥
भावास्तु विंशतिस्स्त्रैणाः शृङ्गारे क्वचिदद्भुते ।
क्रीडितं केलिरित्येतौ[11] गात्रारम्भावुदाहृतौ ॥
बाल्ययौवनकौमारसाधारणविहारभाक् ।
विशेषः क्रीडितं[12] केलिः तदेव [13]दयिताश्रयम् ॥
गात्रारम्भानुभावत्वे[14] द्वितयं कथ्यते बुधैः ।
वागारम्भा[15] इमे तेषामालापः प्रथमो[16] भवेत् ॥
प्रलापश्च विलापोऽनुलापः संलाप एव च ।
अपलापश्च सन्देशोऽ[17]तिदेशश्चाष्टमस्स्मृतः ॥
निर्देश [18]उपदेशश्चापदेशो व्यपदेशकः ।
इदं वो [19]भाग्यमित्यादि वाक्यमालाप इष्यते ॥

---

1 A र्थया क्रि । 2B याधिकृ । 3B विषयाणाम् । 4B स्पर्शना । 5A शुभाशुभोत्था । 6 A सायोऽथचा । 7 BC लापात् । 8 B र्यं । 9 A ङ्गार । 10 C रसा । 11 A त्येते । 12 B ता । 13 A ललिता । 14 B तद्द्वयं । 15 A गात्रारम्भ । 16A मं । 17 B C निर्देशश्च ततःपरम् । 18 C निर्देशश्चापदेशोपदेशः सव्यपदेशकः । 19 B C यो भाग इत्या० ।

[1]प्रलापः स्यात्क्व यास्यामि[2] गतिः केत्यादि[3] यद्वचः ।
विलापः स्यादात्मदुःखोद्भावनातत्परं वचः ॥
बहुशोऽभिहितं वाक्यमनुलापो भवेदिह ।
उक्तिप्रत्युक्तिमद्वाक्यं सल्लाप इति कथ्यते ॥
पूर्वोक्तस्यान्यथावादो ह्यपलाप इतीरितः ।
सन्देशः स्यात्स्ववार्ताभि[5]प्रेषणं विषयान्तरे ॥
अतिदेशस्तदुक्तं यत्तन्मदुक्तमितीरितम् ।
एते वयं क्व वः कार्य[7]मिति निर्देश इष्यते ॥
उपदेशो[8]गृहाण त्वं गच्छेत्यादिपरं वचः ।
अन्यार्थ[9]कथनं यत्तु सोऽपदेश इति स्मृतः ॥
व्याजादात्माभिलाषोक्तिर्व्यपदेश इतीरितः ।
वागारम्भानुभावास्ते क्रमाद्द्वादश कीर्तिताः ॥
बुद्ध्यारम्भानुभावेषु[10]रीतिः प्रथममुच्यते ।
रीतिर्वचनविन्यासक्रमः[11]साऽपि चतुर्विधा[12]॥
तत्र वैदर्भपाञ्चाललाटगौडविभागतः ।
सौराष्ट्री द्राविडी चेति रीतिद्वयमुदाहृतम् ॥
तत्तद्देशी[13]यरचनारीतिस्तद्देशनामभाक् ।
समाससौकुमार्यादितारतम्यात्क्वचित्क्वचित् ॥
उपचारविशेषाच्च[14] प्रासानुप्रासभेदतः ।
तथा सौराष्ट्रिका[15]भेदाद्द्रा[16]विडीभेदतोऽपि च ॥
प्रतिवचनं प्रतिपुरुषं तदवान्तरजातितः प्रतिप्रीति ।
आनन्त्यात्संक्षिप्य प्रोक्ता कविभिश्चतुर्विधेत्येषा ॥
तासु पञ्चोत्तरशतं विधाः प्रोक्ता मनीषिभिः ।
ग्रन्थविस्तरभीतेन मया ताभ्यो विरम्यते ॥

---

1 A विला । 2 B यामीति । 3 C केत्या । 4 A हृदे तिच । 5 C दि । 6 B यत्सा-दृश्याद्युक्तमीरितम् । 7 B C कामं । 8 B शे । 9 C र्थं । 10 A र । 11 B सो । 12 B धः । 13 C च । 14 C श्च । 15 A की । 16 BC मि ।

त एवाक्षरविन्यासास्त एव पदपङ्क्तयः[1] ।
पुंसि पुंसि विशेषेण कापि कापि सरस्वती ॥

तस्माच्चतुर्धा[2]बोद्धव्या रीतिभे[3]दप्रकल्पना ।
वृत्ति[4]श्चतुर्विधा[5] ऋग्यजुस्सामाथर्वसम्भवा[6] ॥

भारती सात्त्वती चैव[7] कैशिक्यारभटीति च ।
[8]औद्भटाः पञ्चमीमर्थवृत्तिं च प्रतिजानते ॥

अर्थवृत्तेरभावात्तु विश्रान्तां पञ्चमीं परे ।
मधुकैटभासुराभ्यां नियुद्धमार्गेण युध्यतो विष्णोः ॥

वृत्ति[9]त्रयं प्रसूतं[10] भरतप्रोक्ता च भारतीत्य[11]परे ।
अपरे तु[12] नाट्यदर्शनसमये कमलोद्भवस्य वदने[13]भ्यः ॥

शृङ्गारादिचतुष्टयसहिता वृत्तीः समाचख्युः ।
दाक्षिणात्या तथाऽऽवन्त्या पौरस्त्या चौड्रमागधी ॥

प्रवृत्तयश्चतस्रोऽपि[14] वागारम्भाः स्युरेकदा ।
तद्व्यापारात्मिकाः प्रोक्ता वृत्तयश्च चतुर्विधाः ॥

वाचिकं सात्त्विकं नृत्त[15]मा[16]हार्यं च तथाङ्गिकम् ।
यथाक्रमं नियमितं भारत्याद्यासु वृत्तिषु ॥

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥

देशभाषाक्रियाभेदलक्षणाः स्युः प्रवृत्तयः ।
लोकादेवावगम्यैता यथौचित्यं प्रयोजयेत् ॥

उक्तास्ता वृत्तयः साङ्गा भोजसोमे[17]श्वरादिभिः ।
तस्मादासां स्वरूपं तु दिङ्मात्रं समुदाहृतम् ॥

देश्याः प्रवृत्तयस्तत्तद्दे[18]श्यैर्ज्ञेया विचक्षणैः ।
क्रियाभेदा न शक्यन्ते ज्ञातुं वक्तुं च केनचित् ॥

---

1 A भक्त । 2 A षोढा वा । 3 A तेर्भेद । 4 C द्वि । 5 A र्धां । 6 A समुद्भवा । 7 A B चेति । 8 A उद्भ । 9 A स्त्रियं । 10 A ता । 11 A त्यन्ते । 12 C omits तु । 13 A B वक्त्रे । 14 B C हि । 15 A B वृत्तं । 16 C साद्दा । 17 C सौदी । 18 A B शद्रे ।

तस्माद्यतः प्रवृत्तिर्वा क्रिया वा यत्र दृश्यते ।
तत्र तज्ज्ञैः सह ज्ञेयास्सर्वैः सर्वाः प्रवृत्तयः ॥
भाषा स्यात्सप्तधा देश्या विभाषाऽपि[1]च सप्तधा ।
मागध्यवन्तिका प्राच्या शौरसे[2]न्याच [न्यर्ध]मागधी[3] ॥
पैशाची दाक्षिणात्या च तत्तद्देशेषु[4] भाष्यते[5] ।
शकाराभीरचण्डालशबरद्रमिडान्ध्रजाः ॥
हीना वनेचराणां च तत्तज्जातिषु दृश्यते ।
देशभेदक्रियाभेदांस्त[6]त्र तत्रोपलक्षयेत् ॥
एतेऽनुभावाः कविभिर्निबन्धे योग्यकल्पिताः ।
अभिनेया[7] नटैर्नाट्ये तत्तदर्थानुकूलतः ॥
विभावः कारणं कार्यमनुभावः प्रकीर्तितः ।
हेतुकार्यात्मनोः सिद्धिस्तयोः संव्यवहारतः ॥
ज्ञायमानतया तत्र विभावो भाव[8]पोषकृत् ।
भावो हृदि स्थितो येनव्यज्य[9]ते चानुभाव्यते ॥
[10]भ्रूविक्षेपकटाक्षादिर्विभावो हृदयं श्रितः ।
भावान् व्यनक्ति यः सोयमनुभाव इतीरितः ॥
रामाद्याश्रयदुःखादेरनुभूतेस्तदात्मता[11] ।
[12]सामाजिकस्य मनसो या[13]स भाव इति स्मृतः ॥
एवं विभावानुभावभावाः प्रोक्ताः स्वरूपतः ।
अनुभावास्तु दृश्यन्ते बहवोऽन्ये रसोदये ॥
तत्र तत्रा[14]भिधीयन्ते तद्रसोत्कर्षहेतवः ।
मनसस्सत्त्वमधिष्ठाय तत्तदिन्द्रियगोचरान्[15] ॥
बुद्धिमाश्लिष्य विषयाननुभुङ्क्ते[16]स्वभावतः ।
त्रिधा सत्त्वं भवेद्बुद्धि[17]ज्ञानानन्दविभेदतः ॥

---

1 B अपि । D वेषा अपि । 2 C सेन्यःस । 3 A लवी । 4 श्ये । 5 B षते । 6 A दात्त । 7 A B यो । 8 A मो । 9 B C चर्व्य । 10 A भ्रूविक्षेपकटाक्षादिस्सोऽनुभाव इतीरितः । 11 B C ना । 12 B C रामात्मक । 13 C वासना वा इति स्मृतः । B यास भावा हृदि स्थिताः 14 C न बि । 15 A रात् । 16 C क्तः । 17 A B र्शी. ।

तद्भावभावनात्मा स्यात्परदुःखादिसेवया[1] ।
परस्य सुखदुःखादेरनुभावेन चेतस[2]ः ॥
तद्भावभावनं[3] येन भवेत्तदनुकूलतः ।
तत्सत्त्वं तेन निर्वृत्तास्सात्त्विका इत्युदीरिताः ॥

अनुभावत्व[4]सामान्ये सत्यप्येषां पृथक्तया[5] ।
लक्षणं सत्त्वजत्वाद्धि तेऽपि स्तम्भादयः स्मृताः ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदश्च[6] वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥

स्तम्भो[7] मदगदक्रोधभयविस्मयगर्वजः[8] ।
तथा हर्षविषादादेर्जायते नीचमध्ययोः ॥
सचेतनोऽपि निश्चेष्टो निष्प्रकम्पो[9] जडाकृतिः ।
[10]स्तब्धगात्रश्च शून्यश्च स्तम्भवानिति कथ्यते ॥
स्वेदः सम्पीडनक्रोधश्रम[11]व्यायामभीतिभिः ।
घर्महर्षज्वरग्लानिसुखलज्जादिभिर्भवेत् ॥

स्वेदापनयनेनैव व्यजनग्रहणेन च ।
तथा वाताभिलाषेण ह्यनुभावः प्रकाश्यते ॥
रोमाञ्चः क्रोधरुग्भीतिहर्षशीतादिभिर्भवेत् ।
तं चोत्सुका[12]सकृद्गात्रसंस्पर्शैः पुलकैर्वदेत्[13] ॥

स्वरभेदो गदमद[14] क्रोधहर्षभयज्वरैः ।
तस्यानुभवाः[15]कविभिर्वर्ण्यन्ते[16] गद्गदादिभिः ॥

स्थानभ्रष्टैः स्वरैर्भूयः स्खलितैर्गद्गदैरपि ।
बाष्पो जृम्भाभयक्रोधशीतैरनिमिषेक्षणैः ॥
जायते रोगशोकाभ्यां धूमाञ्जनविजृम्भणैः ।
वर्ण्यतेऽसौ मुहुर्बाष्पमोक्षणैर्नेत्रमार्जनैः ॥

---

1 A ने । 2 B सा । 3 A ना । 4 BC स्य । 5 BC प्यन्ये दृढं यथा । 6 AB सादोऽथ
7 C गदुमद। 8 AB तः । 9 B ष्प्रपञ्चो । 10 A हिक्कादितय. । 11 B भय. । 12 A चोत्सुका ।
13 C कं स्फुटेत् B कस्फुटे । 14 A श्रान्ति । 15 A वः । 16 A व्यज्यते ।

वैवर्ण्यमातपक्रोधव्याधिशीतभयक्लमैः ।
अङ्गकार्श्याङ्गसौन्दर्यविप्लवाद्यैः स वर्ण्यते ॥

कम्पो गदभयस्पर्शहर्षरोष[1]जरादिभिः ।
वेपनैः स्फुरणैः कम्पैस्स वर्ण्यः कविपुङ्गवैः ॥

प्रलयो मदनिद्रारुक्प्रहा[2]रैरुपजायते ।
स च दुःखाभिषङ्गाच्च[3] निश्चेतनतयोच्यते ॥

एते विशे[4]षतः काव्यबन्धास्तु[5] रसपोषकाः ।
निर्वेदः प्रथमं[6] ग्लानिः शङ्काऽसूया मदः[7] श्रमः ॥

आलस्यदैन्यचिन्ताश्च व्रीडा मोहः स्मृतिर्धृतिः ।
हर्षश्चपलताऽऽवेगजाड्यौत्सुक्यविषादिताः[8] ॥

गर्वोऽमर्षोऽवहित्थश्च मतिर्निद्राप्यपस्मृतिः ।
सुप्तिः प्रबोधश्चोग्रत्वं व्याधिर्मरणमेव च ॥

त्रासोन्मादवितर्काश्च [9]विज्ञेया व्यभिचारिणः ।
दारिद्र्यव्याधिदुःखेष्टवियोगप[10]रवृद्धिभिः ॥

ईर्ष्यातत्त्वावबोधाभ्यां निर्वेदो नाम जायते ।
अन्तर्बाष्पोद्गम[11]ध्याननिश्वासाश्च मुहुर्मुहुः ॥

स्वात्मा[12]वमाननं दैन्यं गद्गदत्वं विवर्णता ।
अनुभावास्तु गदिता[13] निर्वेदस्यैवमादयः ॥

स्त्रीनीचादिषु वर्ण्योऽयं रुदित[14]श्वसितादिभिः ।
[15]तत्त्वावबोधजो योगिष्वनुपादेयतां व्रजेत् ॥

ग्लानिर्विरे[16]कवमनजागरातिरताध्वभिः ।
उपवासमन[17]स्तापक्षुत्पिपासादिभिर्भवेत् ॥

कम्पानुत्साहवैवर्ण्यस्वेदमन्दपदक्रमैः ।
क्षामवाक्याक्षिसञ्चारकार्श्याङ्ग[18]श्वसनादिभिः ॥

---

1 A B ग । 2 A हारेभ्यश्च । 3 A भ्यां । 4 A निरशे । 5 A र्यवन्ध्या । 6 A प्रश । 7 C दश्रमाः । 8 B C दकाः । 9 C ते । 10 A रि । 11 C मो । 12 B र्थो । 13C कथिता । 14 A रसित । 15 A स । 16 A रेच । 17 B उरस्ता । 18 A ग्लप ।

ग्लानिजा[1]ह्यनुभा[2]वास्ते कथिता ह्येवमादयः ।
चौर्यादि[3]ग्रहपापादिकर्मक्ष्मापापराधजा ॥

शङ्का सन्देहरूपा स्यात्स्त्रीनीचप्रकृतिश्रिता ।
स्वात्मोत्था[4]च परोत्थेति सा पुनर्द्विविधा भवेत् ॥

स्वरभेदोऽश्रु वैवर्ण्यमास्यशोषोऽवकुण्ठनम् ।
पार्श्वावलोकनं जिह्वालेहनं चोरुकम्प[5]नम् ॥

आकारसंवृतिरिति भावाः शङ्कानुभावकाः ।
आत्मो[6]त्था तुपरिज्ञे[7]या दीनदृष्टिवि[8]लोकनैः ॥

परोत्था[9]त्वङ्गचेष्टाभिर्विज्ञेया भावकोविदैः ।
तारापुटभ्रूदृष्टीनां विकारानिङ्गितं विदुः ॥

आकाराः सत्त्वजा भावा इति विद्वद्भिरीरिताः ।
चेष्टाः स्युरङ्गप्रत्यङ्गजनिता[10]स्स्वनिमित्ततः ॥

परस्य [11]सौभाग्यैश्वर्यमेधालीलासमुच्छ्रयैः ।
असूया नाम सा दूरापराधान्वेषणादिभिः ॥

दोषप्रख्यापनमधोमुखता भ्रुकुटीकृतिः ।
अप्रदा[12]नं दृशोरीर्ष्यापरिवर्तितवक्त्रता ॥

[13]अवज्ञेत्यनुभावाः स्युरसूयाया[14]मुदाहृताः ।
मद्योपयोगादैश्वर्या[15]द्विद्यया चापि जन्मत ॥

उत्तमस्त्रीपरिष्वङ्गान्मदः सम्पद्यते नृणाम् ।
मद्योपयोगजस्त्रेधा तरुणो मध्यमस्तथा ॥

अपकृष्टश्च तस्यैव करणं पञ्चधा भवेत् ।
ज्येष्ठा मध्या कनिष्ठेति तस्यैव प्रकृतिस्त्रिधा ॥

अन्यदा[16]रभते वाक्यमन्यां वाचं ब्रवीति च ।
वीक्षते कं[17]चिदेकं च भुजाभ्यामवलम्बते ॥

---

1 C भ्रनु । 2 B C भाव्येत । 3 A चार्वाक । 4 BC त्मार्था च परार्थे । 5 A कुब्ज । 6 B C त्मार्था । 7 A रैज्ञें । 8 A विं । 9 B C रार्था. 10 A स्तम्नि B स्वनि । 11 A reads लीला here । 12 A घा । 13 A ज्ञत्वम । 14 A उ । 15 B र्यैविद्यया चापि । A र्यांद्विद्यासत्कुल । 16 A था । 17 B किं ।

पुरश्चालय[1]ते पादौ तिर्यक्तौ[2] निदधाति च।
आविर्भू[3]तस्वेदलेशं हर्षादुत्फुल्लमाननम्॥

अव्यक्तवर्णं वचनं मदे[4] तरुणनामनि।
स्खलद्विलम्बि[5]गमनं व्याविद्धपदसञ्चरम्[6]॥

श्लथमान[7]भुजाक्षेपः[8] शून्यालम्बनमी[9]क्षणम्।
अविभक्तपदालापो विस्मृतिश्च पदे पदे॥

आकाशलक्षं[10] वचनं तथा[11]काशावलम्बनम्।
इत्थं मध्यमदे[12] प्रोक्तमेवमा[13]दिविचेष्टितम्॥

न संज्ञां लभते गन्तुं न शक्नोति पदात्पदम्।
पर्दते छर्दते निष्ठीवति[14] श्वसिति हिक्कते॥

गुरुकण्ठ[15]ध्वनिर्नष्टस्मृति र्जर्झरभाषणम्।
एवमादिविकाराः स्युरपकृष्टम[16]दे मुहुः॥

केचित्स्वपन्ति गायन्ति केचित्केऽपि[17] हसन्ति च।
केचिद्रुदन्ति केचित्तु परुषं ब्रुवते मुहुः॥

उत्तमप्रकृतिः शेते नृत्यन् गायति मध्यमः।
अधमो रोदिति हसत्येवं प्रकृतिजा गुणाः॥

विद्याऽऽभिजात्यसम्पत्तिमदेऽनुत्तरभाषणम्।
अवज्ञागर्भि[18]तं वाक्यं सुहृदामप्यनादरः॥

एवमादिविकाराः स्युर्विद्यादिजनिते मदे।
उत्तमस्त्रीरतिमदे[19] हर्षो रागश्च चक्षुषोः॥

सौरभ्यमङ्गलावण्यमहंमतिरनादरः।
[20]एवमादिविकाराश्च कथिताः पूर्वसूरिभिः॥

---

1 B म्व। 2 B क्षौ। 3 A स्त्मि। 4 A नमेते। B नमदे। 5 B म्व्य। 6 A रः। 7 A नं। 8 A प। 9 C वी। 10 B क्ष्यं। 11 A दा। 12 B ध्यपदे C यमदे। 13 AB तदा। 14 A तिष्ठीवति च। 15 C र्णं। 16 A विष्टप। 17 A चिद्व। 18 A र्हि। 19 B C र्मन्दे। 20 A C omits this line।

व्याघूर्णमानतारं यत्क्षामोपान्तविलोचनम् ।
चक्षुर्विकसितापाङ्गं तरुणे मदिरामदे[1] ॥

आकुञ्चितोभयपुटमनवस्थिततारकम् ।
आकम्पमानपक्ष्माग्रं[2] चक्षुर्मध्य[3]मदे भवेत् ॥

निमेषोन्मेषविकृतमन्तर्दर्शिततारकम् ।
अधोऽवलोकनं चक्षुरधमे तु मदे भवेत् ॥

एवं मदविकाराश्च कथिताः पूर्वसूरिभिः[4] ।
श्रमो व्यायामनृत्ताध्वमैथुनादिनिषेवणैः ॥

अङ्गमर्दननिश्वासपादसंवाहजृम्भणैः ।
मन्दयानेन सीत्कारमुखनेत्रविकू[5]णनैः ॥

[6]एतैः श्रमस्यानुभावः कथ्यते[7] काव्यसूरिभिः ।
[8]स्वभावखेदसौहित्यव्याधिगर्भा[9]दिभिर्भवेत् ॥

आलस्यं तच्छिरश्शूल[10]जृम्भणाक्षिविमर्दनैः[11] ।
स्तम्भेन गात्रमनसो स्स्रीनीचादिषु वर्ण्यते ॥

सर्वत्र कार्यप्रद्वेषान्निद्रातन्द्रीनिषेवणात् ।
शयनासनरागेण वर्ण्योऽसावितरेषु[12] तु ॥

दैन्यमौत्सुक्यदौर्गत्यचिन्ताहृत्तापसम्भवम् ।
अनुभावः शिरश्शूलशिरोव्यावृत्तिधूननैः ॥

देहोपस्करणत्यागात् गात्रगौरवतो भवेत् ।
ऐश्वर्यभ्रंशदारिद्र्यादिष्टद्रव्यापहारतः ॥

वितर्कात्मा भवेच्चिन्ता स्मृतेरन्या प्रतीयते ।
निश्वासैश्चापि सोच्छ्वासैरधोमुखविचिन्तनैः ॥

---

1 C रुणम् । 2 A क्ष्मार्धं । 3 B द्य । 4 After this C adds स्वभावखेदसौहित्यव्याधिगर्भादिभिर्भवेत् । 5 A त्तावकू । B त्रावकुण्ठ । 6 A एवं । 7 B भावाः कथ्यन्ते । C भवाः । 8 C Omits this line । 9B दा । 10 C द्विरत्यन्य । 11 A B निमीलनैः । 12 B रेण ।

सन्तापशून्यचित्तत्वकार्श्याकाशावलोकनैः ।
एवं चिन्तानुभावास्तु कथ्य[1]न्ते काव्य[2]कोविदैः॥

अकार्यकरणाज्ञानगुर्वाज्ञादिव्यतिक्रमात् ।
अनिर्वाहात्प्रतिज्ञायास्त्यागे भूयोऽनुतापतः ॥

व्रीडा तदनुभावाः स्युरुर्वीलेखनचिन्तनम्[3] ।
मुखाव[4]नम्रताऽव्यक्तवचनं नखकर्त[5]नम् ॥

वस्त्राङ्गुलीयकस्पर्शौ दूरादेवावकुण्ठनम् ।
अनिर्गमो बहिः क्वापि सर्वत्राप्यनवस्थितिः ॥

मोहश्चित्तस्य शून्यत्वं पूर्ववैरस्मृतेर्मदात् ।
दैवोपघातान्मात्सर्यात् भयाचापि प्रहारतः ॥

आवेगात्तत्प्रतीकारविहते[6]रेवमुद्भवेत् ।
निश्चेष्टता प्रपत[7]नं वैवर्ण्यं देहघूर्णनम् ॥

सर्वेन्द्रियप्रमोहश्च निश्वासो नष्टसंज्ञता ।
मोहस्य कथिताः सद्भिरनुभावाः स्वरूपतः ॥

देशकालोपयुक्तानां सुखदुःखानुषङ्गिणाम् ।
चिरविस्मृतवस्तूनां स्मरणं स्मृतिरुच्यते ॥

दौस्स्थ्यान्निद्राक्षयाद्भ्रान्त्याः[8]प्रहरात्पश्चिमादपि ।
चिन्ताया[9] मुहुरभ्यासात्समानश्रुति[10]दर्शनात् ॥

भवेत्तदनुभावस्तु भ्रूसमुन्नमनं मुहुः ।
उद्वाहनं च शिरसः सदृश[11]स्यावलोकनम् ॥

हर्षश्च शिरसः कम्पः कथितो रसकोविदैः ।
शौर्याद्विज्ञानतः शौचाचाराच्च गुरुभक्तितः ॥

---

1 A वर्ण्य। 2 A कार्य। 3 A न्तनैः। 4 B मुखोप। 5 B कृन्त। 6 A विहारै।
7 A B तप। 8 A भ्यां। 9 A चिन्तया। 10 B श्रुत। 11 A B सादृश्य।

श्रुतप्रभा[1]वतो व्रीडान्ना[2]नार्थाप्तेर्भवेद्धृतिः ।
प्रियाप्रि[3]याविकारित्वं तदात्वोचितकारिता ॥

अप्राप्तातीतनष्टानामलाभेऽनभि[4]शोचनम् ।
हर्षो मनःप्रसादः स्यादीप्सितार्थोपसङ्गमात् ॥

इष्टसङ्गमनादे[5]वगुरुभर्तृ[6]प्रसादतः ।
[7]अभिरूपोपभोगाच्च बन्धुतृप्तेः सुभोजनात् ॥

अचिन्त्येष्टार्थसम्पत्तेर्जायते सर्वदा[8] नृणाम् ।
रोमाञ्चालिङ्गनस्वेदैः ललितै[9]ःकरताडनैः ॥

नेत्रवक्त्रप्रसादैश्च भाषितैर्मधुरैरपि ।
त्यागदानप्रबन्धैः स्युरनुभावास्तु हर्षजाः[10] ॥

चापलं [11]प्रातिकूल्येर्ष्यामत्सरद्वेषरागजम् ।
अनुभावोऽविमृश्यैव ताडनं बन्धनं वधः ॥

भर्त्सनं[12] दण्डपारुष्यमवमानादि कथ्यते ।
आवेगस्तु महोत्पातवातवर्षा[13]ग्निकुञ्जरात् ॥

प्रियाप्रियश्रुतेश्चापि व्यसनाभिहतैरपि ।
[14]उल्काशनिप्रपतन[15]चन्द्रसूर्योपरागतः ॥

केतुदर्शनभूकम्पादिभिरुत्पात उच्यते ।
स वर्णनीयो वैवर्ण्यभयविस्मयसम्भ्रमैः ॥

विषादा[16]द्वैमनस्येन सर्वाङ्गोत्कम्पनैरपि ।
त्वरितैर्गमनैर्वस्त्राच्छादनैरवकुण्ठनैः ॥

नेत्रावमर्दनैर्वातजनितं वर्णयेद् बुधः ।
छत्रादिग्रहणाच्छन्नाश्रयसर्वाङ्गपीडनैः ॥

---

1 A भान । 2 A B न्मा । 3 A याक्रि । C यप्रा । 4 B नाभि । 5 A नादे । 6 B भक्ति । 7 A अतिरूपोपभोग्यादि । 8 A था । 9 B ताः । 10 A र्षिणः । 11 A प्रतिकूले । 12 B बन्धनं । 13 C वर्षवाता । 14 A B उत्पातनिष्प्र । 15 B नात् । 16 A द्दौर्म ।

[1]आपीडधावनैर्बाहुस्वस्तिकोत्कटिकासनैः ।
शिरोऽवनमनैः शीघ्रगतैर्वर्ण्येत[2] वर्षजम् ॥

अतिक्रान्तपदैरङ्गधूननैर्व्यंजनग्रहैः ।
बाष्पजृम्भणनिश्वासैरभिनेयोऽग्निसंभवः ॥

पश्चाद्विलोकनस्तम्भभयवेपथुविस्मयैः ।
कुञ्जरभ्रमजो भा[3]व्यस्त्वरितैरपसर्पणैः ॥

[4]वस्त्राभरणदानाश्रुपुलकालिङ्गनादिभिः ।
अभ्युत्थानेन वर्ण्योऽयं प्रियश्रवणजो बुधैः ॥

विलापाक्रन्दभूपातपरिदेवितधावितैः ।
अप्रियश्रुतिजो वर्ण्यो विषमैः परिवर्तनैः ॥

गजवाजिरथारोहशस्त्रा[5]स्त्वग्रहधारणैः ।
शत्रुव्यसनजो वर्ण्यः सहसाऽपक्रमादिभिः ॥

एवमष्टविधो ज्ञेय आवेगः सम्भ्रमात्मकः ।
जाड्यमप्रतिपत्तिः स्यात्सर्वकार्येषु[6] सर्वदा ॥

प्रियाप्रियश्रुतैस्तत्तद्दर्शनैर्व्याधिभिर्भवेत् ।
सुखदुःखाविवेकित्वमिष्टानिष्टानभिज्ञता ॥

तूष्णीम्प्रतिभा चा[7]क्ष्णोरनिमेषोऽनवे[8]क्षणम् ।
अभाषणं पारवश्यमेतै जाड्यं निरूप्यते ॥

औत्सुक्यमिष्टविरहा[9]त्तदनुस्मृति[10]दर्शनात् ।
चिन्तया निद्रया शय्याऽभिलाषाद्गात्रगौरवैः ॥

वर्ण्यते सम्यगौत्सुक्यं त्वरा[11]निश्वसितादिभिः ।
कार्यानिस्तरणाद्दैवात्[12] व्यापत्तेराजदोषतः ॥

---

1 A omits this line । 2 A तु । 3B C रोद्धा । 4 B C वज्रा । 5 B स्त्वग्रहण 6 B सदा प्रिया । 7 A B च । 8 B ज्जुपे । 9 A गमा । 10 A त । 11 B चाड्ढ । 12A देव ।

चौर्यादिग्रहणाद्विघ्नाद्विषादो नाम जायते ।
ज्येष्ठमध्य[1]कनिष्ठेषु स[2]त्रिधा कथ्यते[3] बुधैः ॥
सहायान्वेषणोपायचिन्तादि ज्येष्ठतो भवेत् ।
वैमनस्यमनुत्साहो विघ्नैः शय्या च मध्यमे ॥
ध्यानश्वसितमूर्च्छादिः कनिष्ठानां निरूप्यते ।
गर्वो विद्याबलैश्वर्यवयोरूपधनादिभिः ॥
तमनुत्तरदानेन शून्यालोकैरभाषणैः[4] ।
आश्रितेष्वप्यव[5]ज्ञानाद्दोर्द्वयाङ्गावलोकनात् ॥
असूयाऽमर्षपारुष्यापहास[6]गुरुलङ्घनैः ।
अकारणादधिक्षेपाद्गात्राणां विकृ[7]तैर्वदेत् ॥
प्रतिक्रियेच्छाऽमर्षः स्याद्विद्यैश्वर्यबलाधिकैः ।
आक्षिप्तस्य सभामध्येऽवमानं गमितस्य वा ॥
शिरःप्रकंपन[8]स्वेदध्यानोपायगवेषणैः ।
उत्साहव्यवसायाद्यैर्वर्ण्योऽसौ रसकोविदैः ॥
अवहित्थं भयव्रीडा[9]धार्ष्ट्यकौटिल्यसंभवम् ।
शून्यस्मि[10]तं कथाभङ्गो मिथ्याधैर्यं तदीक्षणम् ॥
अन्तर्व्यथा[11] बहिर्गर्वभावनेत्यवहित्थजाः ।
नानाशास्त्रार्थनिष्पन्ना मतिःस्याच्छ्रुतधा[12]रिणी ॥
संशयच्छेदनैः शिष्यहिताधानार्थदर्शनैः ।
वर्ण्यते चित्त[13]सन्तोषाद्विदग्धव्यवहारतः ॥
निद्रा मदश्रमग्लानिदौर्बल्यालस्यचिन्तनैः ।
अत्याहारादनशनदुःखशोकादिभिर्भवेत् ॥

1 C ध्या । 2 C सा । 3 B थितो । 4 A B षितैः । 5 C वि । 6 B C र । 7 तैर्वं । 8 B नं । 9 A B भवेत्स्त्रायो । 10 A B स्थि । 11 B हिंता । 12 B तिधा C तसा । 13 A तन्न ।

तां गात्रगौरवैरक्ष्णोर्निमीलनविघूर्णनैः ।
निश्वासजाड्यजृम्भा[1]क्षिविमर्दैर्वर्णयेत्कविः ॥

अपस्मारो महाभूतपिशाचब्रह्मरक्षसाम्[2] ।
ग्रहणानुस्मृतेः शून्यश्मशानागारसेवनैः ॥

कालातिक्रमणाद्धातुवैषम्यादशुचित्वतः[3] ।
जायते स तु निश्वासस्तम्भस्फुरितकम्पितैः ॥

फेनवक्त्रत्वपतनजिह्वालेहनधावनैः ।
स्वेदकण्ठोद्धतारावविकटाक्षैर्निरूप्यते ॥

[4]विबोधः शब्दसंस्पर्शभीषणस्वप्नदर्शनैः ।
निद्राच्छेदात्तथा[5]हारापरिणामादिभिर्भवेत् ॥

[6]भुजाक्षेपाङ्गविस्फोटजृम्भणाक्ष्यवमर्शनैः ।
शय्यात्यागेन वर्ण्योऽयं ग्रीवाङ्गचलनादिभिः ॥

सुप्तिर्निद्रासमुत्था स्यात्तां[7]मन्दाक्षिनिमीलनैः ।
स्वप्नैरुच्छ्वासनिश्वासैरिन्द्रियास्पन्दनैरपि ॥

स्पर्शानभिज्ञताचेष्टावैधुर्याद्यैश्च वर्णयेत् ।
पुत्रमित्रकलत्रादिद्रोहादेवोग्रता भवेत् ॥

तत्रानुभावोऽतिक्रूरवधबन्धनताडनैः ।
व्याधिः स्याद्देशकालादिदोषवैषम्यसम्भवा[8] ॥

व्याधिर्ज्वरात्मा द्वे[9]धा स्यादुष्णशीतविभाग[10]तः ।
शिरःकम्पाङ्गसङ्कोचमुखशोषास्य[11]कूणनैः ॥

परिदेवितरोमाञ्चहनुसञ्चलनादिभिः ।
[12]वर्ण्यतेऽत्र सदाहस्तु[13] भूशय्यापरिदेवितैः ॥

---

1 BC कम्पा । 2 B राक्षसाः । 3 B दनिमित्ततः । 4 A प्र । 5 B C तदा ।
6 C omits six lines । 7 B तन्म । 8 A वः । 9 A रादिर्द्वै । 10 B भेद । 11 B कुण्ठ ।
12 C वने त । 13 A B हास्त्र ।

विक्षिप्तबाहुचरण[1]वस्त्रैः शीताभिलाषतः ।
शीतानुलेपनोत्क्रोशरक्तेक्षणतयोच्यते[2] ॥

[3]वर्ण्यते व्याधिसामान्यं गात्रस्तम्भास्यकूणनैः ।
श्वासश्लथाङ्गतोत्क्रोशस्रस्ताक्षस्तनितादिभिः ॥

मरणेऽभिनयो नास्तीत्येतत्का[4]व्ये न बध्यते ।
मरणं तद्द्विधा व्याधेरभिघाताच्च जायते ॥

आयुराम्नायकथितो ज्वरा[5]दिर्व्याधिरुच्यते ।
अभिघातस्तु शस्त्रास्त्राशनिपातादिरीरितः ॥

विवर्णगात्रताश्वासवेदनाक्षिनिमीलनैः ।
अव्यक्तवर्णकथनव्यायताङ्गविचेष्टितैः ॥

हिक्कापरिजनोपेक्षादिभिर्व्याधिजमुन्नयेत् ।
अनुभावास्तु बहुधा कथ्यन्ते ह्य[6]भिघातजे ॥

भूमौ विवेष्टनारावविलापभ्रमणादिभिः ।
त्रासो भवेन्निपतनाच्छिलोल्काऽशनिविद्विषाम् ॥

रक्षः[7]स्थूलपशुद्धात[8]निर्घाताम्बुधरस्वनैः ।
रोमाञ्चगद्गदस्वेदकम्पमोहादिभिर्वदेत्[9] ॥

ज्येष्ठस्याभीष्टविरहान्मध्यस्येष्टविघातनात् ।
नीचानां धननाशाद्यैरुन्मादो नाम जायते ॥

अनिमित्तस्मितोत्क्रोशगीतनृत्तविधावनैः ।
कुचेलतृणनिर्माल्यशरावादिविभूषणैः ॥

अनव[10]स्थिति[11]शय्यान्तो[12]पवेशोत्थितरोदनैः ।
असत्प्रलापस्खलितविकाराद्यैः स वर्ण्यते ॥

---

1 AB वदन। 2 B C स्रस्ताक्षस्तनितादिभिः । 3 C omits two lines । 4 B दत्र । 5 B धिर्व्या । 6 B C ह्यनुभावकैः । 7 A क्त । 8 B त्पात । 9 A B भवे । 10 B ह्युप । 11 A त । 12 A B ध्यत्व ।

वितर्कः संशयाद्दूर[1]दृष्टार्थपरिनिश्चयात् ।
विमर्शाद्विस्मृतार्थस्य स्मृते[2]रित्यादिभिर्भवेत्[3] ॥

[4]ग्रहमोक्षशिरःकम्पव्यवहारादिभिर्वदेत् ।
द्रष्टव्यं[5] तत्र तत्रैव सात्त्विक[6]व्यभिचारिणाम्[7] ॥

परस्पर[8]विभावानुभावत्वे रस[9]कोविदैः ।
अन्येऽपि यदि भावाः स्युश्चित्तवृत्तिविशेषतः ॥

अन्तर्भाव[10]स्तु सर्वेषां द्रष्टव्यो व्यभिचारिषु ।
ये भावास्तेषु भावे[11]षु प्रत्यासन्नाः परस्परम् ॥

विभावतोऽनुभावाच्च[12]स्फुटभेदा इहोदिताः ।
स्थायिष्वपीयमन्योन्यं प्रक्रिया ज्ञायतां बुधैः ॥

सभ्यात्रसयितुमभिनयचातुर्यार्थं[13]रसं च पोषयितुम् ।
कविभिर्निबन्धनीयास्ते [च] विभावादयो नियताः ॥

स्थायिषु भावेषु यदा ये च विभावादयः प्रतिनियताः[14] ।
तैरेव सति निबन्धे[15]भावविशेषः प्रतीयते तत्र ॥

यद्यन्यथा निबन्धे साधारण्येन संशयोत्पत्तेः[16] ।
दोषो विभाव्यते वा युक्त[17]विभावादिवैधुर्यात् ॥

यथाऽभिधी[18]यमानास्ते रसमाहर्तुमीशते ।
तथैवाक्षिप्यमाणास्तु रसं पुष्णन्ति नित्यशः ॥

विशे[19]षादाभिमुख्येन चरन्तो व्यभिचारिणः ।
[20]स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ[21] ॥

उन्मज्जन्तो निमज्जन्तः कल्लोलाश्च यथाऽर्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥

---

1 C रा । 2 B ति । 3 B र्वदेत् । 4 B दाहो । 5 A व्यास्त । 6 A B का । 7 A B णः । 8 A रं । 9 A वाः स्वेतर । 10 B वा । 11 B सर्वे । 12 B C भावश्च । 13 A शास्त्रोक्त । 14 A तीतियुताः । 15 C न्धैर्भा । 16 A यापत्तेः । C योपात्तैः । 17 A यंत्र । 18 AB नी । 19 A षेणा । 20 A omits four lines । 21 B धिम् ।

स्थायिन्युन्मग्ननिमग्नास्तथैव व्यभिचारिणः ।
पुष्णन्ति स्थायिनं स्वांश्च तत्र यान्ति रसात्मताम् ॥

यद्यपि स्याद्रसात्मत्वं तेषां क्वापि कदाचन ।
अस्थिरत्वादथैते[1] स्युर्नाट्याद्यनुपयोगिनः ॥

तस्माद् ष्टावितिमतं स्थायिनो नाट्यवेदिनाम् ।
विलीनसर्वव्यापारः शमः स्थायी भवेद्यतः ॥

अतोऽनुभावराहित्यान्न नाट्येऽभिनयो भवेत् ।
तस्माद्दृढ[2]प्रयोगेण रसपोषो न जायते ॥

ततोऽष्टौ[3] स्थायिनो भावा नाट्यस्यैवोपयोगिनः ।
यतः[4] स्वरूपारोपेण भावानन्यानुपस्थितान् ॥

स्वात्मन्यैक्येन गृह्णाति स स्थायी लवणोद[5]वत् ।
भावसाधारणत्वेऽपि निर्वेदाद्यैर्न शक्यते ॥

स्थायित्वमात्मनो नेतुमताद्रूप्यस्वभावतः ।
[6]यत्र क्वचित्स्यात्तत्पोषो वैरस्यायैव कल्पते ॥

अतो नाट्यविदामष्टावेवात्र स्थायिनो मताः ।
प्रकृष्यमाणो यो भावो रसतां प्रतिपद्यते ॥

स एव भावः स्थायीति भरतादिभिरुच्यते ।
के[7]चिदन्येऽपि[8] भावाश्चेत्पोषं या[9]न्ति रसात्मना ॥

तेषां विशेषो[10] विज्ञेयः स्थायिष्वेव न चान्यथा ।
भावा[11]नां कार्य[12]निष्पत्तिरनुभूतिफला[13]त्मिका ॥

तत्कार्य[14]कौशलं तत्र प्रकर्षारोपणं विदुः ।
तत्साध्योऽर्थो रसस्तेषां तदात्मा[15]पत्तिरेव सः ॥

---

1 B ताः । 2 A स्माद्दृथा B द्यथा । 3 A ऽन्ये । 4 A स्य । 5 A भवेत् । 6 A omits this line । 7 A क । 8 B वि । 9 AB षय । 10 A निवेशो । 11 A व्या । 12 A व्य । 13 A तिरसा । 14 A व्य । 15 A त्तदाप ।

विभावोऽप्यनुभावः स्यादनुभावो विभाववत् ।
तौ पुनश्चारिणः स्यातां ते च तौ स्युः परस्परम् ॥

रसभेदवशादेवमुपकार्योपकारिता ।
चरस्थिरविभागत्वमानुषङ्गिकमीरितम् ॥

५ रसोपादानता तेषां परस्तादेव वक्ष्यते ।
तद्दर्शनानि तद्दृष्टिः दृष्टिधर्माः पृथग्विधाः ॥

परस्परस्य सामर्थ्यं साहचर्यात्कचित्क्वचित् ।
रसोदयानुकूल्येन तत्र तत्रैव वक्ष्यते ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने भावनिर्णयो-
नाम प्रथमोऽधिकारः ।

॥ श्रीः ॥

# अथ द्वितीयोऽधिकारः ।

निर्वाहः कथ्यतेऽस्माभिर्भावानां व्यभिचारिणाम् ।
निर्वेदः शून्यचित्तत्वं वेदोवित्तवि[1]निर्गमात् ॥

वाङ्मनःकायकर्माणि ग्लानिर्ग्लपयतीति यत्[2] ।
असुर्याति यथाऽसूया[ न्या ]यापयेत्सूयते[3]ऽन्यथा ॥

साऽसूयेति समाख्याता सर्वत्र रसकोविदैः ।
असूया सा यया याति प्राणिनामसुरुत्थितः[4] ॥

शं सुखं कुत्सयति या सा शङ्केत्यभिधीयते ।
श्रृणा[5]ति हन्ति योऽङ्गानि स श्रमः परिकीर्तितः ॥

मश[6]ब्दार्थो मतिर्मानस्तद्दानात्खण्डनान्मदः[7] ।
यया चित्तायतेऽर्थेषु[8] सा चिन्तेत्यभिधीयते ॥

मनसो विविधः सादो विषाद इति कीर्तितः ।
वृणोति चित्तं लातीति व्रीडेति परिभाष्यते ॥

[9]वित्तेर्विलीय जातत्वाल्लज्जेति परिभाष्यते ।
ह्रियन्ते वाङ्मनःकाया इति ह्रीः परिपठ्यते ॥

मन्दमक्षाणिवा[10]र्यन्ते तानि वा[11]रयतीति वा ।
मन्दानीति[12]यदक्षाणि तन्मन्दाक्षमुदाहृतम् ॥

भूतं भवद्भविष्यच्च त्रयं पातीति सा त्रपा ।
[13]अपकृत्या यया जन्तु[14]स्त्राप्यते साह्यपत्रपा ॥

---

1 B चितवि । 2 A हि । 3 B च्छ्रापये । 4 A रर्थतः । 5 A गृण्हा । 6 A B च्छ । 7 A नामनः । 8 A यकेद्धेष । 9 C omits this line । A वृ । 10 A चा । 11 A चा । 12 A ह्रियदा । 13 A omits this line । 14 B जंय ।

विलक्षं चेष्टते चित्तं यत्तद्वैलक्ष्यमुच्यते ।
[1]या शोकहर्षयोरेकरूपा सैव धृतिर्भवेत् ॥

स्मृतिः संस्कारसहिता सत्त्व[2]स्था बुद्धिरुच्यते ।
[3]स्वं ह्यपीत इति स्वप्नः[4] स्वं प्राप्नोतीति वा भवेत् ॥

इन्द्रियाणि निमीलन्ति द्रागेव युगपद्यतः ।
तस्मान्निद्रेति कविभिः कथ्यते भावकोविदैः ॥

स प्रबोधो मनो येन सर्वानर्थान्प्रबुध्य[5]ते ।
अहेतुकश्च दण्डो यः तदौग्र्यं परिचक्षते ॥

[6]उदञ्चति मनो यस्मादुन्मादश्चित्तविप्लवः ।
कालातिपातासहत्वमौत्सुक्यं परिचक्षते ॥

हृदि दोग्धि यदिष्टार्थं तद्दौहृदमुदाहृतम् ।
अभीष्टाननुभूतार्थाभिलाषः [7]कौतुकं भवेत् ॥

कुतुकं सौख्यसंभेदः स्पृहेति परिपठ्यते ।
ऐकाग्र्यं याऽभ्नु[8]तेऽर्थेषु सैवाशेति विभाव्यते ॥

आत्मोपभोगकरणं स्पृशतीन्द्रियवर्त्मना[9] ।
या जहातीतरान् भोगान् सा स्पृहेत्यभिधीयते ॥

सैव कांक्षेति विज्ञेया सोपा[10]यार्थागमाश्रया ।
मत्तः सरत्ययं मत्तः[11] सरतीत्येष मत्सरः ॥

परापकर्षस्वो[12]त्कर्षव्यापारो मत्सरो द्वयोः ।
परस्परस्य स्वोत्कर्षो [13]घृष्यते गुणगौरवैः ॥

सम्यक्तया स सङ्घर्ष इति विद्वद्भिरुच्यते ।
सद्रूपोद्भावना माया स्वत एवासतः पुरा ॥

---

1 A यशोकहर्षयोरेका सह । 2 A साध्व । 3 A स्वप्यतेऽत । 4 B प्नं । 5 A ध्यता 6 A omits two lines । 7 B षात् । 8 A जाय । 9 A न्ति..,यमात्मना । 10 A सावा । 11 A मुक्तः । 12 B C र्षगो । 13 B घु C पु ।

अथवाऽन्यपदार्थानामन्यथाकृति[1]रेव वा ।
देशकालापरोक्ष्यं यत्परोक्षस्यैव वस्तुनः ॥

मन्त्रौषधादिभिः सोऽयमिन्द्रजाल इतीरितः ।
दिङ्निर्णयानभिज्ञत्वं दिङ्मोहः परिकीर्तितः[2] ॥

दिशो यस्यान्यथा जाताः कान्दिशीकस्स उच्यते ।
परस्य व्यसनोत्कम्पाननु या कम्पते[3] भृशम् ॥

सा चित्तवृत्तिर्विद्वद्भिरनुकम्पेति कथ्यते ।
आनृशंस्यं तदेवाहुर्यदेवाश्रितरक्षणम् ॥

परस्य दोषान्नृभ्यो यच्छंसतीति नृशंसता ।
व्यसनैः क्रोशतां पुंसां यस्य क्रोशोऽनुजायते ॥

सोऽनुक्रोश इति ज्ञेयः सुखदुःखसमत्वता[4] ।
गुणः परोपकारित्वं हितकारित्वमेववा ॥

सर्वशास्त्राधि[5]गमनं श्रुतमित्यभिधीयते[6] ।
समानि[7] खानि येन स्युः सुखदुःखानुभूतिषु ॥

तत्स[8]ख्यमिति स स्नेहः तेन यत्रायते परम् ।
तन्मित्रं तत्सुहृत्त्वं च हृदयं यत्र शोभनम् ॥

दूयन्ते खानि येनैतद्दुःखमित्यभिधीयते ।
शुभानि खानि येनै[9]तत्सुखमित्युच्यते बुधैः[10] ॥

भावेभ्यः प्रकृतेभ्योऽन्ये यतः केचिन्मयेरिताः ।
भावत्वादथवा लोके गच्छतः स्खलनं भवेत् ॥

यदिन्द्रियाणि हृष्यन्ति हर्षयन्ति परानपि ।
तस्माद्धर्ष इति ज्ञेयः प्रसादो मनसः स हि ॥

---

1 A वृत्ति । 2 B त्यंते । 3 A दनुकम्पायते । B दयया कम्पते । 4 B न्वितः । 5 B मि । 6 A omits four lines after this । 7 C सुखा । 8 C त्सौ । 9 C यत्रै । 10 A त्यभिधीयते ।

देशान्तरेऽनुभूतस्य तथा कालान्तरेऽपि च।
तद्देशादिविशिष्टस्य पुनरालोचनं स्मृतिः[1] ॥

स्मरति स्मर्यते स्मारयतीत्यस्यास्तु निर्वहः।
वित[2]र्कमनुभूतेऽर्थे धी[3]विशेषः स्मृतिर्भवेत् ॥

[4]सदसन्निश्चयकरी मननात्मा मतिर्भवेत्।
अङ्गानां यदनुल्लासस्तदालस्यमुदाहृतम् ॥

अदेशकालविहितो वेग आवेग उच्यते ।
वेगो विगा[5]नं जनयद्विग्नं[6] येन मनो भवेत् ॥

आत्मनो यो गरीयस्त्वभावो[7] गर्वः स ईरितः।
मोहश्चित्तस्य शून्यत्वं मनो येनैव मु[8]ह्यति ॥

अयोग्ये चा[9]पदार्थे च दुस्पृहा च[10]पलं भवेत्।
पलायते[11] चापदा[12]र्थे मनस्तचा[13]पलं भवेत् ॥

अपस्मारोऽनुभूतेषु पदार्थेष्वन्यथा स्मृतिः।
अय[14]था स्मृतिरेव स्यात्पदा[15]र्थास्मृतिरेव वा ॥

तर्क्यते तर्कते तर्को विचारः स्यात्सहेतुकः।
विक्रिया त्ववहित्थं[16] स्यादिङ्गिताकारगूहनम् ॥

मरणं प्रकृतिप्राणवियोग इति कथ्यते।
आयुर्वेदोपदिष्टा ये व्याधयस्ते रुजः स्मृताः ॥

चेष्टाविघातः[17] स्तम्भः स्याद्रोमाञ्चो रोमनिर्गमः।
यः स्वरो भिद्यते स्थानात्स्वरभेदः स कथ्यते ॥

वेपथुर्हृदयोत्कम्पो वैवर्ण्यं[18] भिन्नवर्णता।
[19]श्रुशब्दो मङ्गलार्थः स्यात्प्रयुक्तः शीतवारिणि ॥

---

1 B भवेत्। 2 A र्कात्मा। 3 B विधिशे। 4 A omits this line। 5 AB वेगान। 6 A घ्नं। 7 A वादो। 8 B द। 9 A वा। 10 B चा। 11 A ने। 12 A परा। 13 A सश्चा। 14 B न्य। 15 B स्यादयथा। 16A सहितंच। 17B शेषः। 18A र्ण्यो। 19C श्रृ।

उष्णाम्भसि प्रयुक्तश्चेदश्रु तत्स्यादमङ्गलम् ।
वाक्कायमनसां प्रायः प्रलयो नष्टचेष्टता ॥

एवमुक्ताश्च निर्वाहाः सात्त्विकव्यभिचारिणाम् ।
निरुक्ता योगतः केचिदुक्ताः केचिच्च रूढितः ॥

उपकार्योपकारित्वमेतेषां कथ्यतेऽधुना ।
[1]स्तम्भे वेपथुरोमाञ्चस्वेदगद्गदभाषणम् ॥

बाष्पश्च यान्ति शोभा[2]न्ते स[3]ममेकैकशोऽपि वा ।
रोमाञ्चः स्वरभेदश्च स्वेदो वेपथुरेव च ॥

क्वचि[4]त्कदाचित्संभूय[5] विभावोत्कर्षतो भवेत् ।
रोमाञ्चे वेपथुस्तम्भौ[6] प्रायः प्रविशतो[7] मुहुः ॥

स्वरभेदो[8] भवेत्स्तम्भे बाष्पोऽपि स्यात्कदाचन ।
वेपथौ[9] स्वेदरोमाञ्चबाष्पाश्च स्युः स्वभाव[10]तः ॥

वैवर्ण्येऽश्रु भवेन्नित्यं स्तम्भकम्पौ कदाचन ।
प्रलयस्तम्भकम्पाश्रुस्वेदरोमोद्गमादयः ॥

पुष्यन्त्यनुभवोत्कर्षं विभावैरपि[11] दीपिताः ।
कार्श्यजागरणालस्यसन्तापाः स्युस्ततस्ततः ॥

आविर्भावो रसानां स्यात्सात्त्विकैस्तु य[12]थोदितैः ।
ज्ञापका जा[13]यमानानामेते स्युर्व्यभिचारिणः ॥

लक्षयन्त्यनुभावास्तु वर्तमानं तदा रसम् ।
एवमेवोहनीयाः स्युर्विभावा व्यभिचारिणः ॥

एषु केचित्स्वसामर्थ्यं पुष्यन्त्यन्यश्रि[14]ता अपि ।
गुणीभूताः कदाचित्तु सामर्थ्यं प्रापयन्त्यमी ॥

---

1 C स्तम्भ । 2 A भ । 3 B श । 4 A कश्चि । 5 A त्स्तम्भोऽश्रु । 6 B C म्भः । 7 B C ते । 8 C दे । 9 A थोः । 10 A स्युः स्वविभा । B श्च स्वविभा । 11 A ति । 12 C त । 13 C ज्ञा । 14 A न्ये श्रि । B न्ये श्रु ।

एवमन्योन्यसामर्थ्यं दर्शयन्ति रसोदये।
एतेषां स्थायिभावेषु[1] कथ्यतेऽन्योन्यवर्तनम् ॥

मदः श्रमोऽवहित्थं च हर्षो गर्वः स्मृतिर्धृतिः।
असूयाग्लानिशङ्काश्च वितर्कोऽपत्रपाऽपि च ॥

रोमाञ्च[2]वेपथुस्वेदाः शृङ्गारे भोगनामनि।
मोहावेगविषादाश्च जडताव्याधिदीनता:[3] ॥

चिन्तावितर्कनिद्राश्च कार्श्यश्वासादयः परे।
स्तम्भकम्पाश्रुवैवर्ण्यगद्गदाद्या वियोगजे ॥

शङ्का त्रपा चपलता श्रमो ग्लानिरपत्रपा।
हर्षप्रबोधावहित्थस्वेदाश्रुपुलका अपि[4] ॥

हास्येऽमी वीरगा[5] भावा आवेगो हर्ष एव च।
गर्वासू[6]योग्रता स्तर्को धृतिर्बोधः स्मृतिर्मतिः ॥

मदः स्वेदश्च रोमाञ्चो दृश्यन्ते ते क्वचित्क्वचित्।
आवेगो जडतोन्मादो वितर्को मोह एव च ॥

आलस्यापस्मृती व्याधिः कार्श्यश्वासविवर्णता:[7]।
स्तम्भादयोऽष्टौ भावाः स्युः प्रायेण करुणे[8] रसे ॥

हर्षावेगोग्रतोन्मादा मदगर्वौ च चापलम्।
ईर्ष्याऽसू[9]या श्रमोऽमर्षावहित्थापत्रपा अपि ॥

निश्वासस्तम्भरोमाञ्चस्वेदा रौद्रे[10] रसे हिताः।
हर्षगर्वस्मृतिमतिश्रमा धृतिमदावपि ॥

तर्को विबोधश्चिन्ता च रोमाञ्चः स्तम्भवेपथू।
[11]स्वेदश्चेत्यद्भुते[12] भावाः कथिता नाट्यकोविदैः ॥

---

1 A तु। 2 A श्चो। 3 B C ता। 4 A C न्यपि। 5 A स्येऽमी विरहा। B C हास्यवीरभवा। 6 A स्त। 7 B C ता। 8 B C णा। 9 A स्त। 10 A द्रर। 11 A B स्तम्भ। 12 A B ता।

शङ्कानिर्वेदचिन्ताश्च जाड्यं ग्लानिश्च दीनता ।
आवेगो मद उन्मादो विषादो व्याधिरेव च ॥

चिन्ता मोहोऽपस्मृतिश्च त्रासश्चालस्यमेव च ।
मध्ये मध्ये स्तम्भकम्पौ रोमाञ्चः स्वेदवेपथू ॥

वैवर्ण्यमरण[1]त्रासगद्गदाद्या[2] भयानके ।
मोहोऽपस्मृतिरुन्मादो विषादो भयचापले ॥

आवेगो जाड्य[3]दैन्ये च मतिर्ग्लानिः श्रमोऽपि च ।
स्तम्भादयोऽष्टौ भावाः स्युर्बीभत्से प्रलयं विना ॥

साहचर्यं च सामर्थ्यं भावानां सम्यगीरितम् ।
कथ्यते स्थायिभावानां रसोपादान[4]हेतुता ॥

मनोऽनुकूलेष्वर्थेषु सुखसंवेदनात्मिका ।
इच्छा रतिः सा द्विधा स्याद्र[5]तिप्रीतिविभागतः ॥

तयोः साधारणो भेदः सप्तधा परिकीर्तितः ।
निसर्गसंसर्गोपमाभियोगा[6]ध्यात्मस्वरूपतः ॥

अभिमानाच्च विषयात्सप्तधा[7] साम्प्रयोगिकी ।
रतेरेव भवेत्प्रीते[8]रेवमाभ्यासिकी भवेत् ॥

प्रीतिः प्रि[9]यात्मा प्रायेण रतिरिच्छात्मिकैव हि ।
ज्ञानं द्विनिष्ठं तद्रूपं मनोऽधिष्ठाय वर्तते ॥

रतिः सत्त्वस्थिता सेयं विभावाद्युपबृंहिता ।
रजसाऽनुगृहीता तु स्वाद्वी[10] सर्वत्र भासते ॥

प्रीतेर्विशेषश्चित्तस्य विकासो हास[11] उच्यते ।
षोढा[12] विकल्पमायाति परिणामे रसात्मना ॥

---

1 B C मरति । 2 B C भ्यां । 3 B च्छ्वास । 4 B त्पादन । 5 A द्धू । 6 A भिधेया । 7 B वंदा । 8 B तिरेव भवेत्प्रीति । 9 B प्रतिंकि । 10 B साध्वी । 11 A भाव । 12 A तेषां ।

रजःस्थितो विभावाद्यैः बृह्मितस्तामसो भवेत्।
उत्साहः सर्वकृत्येषु सत्वरा[1] मानसी क्रिया॥
सहजाहार्यभेदेन स द्विधा परिकीर्तितः।
विस्मयश्चित्तवैचित्र्यं स त्रिधा[2] त्रिगुणात्मकः॥
तेजसो जनकः[3] क्रोधः स त्रिधा कथ्यते बुधैः।
क्रोधः कोपश्च रोषश्चेत्येष[4] भेदस्त्रिधा[5] मतः॥
सर्वेन्द्रियपरिक्लेशः शोक इत्यभिधीयते।
सत्त्वादिपरिभेदेन स त्रिधा परिपठ्यते॥
[6]निन्दाऽऽत्मा चित्तसङ्कोचो जुगुप्सेत्यभिधीयते।
द्विधा विभज्यते साऽपि परिणामे रसात्मना॥
भयं चित्तस्य चलनं तच्च प्राहुरनेकधा।
स्वरूपमेवमाचार्यैः स्थायिनां कथितं पुरा॥
विगृह्य[7] ते प्रदर्श्यन्ते प्रयोगार्थं यथोचितम्।
रम्यते रमते वेति रती रमयतीति वा॥
हास्यते हासयति[8] वा हासः स्याद्धसतीति वा।
उत्तन्द्र[9]तामभिभवत्यत उत्साहनिर्वहः॥
उत्साह्यते चोत्सहत उत्साहयति वा भवेत्।
विविधः स्यात्स्मयो हर्ष इति विस्मयतेऽथ[10] वा॥
विस्माप्यते स्वयं क[11]श्चिद्विस्मापयति वा भवेत्।
क्रुत्[12]क्रौर्यं तेन सर्वत्र धक्ष्यतीत्यस्य निर्वहः॥
क्रोध्यते क्रोधयत्येव क्रोध इ[13]त्यभिधीयते।
शुक्क्लेशः शोषणात्मैव शोच्यते शोचतीति वा॥

---

1 B वेगा। 2A त्रिधं। 3 B नं तेजसा। 4 C श्चैष। 5 त्रिविधो। 6 A omits this line। 7 B भुज्य। 8 AB तीव। 9 A उक्तं दि। 10 B तेति। 11 C स्म यान्कां 12 A क्रुद्। 13 B क्रुध्यती।

शोचयत्यपरानेवं शोकशब्दस्य निर्वहः[1] ।
सर्वेन्द्रियार्थगर्हैव जुगुप्सेत्यभिधीयते ॥

जुगुप्स्यते जुगुप्स्येत जुगुप्सापयतीति वा ।
बिभेति भापयत्यन्यान्त्रासा[2]दि भयमुच्यते ॥

एतेषां च रसात्मत्वं स्वरूपं च रसस्य च ।
रसा[3]श्रयाभिव्यक्तीनां विशेषः कथ्यतेऽधुना ॥

विभावाद्यैर्यथास्थानप्रविष्टैः स्थायिनः स्मृताः[4] ।
[5]चतुर्भिश्चाप्यभिनयैः प्रपद्यन्ते रसात्मताम्[6] ॥

विभावैश्चानुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः ॥

व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत् ।
एवं नयन्ति रसतामितरे स्थायिनं श्रिताः ॥

एवं हि नाट्यवेदेऽस्मिन् भरतेनोच्यते रसः ।
तथा भरतवृद्धेन कथितं गद्यमीदृशम् ॥

यथा नानाप्रकारैर्व्यञ्जनौषधैः पाकविशेषैश्च संस्कृतानि व्यञ्जनानि[7] मधुरादिरसानामन्यतमेनात्मना परिणमन्ति तद्भोक्तॄणां मनोभिस्तादृशा[9]त्मतया स्वाद्यन्ते तथा नानाप्रकारैर्विभावादिभावैरभिनयैः सह यथार्हमभिवर्धि[10]ताः स्थायिनो भावाः सामाजिकानां मनसि रसात्मना परिणमन्तस्तेषां तादात्विकमनोवृत्तिभेदभिन्नास्तत्तद्रूपेण तै रस्यन्ते ।

नानाद्रव्यौषधैः पाकैर्व्यञ्जनं भाव्यते यथा ।
एवं भावा भावयन्ति रसानभिनयैः सह ॥

---

1 A विग्रहः । 2 A नित्या । 3 B C पात्रा । 4 C श्रुताः । 5 C omits five lines । 6 B तः । 7 A C omits this। 8 C मात्म । 9 A स्तत्र रसा । B स्तत्रसा । 10 A र्णि ।

इति वासुकिनाप्युक्तो भावेभ्यो रससम्भवः।
तस्माद्रसास्तु भावेभ्यो निष्पद्यन्ते यथार्हतः[1] ॥

विभावैश्चानुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
वर्धिताः स्थायिनो भावा नायिका[2]दिसमाश्रयाः ॥

अनुकारतया नाट्ये क्रियमाणा नटादिभिः।
सामाजिकैस्तु रस्यन्ते यस्मात्तस्माद्रसाः स्मृताः ॥

न द्रव्यं न च सामान्यं न विशेषो गुणो न च।
न कर्म समवायो न न पदर्थान्त[3]रश्च सः ॥

विकारो मान[4]सो यस्तु बाह्यार्थालम्बनात्मकः।
विभावाद्याहितोत्कर्षो रस इत्युच्यते बुधैः ॥

रसो मनोविकारोऽपि पदार्थान्यतमो भवेत् ।
पदार्थाः षट् प्रमी[5]यन्ते रसस्यानु[6]भवात्मकाः[7] ॥

अतो रसः पदार्थेभ्यो मात्रया क्वापि भिद्यते ।
द्रव्यादीनां पदार्थानां तत्तद्रूपतया रसः[8] ॥

क्वापि क्वापि प्रकाशेन[9] तेषामन्यतमो रसः।
विभावाश्चानुभावाश्च स्थायिनो रससिद्धये ॥

कथ्यन्ते भरतोक्तेन वर्त्मना नान्यथा[10] क्वचित्।
उक्ता अपि विभावाद्याः पूर्वत्र स्वस्वरूपतः ॥

मतान्तरेण कथ्यन्ते ज्ञानं क्वा[11]प्युपयुज्यते।
विभावाश्चानुभावाश्च सात्त्विका व्यभिचारिणः ॥

स्थायिनोऽपि च कथ्यन्ते भावा इति मनीषिभिः।
यद्भावयन्ति[12] काव्या[13]र्थान् सत्त्ववागङ्गसंयुतान् ॥

---

1 B हिताः। 2 A यका। 3 B रश्च न। A रेपिवा। 4 C मन। 5 B C ती। 6 B स्स्वानु। 7 B कः। 8 A साः। 9 A शन्ते। 10 B C दरः। 11 A वा। 12 A B ति। 13 A कार्या C भावा।

तस्माद्भावा इति प्राज्ञैरुच्यन्ते नाट्यवस्तुषु ।
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ॥

कवेरन्तर्गतं भावं भावयन् भाव उच्यते ।
विभावेनाहृतो योऽर्थस्त्वनुभावेन गम्य[1]ते ॥

[2]वागङ्गसत्त्वाभिनयैः स भाव इति कीर्तितः ।
वागङ्गसत्त्वाभिनयो येनैव च विभाव्यते ॥

स भावो नाट्यतत्त्वज्ञैर्विभाव इति दर्शितः ।
निमित्तं कारणं हेतुर्विभावश्च विभावना[3] ॥

इत्थं विभावपर्यायाः कथ्यन्ते भावकोविदैः ।
विज्ञानार्थो विभावः स्याद्विज्ञानं च विभावितम् ॥

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥

वागङ्गाभिनयेनेह यस्मादर्थो[4]ऽनुभाव्यते ।
सर्वा[5]ङ्गोपाङ्गसहितः सोऽनुभावस्ततः[6] स्मृतः ॥

आविर्भूय तिरोभूय चरद्भिश्चान्तरान्तरा ।
यै रसो भिद्यतेऽनेकः ते स्मृता व्यभिचारिणः ॥

भावनामपि सर्वेषां यैः स्वसत्ता विभाव्यते ।
ते भावाः सत्त्वजन्मानः सात्त्विका इति दर्शिताः ॥

स्थिताः काव्यादिषु नटैरभिनीता यथार्हतः ।
रसात्मनाऽवतिष्ठन्ते सत्सु ये स्थायिनोऽत्र ते[7] ॥

भावाः स्युर्मानसाः केचिदाङ्गिका[8] अपि केचन ।
[9]वाचिका अपि केचित्स्युस्सात्त्विका अपि केचन ॥

---

1 A कथ्य । 2 C omits this line । 3 A नः । 4 B त्तदनु । C दर्थो वि. ।
5 A शाखा । 6 B इति । 7 C ये । 8 B उत्कर्षात्मका । 9 A omits this line

द्रव्येऽपि[1] केचिद्भावाः स्युः केचित्स्युर्गुणकर्मणोः।
एतेषु भावशब्दार्थः प्रयोजनमुदाहृतम्॥

प्रयोजनमभि[2]प्रायस्तात्पर्यं फलमित्यपि।
भाव इत्येव शब्दाः स्युर्भावपर्यायवाचकाः॥

द्रव्यक्रियागुणवचो मनोज्ञेषु मनीषिभिः।
[3]भावशब्दः प्रयुक्तस्तु भावो[4]भिप्रायवाचकः॥

एते भावा रसोत्कर्षे तत्र तत्रोपयोगिनः।
उद्दीपिता विभावैस्स्वैरनुभावैश्च पोषिताः[5]॥

भावैश्च सात्त्विकैर्योग्यसंसर्गै[6]र्व्यभिचारिभिः[7]।
चित्रिताः स्थायिनो भावा रसोपादानभूमयः॥

यदा तदैषामास्वाद्यमानरूपं यदु[8]न्मिषत्।
मनोभिः प्रेक्षकाणां तदुदेष्यति रसात्मना॥

तत्रान्तरस्य भेदा ये व्यापारस्योदिताः पृथक्।
ते सर्वे नाट्यतत्त्वज्ञैः कथ्यन्ते हि रसाह्वयाः॥

एवं रसानामुदयः सामान्येन समीरितः।
स्वभावो वाऽनुकारो वा यस्मिन्दृश्यतया स्थितः॥

रसाश्रयः स एवेति भा[9]रताः प्रतिजानते।
यशसेऽर्थाय महते[10]राज्योप[11]द्रवशान्तये॥

कर्मणां विघ्ननाशाय मङ्गलानां च सम्पदे।
उदात्तादि[12]गतान् भावान्परोक्षा[13]नपि तत्त्वतः॥

कविभिः कल्पितान्काव्ये[14]ष्वभिनेयान्विचक्षणैः।
प्रत्यक्षवत्[15] सदस्येभ्यो नटा यदनुकुर्वते॥

---

1 C षु। 2 A मिति। 3 A प्राय। 4 A प्रायो। 5 B योषिताम्। 6 A योग्यसंसर्गे। 7 A रिणः। 8 C समु। 9 C भ। 10 C से। 11 A जोप। 12 B मि। 13 B स्था। 14 C न्भोगे। 15 A तः।

तस्मान्नटेषु न क्वापि रसस्याश्रयता भवेत् ।
मनसो ह्लादजननः स्वादो रस इति स्मृतः ॥

शृङ्गारस्य स युज्येत तस्य ह्लादात्मकत्वतः ।
अन्येषां रसता प्रायः सिद्धा[1] केनापि हेतुना ॥

यथा नृणां तु सर्वेषां सर्वेऽपि मधुरादयः ।
भुक्ता रसात्मतां यान्ति देशकालादिभेदतः ॥

तथा जाता जनिष्यन्तो जायमानाः परस्परम् ।
परस्परस्य सर्वत्र मित्रोदासीनशत्रवः ॥

तेषु कस्यापि शृङ्गारो हास्यः कस्यचिदेव सः[3] ।
अद्भुतस्स च कस्यापि कस्यापि करुणो भवेत् ॥

एवं सङ्करतोऽन्योन्यं देशकालगुणादिभिः ।
शृङ्गाराद्याः सदस्यानां भवन्ति ह्लादना यतः ॥

तस्मात्सामाजिकैः स्वाद्या रसवाच्या भवन्ति ते ।
प्रकृतीनां च भिन्नत्वादवस्थादिविभेद[4]तः ॥

मनसः[5] क्षणिकत्वाच्च तानेकः स्वदते यतः ।
ततोऽपि रसवाच्याः स्युरित्याचार्या[6] व्यवस्थिताः ॥

एके[7] रसानां व्यङ्ग्यत्वं वाच्यत्वं केचिदूचिरे ।
प्रत्याय्यत्वं वदन्त्यन्ये गम्यत्वमपि केचन ॥

तथा[8]ऽवान्तरवाक्यार्थं महावाक्यार्थतां परे ।
एवं न्यायो न भिद्येत क्वापि क्वपि प्रकाशतः ॥

रामादावनुकार्ये तु नटैर्व्यङ्ग्यो भविष्यति ।
तत्तत्काव्य[9]निबद्धस्तु वाक्यार्थः स[10] भविष्यति ॥

---

1 C स्थिता । 2 C उक्ता । 3 B सन् । 4 A शेष । 5 B सां । 6 BC र्यै । 7 C ते । 8 A B तद । 9 B र्थे । 10 B C र्थस्य ।

[1]नामादितादात्म्यापत्तेर्नटे प्रत्याय्य एव सः ।
एवमेवोह्य एव स्यात्तत्र तत्र विचक्षणैः ॥

तद्वान्तरवाक्यार्थौ महावाक्यार्थ एव च ।
मुक्तकादौ प्रबन्धे च स्थायिसञ्चारिभेदतः ॥

प्रमदाद्यनुभावेन भावितो वासितो रसः ।
तत्तद्रूपस्याभिनयैः सभ्येषु व्यज्यते स्फुटम् ॥

संवित्प्रकाशानन्दात्मा गम्यः स्यात्स्वानुभूतितः ।
अहङ्काराभिमानात्मा बाह्यार्थेषु प्रकाशते ॥

अहङ्काराभिमानादिस्वरूपं कथ्यतेऽधुना ।
परस्मादात्मनो भान्ति ज्ञा[2]नानन्दक्रियाप्रभाः ॥

ज्ञानप्रभासाश्चैतन्यमणेर्जीवस्य सर्वतः ।
शरीरव्यापिनी तत्र व्यापना भवति स्फुटम् ॥

सैषा परात्मनः सर्ववस्तूत्था चेतना भवेत् ।
तथाऽऽनन्दप्रभासाऽपि पुरुषेषु समन्ततः ॥

अभिव्यक्ता सती तेषां सुखं वैषयिकं भवेत् ।
क्रियाप्रभा भवेत्प्राणः स देहेषु प्रवर्तते ॥

परमात्मा सर्ववस्तुपरिस्पन्दप्रवर्तकः ।
ज्ञानप्रभा च सानन्दा तस्याः सत्त्वं प्रजायते ॥

क्रियाप्रभा रजस्सत्त्वाच्छक्तिः स्यादुत्तमा[3] प्रसूः ।
मनोमयाद्यस्तासामधिष्ठातार ईरिताः ॥

पृथक्कदाचित्तिष्ठन्ति मिलितानि कदाचन ।
सत्त्वं विशालं तस्यान्तरुदरे रजसः स्थितिः ॥

---

1 A omits twenty three lines । 2 B भान्तिज्ञो । 3 C म ।

तस्यान्तरुदरे तस्य तमसःस्थितिरुच्यते ।
आत्मा तस्यान्तरुदरे मनसः स्थितिरुच्यते ॥

मिलितानीति जानन्ति नैरन्तर्यात्परे[1] पुनः ।
सत्त्वं मध्येऽभित[2]स्तस्य रजस्तम इतीर्यते ॥

तन्मात्रैः सह भूतानि दश ज्ञानेन्द्रियाणि च ।
कर्मेन्द्रियैः सह दश मनस्तदुभयात्मकम् ॥

अहङ्कारेण युक्तानां तन्मात्राणां[3] यथाक्रमम् ।
दशेन्द्रियाणि कथ्यन्ते तेषां विकृतयस्त्विति ॥

अहङ्कारस्य चैकस्य विकृतिर्मन उच्यते ।
प्रकृतेर्विकृतिः सोऽपि महान् सा च[4] त्रिधा भवेत् ॥

सात्त्विकी राजसी चैव तामसी चेति सात्त्विकी ।
निश्चिन्वतीति विषयान्बुद्धिरित्युच्यते बुधैः ॥

स्वांशैः[5] सह युता[6] सर्वजीवानामुपकारिका ।
अंशाः स्युर्व्य[7]ष्टयस्तस्या[8] विज्ञानेन्द्रियपञ्चकम् ॥

साहायकं[9] भवेत्तद्वद्विषयालोचनादिषु ।
मनश्चोपकरोत्यस्याः सङ्कल्पेन ततस्ततः ॥

अपरोक्षावभासो यः तदालोचनमुच्यते ।
यः परोक्षावभासस्तु स सङ्कल्प इतीरितः ॥

अहङ्कारोऽभिमा[10]नेन बुद्धेरुपकरोति यः[11] ।
ज्ञातुर्ज्ञेयेन संबद्धो देशकालनिबन्धनः ॥

यो ममेति ग्रहः सोऽयमभिमान इतीरितः ।
क्रियाया हेतुभूतत्वाद्राजसी प्राण उच्यते ॥

---

1 A रैः । 2 B तत्वमस्माभित । 3 B त्रेण । 4 A सोऽपि । 5 A स्वाङ्गैः । 6 B सैकासती । 7 A विं । 8 A B स्यं । 9 A B ध्यकं । 10 B पिमा । 11 C हि ।

स्वांशै[1]रुपकरोत्येव भूतानामाशयस्थितः[2] ।
कर्मेन्द्रियाणि विषयैः स्वैस्स्वैस्तस्यो[3]पकुर्वते ॥

मनश्च कुर्यामित्यादि[4]सङ्कल्पेनोपकारकम्[5] ।
तामसी सृष्ट्यवस्थायां सततं परिणामतः ॥

कालो भवति तस्यैव परिणामाः क्षणादयः ।
तेनैव सर्वभूतानां परिणामः प्रवर्तते ॥

[6]स कालः स्पन्दरूपेण पदार्थान्परिणामयन् ।
अनुगृह्णाति वेत्तारं वित्तिं वेद्य[7]ञ्च तत्त्वतः ॥

अहङ्कारस्त्रिधा सोऽयं सत्त्वादिगुणभेदतः ।
सत्त्वादिगुणभेदेन योऽह[8]ङ्कारस्तु सात्त्विकः ॥

वैकारिकश्चेन्द्रियादिरिन्द्रियप्रकृतिर्भवेत् ।
[9]भूतादिस्तामसः शब्दतन्मात्रप्रकृतिर्भवेत् ॥

राजसस्तैजसः[10] सोऽपि द्वयोरुप[11]करोति हि[12] ।
अहङ्कारस्य वृत्तिर्या सोऽभिमानः प्रकीर्तितः ॥

साऽभिमानात्मिका वृत्तिस्तत्तदिन्द्रियगोचरा ।
बाह्यार्थालम्बनवती शृङ्गारादिरसात्मताम् ॥

याति तत्र विभावादिभेदाद्भेदं प्रयाति च ।
विभावा ललिताः सत्त्वानुभावव्यभिचारिभिः[13] ॥

यदा स्थायिनि वर्तन्ते स्वीयाभिनयसंश्रयाः ।
तदा मनः[14] प्रेक्षकाणां रजस्सत्त्वव्यपाश्रयि[15] ॥

सुखानुबन्धी तत्रत्यो विकारो यः प्रवर्तते ।
स शृङ्गाररसाभिख्यां[16] लभते रस्यते च तैः ॥

---

1 B स्वाङ्गै । 2 B ताः । 3 A स्तस्यैवो । 4 A B मित्येव । 5 B कः । 6 C omits two lines । 7 B विवेकाद्यं । 8 A सोऽहं । 9 C omits this line । 10 A स्तयुजः । 11 A द्वयरूपं । 12 A यः । 13 A णः । 14 B स्तनः । 15 A था । 16 A ख्यान्तु ।

यदा तु ललिताभासा भावैः स्वोत्कर्षहेतुभिः ।
सत्त्वादिभिश्चाभिनयैः स्थायिनं वर्धयन्ति ते ॥

तदा मनः[1] प्रेक्षकाणां रजस्स्पृष्टं तमोऽन्वयि[2] ।
चैतन्याश्रयि तत्रत्यो विकारो यः प्रवर्तते ॥

[3]स हास्यरस इत्याख्यां लभते रस्यते च तैः ।
स्थिरा विभावास्तु यदा स्वयोग्यैः सात्त्विकादिभिः ॥

भावैः स्थायिनि वर्तन्ते स्वीयाभिनयसंश्रयाः ।
तदा मनः प्रेक्षकाणां सत्त्ववृत्ति रजोऽन्वयि ॥

साभिमानश्च तत्रत्यो विकारो यः प्रवर्तते ।
स वीररसनामा स्याद्रस्यते च स तैरपि ॥

यदा चित्रा विभावास्तु भावैः सत्त्वादिभिः सह ।
स्वाश्रयाभिनयैर्युक्ता वर्तन्ते स्थायिनि स्वके ॥

तदा मनः[4] प्रेक्षकाणां रजस्सत्त्वोज्ज्वलं भवेत् ।
बुद्धियुक्तश्च तत्रत्यो विकारो यः प्रवर्तते ॥

स चाद्भुतरसाख्यां तु लभते रस्यते च तैः ।
खरा[5] विभावास्तु यदा स्वानुकूलैः सहेतरैः ॥

स्थायिनि[6] स्वे प्रवर्तन्ते स्वीयाभिनयसंश्रयाः ।
तदा मनः[7] प्रेक्षकाणां रजसा तमसाऽन्वितम् ॥

साहङ्कारं च तत्रत्यो विकारो यः प्रवर्तते ।
स रौद्ररसनामा स्याद्रस्यते च स तैरपि ॥

यदा रूक्षा विभावास्तु स्वेतरैः सानुगैः सह ।
स्वीये स्थायिनि वर्तन्ते नाट्याभिनयसंश्रयाः ॥

1 A त्मनः । 2 B सत्त्ववृत्तिरजोन्वयि । 3 C omits six lines । 4 B त्मनः । 5 A मृदा । B परा । 6 A तः । 7 B त्मनः ।

तदा मन[1]स्तमोरूढं चिन्ताव[2]स्थं जडात्मकम्।
सदन्वयी[3] च तत्रत्यो विकारो यः प्रवर्तते ॥

प्राप्नोति सोऽपि करुणरसतां[4] रस्यते च तैः।
निन्दिता ये विभावाः स्युः स्वैतरैः सहकारिभिः ॥

यदा स्थायिनि वर्तन्ते तैस्तैरभिनयैः सह।
तदा मनः[5] प्रेक्षकाणां बुद्ध्यवस्थमसत्त्वयुक् ॥

चिद्[6]न्वयी च तत्रत्यो विकारो यः प्रवर्तते।
स बीभत्सरसाख्यां तु लभते रस्यते च तैः ॥

[7]यदा तु विकृता[8] भावाः स्वोचितैः सहकारिभिः।
स्थायिन्यभिनयोपेता वर्तन्ते नाट्यकर्मणि ॥

तदा मनः प्रेक्षकाणां चित्तावस्थं तमोऽन्वयि।
सत्त्वान्वितं च तत्रत्यो विकारो यः प्रवर्तते ॥

भयानकरसाख्यां तु लभते रस्यते च तैः।
ईदृशी च रसोत्पत्तिः मनोवृत्तिश्च शाश्वती ॥

कथिता योगमालायां संहितायां विवस्वते।
शिवेन ताण्डवं लास्यं नाट्यं नृत्तं च नर्तनम्[9] ॥

सर्वमेतदशेषेण संहितायां प्रदर्शितम्।
उद्धतैः[10] करणैरङ्गहारैर्निर्वर्ति[11]तं यदा ॥

वृत्तिरारभटी गीतकाले[12] तत्ताण्डवं विदुः।
चण्डोचण्डप्रचण्डादिभेदात्तत्ताण्डवं त्रिधा ॥

अनुद्धतं चोद्धतं च तथात्युद्धतमित्यपि।
तत्तत्ताण्डवभेदस्तु परस्तादेव वक्ष्यते ॥

1 B त्मनः। 2 B त्ताव। 3 A सम ( शमा ?) न्वयि। 4 A B साख्यां। 5 B त्मनः। 6 A विद। 7 A omits five lines। 8 B तता। 9 C कृतं नाट्यं च नर्तनम्। 10 A दात्तैः। 11 A र्णि। 12 A तले।

ललितैरङ्गहारैश्च निर्वर्त्यं[1] ललितैर्ल[2]यैः ।
वृत्तिः स्यात्कैशिकी गीते यत्र तल्लास्यमुच्यते ॥

एतदेव तु चारीभिर्मूर्द्धीभिर्गीतिरीतिभिः ।
तत्तद्देशीगुणोत्था[3]भिर्हेलाद्यैर्भावदृष्टिभिः ॥

तत्तत्पातगुणोत्थाङ्गचतुष्षष्ट्यङ्गबन्धुर[4]म् ।
पुष्पाञ्जलिर्हि घोण्डादि[5] देशीवाद्य[6]लयान्वितम् ॥

शुद्धसालगसूडादिगीताभिनयमन्थरम् ।
रुच्या प्रवर्तितं देशे राजभिः गुण्डलीं[7] विदुः ॥

गीतादौ कैशिकीवृत्तिबहुलं भावमन्थरम् ।
सुकुमारप्रयोगं यत्तल्लास्यं मन्मथाश्रयम् ॥

लस्[8]संश्लेषण इत्यस्य धातोर्लास्यस्य निर्वहः ।
संश्लेषादङ्गहाराणामङ्गै[9]र्लास्यं प्रचक्षते ॥

तण्डूक्त[10]मुद्धतप्राय[11]प्रयोगं ताण्डवं विदुः ।
नाटकस्थितवाक्यार्थपदार्थाभिनयात्मकम् ॥

नटकर्मैव नाट्यं स्यादिति नाट्यविदां मतम् ।
करणैरङ्गहारैश्च निर्वृत्तं नृत्त[12]मुच्यते ॥

वृत्तिभिः सहितं गीतं[13] तथा वाद्यादिभि[14]र्युतम् ।
नर्तनं गात्रविक्षेपमात्रमित्युच्यते बुधैः ॥

एतन्नाट्ये च नृत्ते च लास्यताण्डवयोरपि ।
गु[15]ण्डल्यादिषु सर्वत्र साधारण्येन वर्तते ॥

[16]यतोऽष्टधा मनोवृत्तिः सभ्यानां नाट्यकर्मणि ।
अष्टावेवानुभूयन्ते तासूडा [क्ता]स्तै रसाः पृथक् ॥

---

1 B र्त्यां । 2 B ताल । 3 A शगुणोक्ता । 4 A ष्ट्यागमन्थर । 5 A रिवास्यापि । 6 B द्यां । 7 A B मिर्गुण्डलं । 8 A लिङ् । 9 A ङ्गला । 10 B स्थ । 11 C यं । 12 A तव । 13 A हीनं । 14 A वाक्यमिति । 15 A B कु । 16 A Omits four lines

केचिन्नवात्मिकामाहुर्मनोवृत्तिं विचक्षणाः ।
ततश्शान्तो रसो नाट्येऽप्यस्तीति प्रतिजानते ॥

नाटकादिनिबन्धे तु तपश्चरणवस्तुनि ।
अभिनेतुमशक्यत्वात्तद्वाक्यार्थपदार्थयोः ॥

सामाजिकानां मनसि रसः शान्तो न जायते ।
शमस्स्थायी विभावाद्यैर्यथास्थाननिवेशि[1]तैः ॥

[2]वर्धितश्चेद्रसः शान्तोऽप्यस्तीत्युद्भाव्यते क्वचित् ।
अस्य सर्वविकाराणां शून्यत्वात्तु रसात्मना ॥

परिणेतुं न शक्नोति तस्माच्छान्तस्य नोद्भवः ।
तस्मान्नाट्यरसा[3] अष्टाविति पद्मभुवो मतम् ॥

उत्पत्तिस्तु रसानां या पुरा वासुकिनोदिता ।
नारदस्योच्यते सैषा प्रकारान्तरकल्पिता ॥

बाह्यार्थालम्बनवतो मनसो रजसि स्थितात् ।
साहङ्काराद्विकारो यः स शृङ्गार इतीरितः ॥

तस्मादेव रजो[4]हीनात्स[5]सत्त्वाद्धा[6]स्यसंभवः ।
अहङ्काररजःसत्त्वयुक्ताद्बाह्यार्थसंगतात् ॥

मनसो यो विकारस्तु स वीर इति कथ्यते ।
तस्मादेवाद्भुतो जातो रजो[7]ऽहङ्कारवर्जितात् ॥

रजस्तमोऽहङ्कृतिभिः युताद्बाह्यार्थसंश्रयात् ।
मनसो यो विकारस्तु स रौद्र इति कथ्यते ॥

करुणस्तत एव स्याद्रजोऽहङ्कारवर्जितात् ।
चित्तावस्थात्तु मनसो बाह्यार्थालम्बनात्मनः ॥

---

1 A विशेषि। 2 A वृद्धि। 3A स्त्व। 4 A सो। 5 B त्त्वस। 6 A ह्लास्य। 7 B सो।

तमःसत्त्वयुताज्जातो बीभत्स इति कथ्यते ।
सत्त्वबुद्धिविहीनात्तु मनसस्तमसाऽन्वितात् ॥

बाह्यादेव समुत्पन्नो भयानक इतीरितः ।
रजस्तमोविहीनात्तु सत्त्वावस्थात्सचित्ततः ॥

मनागस्पृष्ट[1]बाह्यार्थात् शान्तो रस इतीरितः ।
देशकालवयोद्रव्यगुणप्रकृतिकर्मणाम् ॥

भावानामुत्तमं यत्तु तच्छृङ्गं[2] श्रेष्ठमुच्यते ।
[3]इयन्ति शृङ्गं यस्मात्तु तस्माच्छृङ्गार उच्यते ॥

अप्प्र[4]त्ययान्तः शब्दोऽयं हस इत्यभिधीयते ।
घञन्तो हासशब्दस्तु द्वयोः प्रत्यययोरपि ॥

[5]अत्र स्वनहसोर्वेति विकल्पेन विधानतः ।
हास्यतेऽसाविति यतस्तस्माद्धास्यस्य[6] निर्वहः ॥

विकृताङ्गवयोद्रव्यभाषालङ्कारकर्मभिः ।
जनान्हासयतीत्येवं तस्माद्धास्यः प्रकीर्तितः ॥

रा दान इति यो धातुर्वा........दे च वर्तते ।
ला दान इत्ययं धातुर्ज्ञानखण्डनयोरपि ॥

रलयोरविशेषोऽपि कथितः शब्दवादिभिः ।
विरुद्धान्नाति हन्तीति वीरशब्दस्य निर्वहः ॥

विवि[7]धं च विचित्रं[8] च लाति जानाति कृन्तति ।
एवं वा वीरशब्दार्थः कथितः पूर्वसूरिभिः ॥

प्रेरयत्यत्र विद्विष्टानिति वीरो निरुच्यते ।
अथ वैचित्र्य (?) इत्यस्य धातोरद्भुतनिर्वहः ॥

---

1 AB नस्संसृष्ट। 2 BC तत्तुङ्गं। 3 C omits this line। 4 A अप्र। 5 A omits six lines। 6 B सस्य। 7 B विहि। 8 A स्वं।

विचित्रा यस्य भवति चित्तवृत्तिस्ततोऽद्भुतः ।
रुद्रो हस्तं[1] ददातीति रौद्र[2]शब्दो निरुच्यते ॥

तत्कर्मकर्तृताहेतुर्यस्स रौद्रः प्रकीर्तितः ।
यत्कर्म रोदयत्यन्यान् स रौद्र इति वा भवेत् ॥

घृणिधातुर्दयादानग्रहणेषु च[3] वर्तते ।
गृह्णाति[4] दत्ते दयत इति कर्म घृणेरितम्[5] ॥

अस्य कर्तृतया धीर्या सा घृणेत्युच्यते बुधैः ।
घृणेः करुणशब्दस्तु विहितः शब्दवादिभिः ॥

[6]अतो नैघण्टुकैरुक्ता घृणेति करुणेति च ।
करुः क्लेश इति ख्यातः क्लेशं न सहते यतः ॥

यस्य धीः करुणा सा स्यात्प्रत्यये करुणो भवेत् ।
परा[7]श्रितानां क्लेशानामसहिष्णुतयोच्यते ॥

मनसो यादृशो भावः स वै करुण उच्यते ।
बधेर्धातोस्सन[8]न्तस्य बीभत्सा[9] रूपमिष्यते ॥

यत्पदार्थस्य बीभत्सा स बीभत्स इतीरितः ।
गर्हा निन्दा च बीभत्सा कुत्सा पर्यायवाचकाः ॥

गर्हणीयश्च निन्द्यश्च कुत्सनीयश्च यो भवेत् ।
स भावः कथ्यते सद्भिर्बीभत्स इति संज्ञया ॥

ञि[10]भीभय इति प्रायो धातुः स्याद्भयवा[11]चकः ।
चल[12]नं भयशब्दार्थ इति विद्वद्भिरुच्यते ॥

बिभेति भाययत्यन्यान्कर्मणे[13]ति यथाक्रमम् ।
कश्चिच्च[14]लति कस्माचिद्भावात्तेनैव[15] हेतुना ॥

---

1 A तद्दोहस्तु । 2 A रुद्र । 3 A हेष्वपि च । 4 B घृणाति । 5 A रिदम् । 6A omits this line । 7 B पुरा । 8 A स्तन । 9 A B त्सं । 10 A यान्तीति । 11 B द्भावंवा । 12 A वच । 13 A भावयत्यस्मात्कर्मे । 14 A कंचित्कं । 15 A B द्भयात्तेनैव ।

चाल्यते च यतस्तस्माद्भयं तु चलनात्मकम् ।
भयेनाक्रोशतो[1] जन्तोर्जायते स भयानकः ॥

आभ्यन्तराश्च बाह्याश्च विकारा यत्र संयुताः[2] ।
यस्य भावस्य शाम्यन्ति स शान्त इति कथ्यते ॥

अर्थतश्च निरुच्यन्ते शब्दाः केचिच्च धातुतः ।
वचनाच्च निरुच्यन्ते शब्दाः केचिच्च योग[3]तः ॥

अप्यक्षराणां[4] सामान्यान्निरुच्यन्ते च केचन ।
एवं निरुक्तकारैस्तु स्वशास्त्रे निर्णयः कृतः ॥

अत्राप्येते[5] रसा[6]स्सर्वे शृङ्गाराद्या यथार्थतः ।
निरुक्तकारैर्निर्णीता[7] मया सम्यक्प्रदर्शिताः ॥

रामाद्यारोपणात्मा धीः प्रेक्षकाणां नटादिषु ।
जायते याऽत्र[8] विद्वद्भिर्बहुधा सा विविच्यते ॥

रामोऽयमयमेवेति येयं प्रेक्षकधीर्नटे[9] ।
अनुकार्येऽपि[10] रामादौ सा सम्यगिति[11] कथ्यते ॥

अयं स ने ति मिथ्यैव बोधा[12]दौत्तरकालिकात् ।
अयं रामो न वेत्येषा मतिः स्यात्संशयात्मिका ॥

अयं रामस्य सदृश इति सादृश्यधीरियम् ।
एवं नटे प्रेक्षकस्य बहुधा धीर्विकल्प्यते ॥

सेयं[13] न सम्यङ्नो मिथ्या न संशयमतिर्भवेत् ।
न च सादृश्यधीराभ्यः प्रतीतिभ्यो विलक्षणा ॥

चित्रे तुरग[14]बुद्ध्यादिन्यायेनैव नटादिषु ।
धिया काव्या[15]नुसन्धानबलाच्छिक्षावशादपि ॥

---

1 A B कारतो । 2 B यताः । C गता । 3 C रूप । 4 A B क्षस्थेय । 5 B त्रोच्यन्ते । 6 A रह । 7 A नास्तिति । 8 B C यत्र । 9 A र्भवेत् । 10 A C तु । 11 A ग्गीर्वि । 12 A बाधा । 13 C नेयम् । 14 B C ज्ञ । 15 A याँ ।

निर्वर्तितस्वकार्यादिप्राकट्येन प्रकाश्यते ।
कृत्रिमैरपि सत्यत्वाभिमानकलुषीकृतैः ॥

व्यपदेश्यैर्विभावादिशब्दैः[1] संयोगरूपिणा ।
स गम्यगमकत्वेन क्वचिदप्यनुमीयते ॥

वस्तुसौन्दर्यतः सोऽपि रसनीयत्वमेष्यति ।
अन्यानुमीयमानेन स्थायित्वेन विभावितः ॥

अत्रासन्नपि रत्या[2]दिः स्वाद्यते तैः रसात्मना ।
एवं केचिद्वदन्त्येतां नटे रामादिशेमुषीम् ॥

नैवमित्येव भरता नाट्यवेदार्थवेदिनः ।
रामादिबुद्धिर्या नाट्ये प्रेक्षकाणां नटादिषु ॥

सेयं न संशयमतिर्न विपर्यासधीरपि ।
नैव[3] सादृश्यधीरेषा न चित्रतुरगात्मिका ॥

न संशयस्य शङ्का स्याद्देशकालादिभेदतः ।
न विपर्यासधीः सा स्याद्बाधादौत्तरकालिकात् ॥

काव्या[4]द्युपनिबद्धस्य रामादेश्च नटस्य च ।
सादृश्यधीहेत्वभावा[5]न्न च सादृश्यधीर्भवेत् ॥

चित्रे लिखितवस्तूनां मन्यन्ते कृत्रिमात्मताम्[6] ।
सर्वेऽपि यत्तत[7]श्चित्रतुरगात्मा न धीर्भवेत् ॥

नटादेश्चेतनत्वेन चित्रस्याचेतनत्वतः ।
तस्मात्कदाचन क्वापि न चित्रादिमतिर्भवेत् ॥

यदा ह्यर्थक्रियाकर्मसमर्था रामधीर्नटे ।
तदानीं बाधकाभावात्तस्य सम्यक्त्वमुच्यते ॥

---

1 A ब्दः । 2 B C अतान्तःपुरतन्त्वा । 3 A B सैव । 4 A र्याद्यु । 5 B हेतुभावा ।
6 A मात्म् । 7 B C त्मत ।

प्रेक्षकास्तद्रसाविष्टा नटे सम्यक्प्रयोक्तरि ।
यत्ततोऽर्थक्रियाकर्मसमर्था रामधीर्नटे ॥

एवं रसानामुदयः स्वरूपाश्रयबुद्धितः ।
दर्शितो[1] भरतप्रोक्त[2]ः तस्य वृत्ति[3]र्निरूप्यते ॥

न त[4]टस्थतया नात्मगतत्वेन प्रतीयते ।
[5]न चाभिधीयते क्वापि नो[6]त्पद्येत कदाचन ॥

तादात्वि[7]केन प्रमदाद्यनुभावेन वासितः ।
स्वादः[8] सहृदयानां यो ह्लादात्मा हृदयङ्गमः ॥

स भावाभिनयात्साधारणीकरणरूपया ।
भावकत्वव्याप्रियया भाव्यमानः स्वभाववत् ॥

भोगेन संवि[9]दानन्दमयेनैवोपभुज्यते ।
भोक्तृभोग्यार्थसंबन्धप्रकारश्चाभिधीयते ॥

राग[10]विद्याकलासंज्ञैः[11] पुंसस्तत्त्वैस्त्रिभिः स्वतः[12] ।
प्रवृत्तिर्गोचरोत्पन्ना बुद्ध्यादिकरणैरसौ[13] ॥

भोगं निष्पाद्य[14] निष्पाद्य वासनात्मैव तिष्ठति ।
दुःखमोहा[15]दिकलुषमपि भोग्यं प्रतीयते ॥

यत्सुखत्वाभिमानेन स राग इति कथ्यते ।
विद्या नामेति तत्त्वं यद्रागोपादानमुच्यते ॥

तयाऽभिव्यज्यते ज्ञानं पुरुषस्य विपश्चितः ।
चैतन्यस्य मलेनैव संरूढस्य स्वभावतः ॥

अभिज्वलनहेतुर्या सा कलेत्यभिधीयते ।
सुखदुःखात्मिका बुद्धेर्वृत्ति[16]र्गोचर उच्यते ॥

---

1 B C ता । 2 A क्ता । 3 A B व्यक्ति । 4 A B न । 5 A omits this line । 6 C त्पा । 7 A दार्थे C तदात्म । 8 A B स्वतः । 9 A विभागे सत्त्वि । 10 B रङ्ग । 11 A B सञ्ज्ञैः । 12 A स्ततः । 13 B रुणे रसे C रणे रसे । 14 B C व्यानुमेय । 15 B C भोगा । 16 C व्यक्ति ।

एवं परम्पराप्राप्तैर्भावैर्विषयतां गतैः।
बुध्यादिकरणैर्भोगा[1]ननुभुङ्क्ते रसात्मना॥

शिवागमज्ञैरर्थोऽयमेवमुक्तः पुरातनैः।
क[2]लोत्कलितचैतन्यो विद्यादर्शितगोचरः॥

रागेण रञ्जितश्चायं बुध्यादिकरणैर्युतः।
मायाद्यवनिपर्यन्तं तत्त्वभूतात्मनि[3] स्थितम्॥

भुङ्क्ते तत्र स्थितो भोगान् भोगैकरसिकः पुमान्।
प्रेरकत्वेन बुध्यादिकरणानां पुनः पुनः॥

उपकुर्वन्ति सत्त्वादिगुणास्ते तत्र तत्र तु॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
रसस्वरूपाश्रयवृत्ति[4]निर्णयो
नाम द्वितीयोऽधिकारः॥

---

1 A र्भोगा। 2 A B कालो। 3 A त्मसं। 4 A स्वस्वरूपाश्रयाभिव्यक्ति।

॥ श्रीः ॥

# अथ तृतीयोऽधिकारः ।



कथिताः स्थायिनस्तेषु विभावादिसहायता ।
तेषां रसात्मता[1] तादृक्स्वरूपं तद्रसस्य च[2] ॥

तद्भेदास्तन्निरुक्तिश्च तद्विभावादिभाव्यता ।
तदुत्पत्तिप्रकाराश्च तज्ज्ञानं च तदाश्रयः ॥

तद्भोग्य[3]ता तत्करणं[4] संबन्धो भोक्तृभोग्ययोः ।
इदानीं कथ्यतेऽस्माभिः प्रकारान्तरकल्पितः ॥

उत्पत्तिर्जन्यजनकभाव[5]स्तेषां यथाक्रमम् ।
ततः स्थायिषु भावेषु तदसाधारणात्मकः ॥

नियमश्च विभावादेस्तदात्वप्रक्रियाऽपि च ।
अनुभावैस्तु वागङ्गमनआरम्भजन्मभिः ॥

वागारम्भादिभेदे[6]न विकल्पा रसगामिनः ।
तत्तदालम्बनीभूतनायकादिगुणादयः ॥

अन्येऽपि भावा ये केचित्तत्तदर्थानुषङ्गिणः ।
प्रवेक्ष्यन्ति च तत्रैव विज्ञेयास्ते विचक्षणैः ॥

शृङ्गार उद्भूतसाम्नो वीरोऽभूद्वि[7]ततो ऋचः ।
अथर्ववेदतो रौद्रो बीभत्सो यजुषः क्रमात् ॥

---

1 C ना । 2 AB तु । 3 A B गता । 4 B णसं । 5 वास्ते । 6 A म्भाङ्गभावे ।
7 A B च ।

सामानि स्मरतस्तस्य स्वरूप[1]व्यक्तिरात्मना ।
याचे[2]यमिच्छा जगतां सिसृक्षोः परमात्मनः ॥

विषयाक्ता रतिः सैव शृङ्गार इति गीयते ।
इच्छा क्रियात्मिका ज्ञप्तिस्तस्यैव स्मरतो ऋचः ॥

उत्साहात्मा विषयिणी वीर इत्युच्यते बुधैः ।
स्मरतोऽथर्वमन्त्राणां तत्तद्धिंसात्मिका मतिः ॥

या क्रियोप[3]हिता क्रोधात्स रौद्र इति कथ्यते ।
क्रियारूपा प्रवृत्तिर्या तस्यैव यजुषां स्मृतेः[4] ॥

फलावसानिकी[5] सैव बीभत्स इति गीयते ।
शृङ्गारस्यानुकरणं हास्य इत्यभिधीयते ॥

वीरस्य कर्म यद्वीरं सोऽद्भुतः परिकीर्तितः ।
क्रूरक्रिया या रौद्रस्य सैव स्यात्करुणाह्वया ॥

बीभत्सस्यापि यत्कर्म स भयानक ईरितः ।
प्राधान्यं जनकत्वेन जन्यत्वेनाप्रधानता[6] ॥

प्रधानताप्रधानत्वे ज्ञातव्ये नाट्यहेतवे ।
यत्तु प्रधानं तदनुभावादन्यत्प्रसिध्यति ॥

तस्मात्प्रधानेतरयोर्ज्ञानं नाट्योपकारकम् ।
तस्मात्प्रधानाः शृङ्गारवीररौद्राः पृथक्पृथक् ॥

सबीभत्सा[7]स्स्वतन्त्रत्वादेषां प्राधान्यकल्पना ।
स्वातन्त्र्यमेषामुत्पत्तिमितरेषां च सम्भवम् ॥

व्यासप्रोक्तेन मार्गेण कथयामि यथार्थतः ।
कल्पस्यान्ते[8] कदाचित्तु दग्ध्वा लोकान्महेश्वरः ॥

---

1 A B रूपव्यक्तीरसा । 2 A सेय । 3 C कोपस । 4 B ता । 5 B वलये साङ्गिकी ।
6 B नतः । 7 B क्षत । 8 A B कल्पान्तरे ।

स्वे महिम्नि स्थितः स्वैरं नृत्यन्नानन्दमन्थरम्[1] ।
मनसैवासृजद्विष्णुं ब्रह्माणं च महेश्वरः ॥

वाम[2]तो वैष्णवी शक्तिः स्थिता मायामयी विभोः[3] ।
अम्बिकारूपमास्थाय स्थिता सा सर्वमङ्गला ॥

नियोगाद्देवदेवस्य ब्रह्मा लोकानथासृजत् ।
[4]सृष्ट्वा स देवदेवस्य पुरावृत्तमथास्मरत् ॥

दिव्यं चरित्रमैशं मे कथमध्यक्षतामियात् ।
इति चिन्तापरे तस्मिन्नभ्यगान्नन्दिकेश्वरः ॥

स नाट्यवेदमध्याप्य सप्रयोगं चतुर्मुखम् ।
उवाच वाक्यं ब्रह्माणं नन्दी तच्चिन्तितार्थवित् ॥

नाट्यवेदोपदिष्टानि रूपकाणि च यानि तु ।
विधाय तेषामेकं तु रूपकं लक्षणान्वितम् ॥

भरतेषु प्रयोज्यं तत्त्वया सम्यग्विधानतः ।
तस्मिन्प्रयुक्ते भरतैर्भावाभिनयकोविदैः ॥

प्राक्तनानि च कर्माणि प्रत्यक्षाणि भवन्ति ते ।
एवं ब्रुवन्नन्तरधान्नन्दी स भगवान्प्रभुः ॥

श्रुत्वैतद्वचनं प्रीतो ब्रह्मा देवैः समन्वितः ।
ततस्त्रिपुरदाहाख्यं रूपकं सम्यगभ्यधात् ॥

अध्याप्य भरतानेतत्प्रयुङ्ध्वमिति चाब्रवीत् ।
तस्मिंस्त्रिपुरदाहाख्ये कदाचिद्ब्रह्मसंसदि ॥

प्रयुज्यमाने भरतैर्भावाभिनयकोविदैः ।
तदेतत्प्रेक्षमाणस्य मुखेभ्यो ब्रह्मणः क्रमात् ॥

---

1 B C रम् । 2 C धाम । 3 B भो । 4 C omits this line ।

वृत्तिभिः सह चत्वारः शृङ्गाराद्या विनिस्सृताः ।
यदाऽभिनीतो भरतैः सम्भोगः शिवयोस्तदा ॥

कैशिकीवृत्तितो जज्ञे शृङ्गारः पूर्वतो मुखात् ।
यदा[1]ऽभिनीतं भरतैः सम्यक्त्रिपुरमर्दनम् ॥

सात्त्वतीवृत्तितो जज्ञे वीरो दक्षिणतो मुखात्[2] ।
यदा दक्षाध्वरध्वंसोऽभिनीतो भरतैर्दृढम् ॥

अभूदारभटीवृत्ते रौद्रः पश्चिमवक्त्रतः ।
यदाऽभिनीतं कल्पान्तकर्म शम्भोर्नटैस्तदा[3] ॥

भारतीवृत्तितो जज्ञे बीभत्सश्चोत्तराननात् ।
व्यक्ता[4] मुखेभ्यश्चोत्प[5]न्ना इत्यूचुः शङ्करा[6]द्यः ॥

एभ्यो रसेभ्यो निष्पत्तिरितरेषां प्रदर्श्यते ।
जटाजिनधरो भोगिभूषणः साग्निलोचनः ॥

भस्माङ्गरागश्च यदा देव्या कामयते रतिम् ।
तदा सखी[7]नां देव्याश्च हासः समुदभून्महान् ॥

तस्माद्धास्यसमुत्पत्तिः शृङ्गारादिति कथ्यते[8] ।
पुराणि त्रीणि घटितान्ययोरजतकाञ्चनैः ॥

एकैकस्य तु रक्षार्थमसुराणां तरस्विनाम् ।
कोट्यः शतसहस्राणि स्थापितानि ततस्ततः ॥

द्विगुणोत्तरवृद्धानि[9] बला[10]न्यतिबलानि च ।
अम्बिकामसितापाङ्गीमपाङ्गेनावलोकयन् ॥

विषह्य शरवर्षाणि स्मयमानः स्मरा[11]न्तकः ।
शरेणैकेन तान्येको भस्मसादकरोद्यदा ॥

---

1 A B था । 2 AB वक्त्रतः । 3 A था । 4 BC वृत्ता । 5 D भ्यो नोत्प । 6 B संक्रमाद । 7 A सती । 8 A ल्यते । 9 C त्तानि । 10 C पापा । 11 A शरा ।

तदा समस्तभूता[1]नामद्भुतं यदभून्महत्[2] ।
तस्मादद्भुतनिष्प[3]त्तिर्वीरादेवेति कथ्यते ॥

रुद्रेण वीरभद्रेण दक्षस्य ध्वंसिते मखे ।
दण्डितेषु च देवेषु नानाप्रहरणैः पृथक् ॥

विलोक्य तान्प्रलपतश्छिन्नकर्णा[4]क्षिनासिकान् ।
दीनान्देव्याः सखीनां च करुणो यदभून्महान् ॥

तस्मात्[5]प्रवृत्तः करुणो रौद्रादिति विभाव्यते ।
दग्धानामादिदेवानामस्थीन्यामुच्य[6]भैरवे ॥

तच्छमशानमधिष्ठाय तद्भस्मालिप्य नृत्यति ।
प्रमथा भूतसङ्घास्त[7]मवेक्ष्य भ्रान्तचेतसः ॥

तमेव शरणं जग्मुर्यतो भयविमोहिताः ।
तस्माद्भयानको जातो बीभत्सादिति गण्यते[8] ॥

नारदे[9]नैष कथितः प्रकारो[10] भरताय च ।
तथैव भरतेनोक्तं यादृशं नारदाच्छ्रुतम् ॥

तदुक्तेन प्रकारेण रसानां च[11] पृथक् पृथक् ।
उत्पाद्योत्पादकत्वं च यथावदुपपादितम् ॥

यथा हि तन्तवो वेमतुर्यादिक्रिययान्विताः ।
पटात्मना परिणताः पट[12]वाच्या भवन्ति ते ॥

[13]यथा मृदो दण्डचक्रकुलालादिभिरन्विताः ।
घटात्मना परिणता घटवाच्या भवन्ति च ॥

तथैव स्थायिनो भावा विभावादिभिरन्विताः ।
रसात्मना परिणता रसवाच्या भवन्ति ते ॥

---

1 A देवा । 2 A तोऽयमभून्महान् । 3 B र्वृं । 4 B कण्ठा । 5 A ततः ।
6 B C न्यादाय । 7 A प्रथमं भूतसंभूत । 8 B द्यते । 9 C भारते । 10 A B प्रातायं ।
11 A तु । 12 A पद । 13 A omits two lines ।

[1]यथैव तन्तुभेदाच्च पटभेदः प्रदृश्यते ।
तथैव रस[भाव]भेदाच्च रसभेदो विभाव्यते ॥

यथा कारणवैकल्यात्कार्यं नोत्पद्यते दृढम् ।
तथा कारणभावादिवैकल्यान्न रसोदयः ॥

तस्माद्विभावानुभावसात्त्विकव्यभिचारिभिः ।
वर्धिताः स्थायिनो भावा नायकादिसमाश्रयाः ॥

अनुकारतया[2] नाट्ये क्रियमाणा नटा[3]दिषु ।
रसतां प्रतिपद्यन्ते सामाजिकमनस्सु ते ॥

संस्कारैः प्राक्तनैस्तैश्च रस्यन्ते यत्ततो[4] रसाः ।
स्थायिनां रसनिष्पत्तौ तदसाधारणात्मकः ॥

विभावादिनिवेशस्य नियमोऽत्र प्रदर्श्यते[5] ।
काव्यर्तुमाल्य[6]सङ्गीतचन्दनेन्दूदयादयः ॥

विभावास्स्तम्भरोमाञ्चस्वेदवेपथुगद्गदाः ।
सात्त्विकास्तूग्रतालस्यजुगुप्साभिर्विवर्जिताः ॥

सञ्चारिणोऽपि रत्याख्ये स्थायिनि स्थानमाश्रिताः ।
उद्भावयन्ति शृङ्गारमनुभावोऽस्य तु त्रिधा ॥

स्वेदादिभिः कटाक्षाद्यैः प्रियभाषा[7]दिभिर्भवेत् ।
विकटा[8]कारवेषेण विकृताचार[9]कर्मभिः ॥

विकृतैरपि वाक्यैश्च धार्ष्ट्यलौल्यानुभूतिभिः ।
विकृताभिनयेनैव विकृताङ्गावलोकनात् ॥

कुहकासत्प्रलापेन[10]दोषोदाहरणादिभिः ।
हास्यः स्यात्स तु[11] भूयिष्ठं स्त्रीनीचादिषु दृश्यते ॥

---

1 A omits two lines । 2 B यंतया । A रयता । 3 B रसा । 4 C यैस्ततो । B: यत्नतो । 5 A दृश्य । 6 A माल B माला । 7 C भेदा । 8 B विकारा । 9 A B कार । 10 A प्रगाबेग । 11 A स्तुत ।

स्वपराश्रयभेदेन स द्विधा परिकल्प्यते ।
पुनः प्रकृतिभेदेन षट्प्रकारः प्रदृश्यते ॥

निगद्यते वरिष्ठानां स्मितं हसितमित्यपि ।
मध्यमानां विहसितं तथोपहसितं भवेत् ॥

नीचानां चापहसितं तथाऽतिहसितं क्रमात् ।
ईषद्विकासिगण्डं यत्सकटाक्ष[1]निरीक्षणम् ॥

अलक्ष्यदन्तज्योत्स्नं तदु[2]त्तमानां स्मितं भवेत् ।
उत्फुल्लमाननं यत्र विकसद्गण्डमण्डलम् ॥

लक्ष्यमाणद्विजं यत्स्यात्तदेव हसितं भवेत् ।
आकुञ्चिताक्षिगण्डं यन्मुखरागसमन्वितम् ॥

सस्वनं मधुरं यत्स्यात्तद्वै विहसितं भवेत् ।
जिह्मावलोकना[3] दृष्टिः मुखमुत्फुल्लनासिकम् ॥

निकुञ्चितं शिरो यत्र तच्चोपहसितं भवेत् ।
अस्थानहासरटित[4]माविरास्र[5]विलोचनम् ॥

कम्पिताङ्गशिरोगात्रं तच्चापहसितं भवेत् ।
विक्रुष्टस्वनसंरम्भ[6]मुद्धतं सास्रलोचनम् ॥

करोपगूढपार्श्वं यत्तच्चातिहसितं भवेत् ।
सात्त्विका हास्यसम्पत्तौ सर्वे प्रलयवर्जिताः ॥

उत्तमप्रकृतिर्वीर उत्साहात्मा विभाव्यते ।
उत्साहः सत्त्वसम्पत्तिशौर्यत्यागादिसम्भवः ॥

अविस्मयादसंमोहादविषादित्वतोऽपि च ।
पुरुषार्थविशेषेषु कार्यतत्त्वार्थनिश्चयः ॥

---

1 B C हर्षाकर्षि । 2 B C यद्‌ । 3 C किता । 4 A हदित । 5 C क्षाम । 6 A B महसंभ्रम ।

पराक्रमः प्रतापश्च दुर्धर्षप्रौढसैन्यता ।
यशः कीर्तिश्च विनयो नयश्च प्रभुशक्तता ॥

मन्त्रशक्तिश्च सम्पन्नधनाभिजनमित्रता ।
इत्यादयो विभावाः स्युर्वीरस्य कविकल्पिताः ॥

स्थैर्यशौर्यप्रतापैश्च धैर्यैराक्षेपभाषितैः ।
सामादीनामुपायानां यथाकालप्रयोगतः ॥

भाषितैर्भावगम्भीरैरनुभावा भवन्ति ते ।
प्रबोधा[1]मर्षगर्वौग्र्यमदहर्षाः स्मृतिर्धृतिः[2] ॥

औत्सुक्यतर्कासूयाश्च भवन्ति व्यभिचारिणः ।
सात्त्विकाः स्वेदरोमाञ्चा मदहर्षादिसंभवाः ॥

गुणास्त्यागादयोऽपि स्युरनुभावाः क्वचित्क्वचित् ।
विस्मयात्मा भवत्येव समप्रकृति[3]रद्भुतः ॥

कर्मणोऽतिशयान्नृणामीप्सितार्थोपसङ्गमात् ।
मनोरथफलप्राप्तेर्दिव्यभावावलोकनैः ॥

[4]विमानोद्यानभवनसभारामावलोकनैः ।
विरुद्धानां पदार्थानामविरुद्धसमागमैः ॥

असम्भाव्य[5]स्य चार्थस्य सम्भवोत्पत्तिदर्शनैः ।
अदेशकालसम्पत्तेरभीष्टादेरचिन्तितम् ॥

इत्यादिभिर्विभावैस्तैरद्भुताख्यो रसो भवेत् ।
स्तम्भवेपथुरोमाञ्चस्वरसादाश्रुनिर्गमाः ॥

सञ्चारिणोऽपि तस्य स्युर्ये शृङ्गारोपयोगिनः[6] ।
अनुभावास्तु वक्ष्यन्ते परत्राद्भुतवर्णने ॥

---

1 B प्रमोदा । 2 C स्मृतिर्हर्षमदा मतिः । 3 A B प्रीतिभि । 4 A omits this line । 5 A सद्भाव । 6 B शृङ्गाररस्योपयोगिनः ।

राक्षसोद्धतदैतेयक्रूरादिप्रकृतिर्भवेत् ।
रौद्रस्तस्यानृतं वाक्यमवज्ञापरुषोक्तयः ॥

वधा[1]न्यदारलाभादिप्रतिज्ञा राष्ट्रभञ्जनम् ।
हठाद्ग्राहो गृह[2]क्षेत्रदारादीनां च मत्सरः ॥

देशजातिकुलाचारविद्याशौर्यादिनिन्दनम् ।
आक्रोशकलहाक्षेपवाक्याज्ञाभञ्ज[3]नादयः ॥

एते विभावा भ्रुकुटीकपोलस्फुरणं[4] मुहुः ।
दन्तोष्ठपीडनं हस्तनिष्पेषो रक्तनेत्रता ॥

शस्त्रास्त्रग्रहणच्छेदस्तलताडनमोटने ।
पानं च रुधिरादीनामान्त्रा[5]दिभिरलङ्क्रिया ॥

पातोऽविचारतो युद्धे गर्जनं भर्त्सनं मुहुः ।
एतेऽनुभावा रोमाञ्चस्वेदकम्पादयोऽपि च ॥

औग्र्यावेगमदामर्ष[6]मूर्च्छाऽसूयाऽवहित्थकः ।
स्मृतिचापलबोधाश्च धैर्योत्साहादयो गुणाः ।

शोकात्मा करुणो योषिन्नीचादिप्रकृतिस्स्वतः[7] ।
अभीष्टविरहाच्छापा[8]त्क्लेशाच्च विनिपातनात् ।

वधादिष्टस्य पुत्रादिनिधनादर्थहानितः ।
राज्यदेशपरिभ्रंशादन्यान्यव्यसनोदयात् ॥

दैवोपघाताद्दारिद्र्याद्व्याध्यादिभ्यः प्रजायते ।
श्रुतेभ्यो वाऽनुभूतेभ्यो दृष्टेभ्यो वा नृणां भवेत् ॥

अश्रुपातो मुखे शोषः स्वरभेदो विवर्णता ।
निश्वासः स्मृतिलोपश्च विलापस्स्रस्त[9]गात्रता ॥

---

1 B प्राधा । 2A होदूग्रह । 3 B C भर्त्स । 4 AB स्खलनम् । 5 A B मार्द्रां ।
6 AB दाहर्षा । 7 B C स्वन। । 8 C द्राधा । 9 A स्त्रस्त ।

मोहागमोऽभिघातश्च भूपातः परिदेवितम्[1] ।
विवेष्टनं महीपृष्ठे भुजयोश्च विवर्तनम् ॥

श्वासोच्छ्वासौ[2] देहघात[3]पातोरस्ताडनानि च[4] ।
मोहो विषादनिर्वेदौ चिन्तौत्सुक्ये च दीनता ॥

जडता व्याधिरुन्मादापस्मारालस्यमृत्यवः ।
स्तम्भकम्पाश्रुवैवर्ण्यस्वरभङ्गादयस्तथा ॥

एतेऽनुभावाः कथिता दीप्य[5]मानास्तु दीपनाः ।
स्त्रीनीचादिषु शोको[6]ऽयं मरणव्यवसायदः ॥

मध्यमानां भवेच्छोके मुमूर्षा मृतिरेव वा ।
उत्तमानामतिप्रौढो विवेकेनैव शाम्यति ॥

पराश्रयस्तूत्तमानामात्मनो व्यसनप्रदः ।
बीभत्सः स्याज्जुगुप्सात्मा क्षोभोद्वेगविभागभाक्[7] ॥

क्षोभात्मा रुधिरान्त्रादिदर्शनस्पर्शनादिजः ।
उद्वेगात्मा कृमिच्छर्दिपूतिविष्ठादिजो भवेत् ॥

द्वेषो ग्लानिर्भयं मोहः क्रोधो निद्रा भ्रमो मतिः ।
वक्ष्यन्ते ह्यनुभावाश्च नासाप्रच्छादनादयः ॥

पुरैव कथिता ह्यस्य सम्भाव्या व्यभिचारिणः ।
भयानको भयस्थायी स्वभावकृतकात्मकः[8] ॥

विकृतैश्च रवैः सत्त्वै[9]र्विकृताकारदर्शनैः ।
[10]शून्यारण्यादिगमनैस्सङ्ग्रामादिप्रवेशनैः ॥

गुरुराजापराधैश्च विभावैरेवमादिभिः ।
अनुभावास्तु वक्ष्य[11]न्ते वाङ्मनःकायभेदतः ॥

---

1 A तः । 2 C सो । 3 A यात । 4 A दयः । 5 B भाव्य । 6 A कोपो । 7 A वाक् ।
8 A कम् । 9 A सवैं । 10 C Omits this line । 11 B कथ्य ।

उक्तानुक्तानभिज्ञत्वदिङ्मोहाद्या[1] यथार्थतः ।
एवं रसाः सानुभावविभावाः सम्यगीरिताः ॥

श्रृङ्गारो वाचिकः कश्चिन्नैपथ्यात्मा च कश्चन ।
क्रियात्मा कश्चिदित्येवं श्रृङ्गारस्त्रिविधः स्मृतः ॥

हास्योऽपि त्रिप्रकारः स्याद्वाङ्नैपथ्याङ्गभेदतः ।
वीरो युद्धदयादानभेदेन त्रिविधो मतः ॥

अद्भुतं त्रिप्रकारं स्यान्मानसाङ्गिकवाचिकैः ।
अङ्गनैपथ्यवाग्भेदात्त्रिविधो रौद्र उच्यते ॥

करुणोऽपि त्रिधा भिन्नो मनोवागङ्गकर्मभिः ।
रुधिरादिक्षोभजन्मा विष्ठाद्युद्वेगजोऽपरः ॥

इति द्वेधा समाख्यातो बीभत्सो रसकोविदैः ।
मानसो वाचिकश्चेति द्विधा भिन्नो भयानकः ॥

भयानकः सबीभत्सस्त्रिधा वाक्कायमानसैः ।
स्वाभाविको मानसः स्यादाङ्गिकः कृतको भवेत् ॥

देशकालगुणद्रव्यक्रियाजात्यात्मकेषु तु ।
अनुभूतेषु भावेषु यथावत्स्थितरूपतः ॥

येन येन च भावेन यादृशो जायते रसः ।
तत्तद्भावाख्यया सद्भिर्बोध्यते तादृशो रसः ॥

भावगर्भं रहः[2]संवित् मधुरं नर्मपेशलम् ।
सुवृत्तं[3] श्रवणानन्दि श्रृङ्गारो वाचिको मतः ॥

वासोऽङ्गरागभूषाभि[4]र्माल्यैर्युक्तं प्रसाधितम् ।
प्राप्तयौवनमङ्गं यच्छृङ्गारः स्यात्स आङ्गिकः ॥

1 A B ख्या । 2 A रसः । 3 A रक्तम् । 4 A षादि ।

दन्तच्छेद्यं नखच्छेद्यं मणितं च ससीत्कृतम्।
चुम्बनं चूषणं भावो हेलादिः केलयोऽपि च॥

शयनाद्युपचारश्च तथा सङ्गीतकक्रिया।
इत्यादिभावैः कथितः शृङ्गारः स्यात्क्रियात्मकः॥

यद्यत्प्रहसनं वाक्यं स हा[1]स्यो वाचिकः स्मृतः[2]।
विपर्ययेण निक्षेपो माल्याभरणवाससाम्॥

यः स नैपथ्यजो हास्य इति निर्णीयते बुधैः।
विकटाभिनयत्वं यदङ्गानामवलोक्यते॥

स्वभावाद्वाऽथ[3]कपटात्स हास्यस्त्वाङ्गिको भवेत्[4]।
निरायुधस्याप्येकस्य हीन[5]स्यापि परिच्छदैः॥

अभीतिर्बहुभिर्योद्धुं व्यवसायो रणे मदः।
हर्षः शस्त्रास्त्रघातेषु समरादपलायनम्॥

भीताभयप्रदानं च प्रपन्नस्यार्तिभञ्जनम्।
एवं युद्धात्मको वीरः तज्ज्ञैः कविभिरीरितः॥

अर्थिनामीप्सितादर्थात्प्र[6]दायैभ्योऽधिकं बहु।
अर्थिनः पुनरायातान् स्वजनानितरानपि॥

यन्मानयति दानेन वाक्येन मधुरेण च।
एतद्दानात्मको वीरः कथ्यते दानशीलिभिः॥

व्याधिदारिद्र्यशस्त्रास्त्रक्षुत्पिपासादिपीडितान्।
अनुगृह्णाति यः प्रीत्या[7] स वीरः स्याद्दयात्मकः॥

ध्यानं न[8]यनविस्तारः प्रसादो वदने दृशि।
आनन्दाश्रु सरोमाञ्चमनिमेषावलोकनम्॥

---

1. BC तद्वा। 2 C स्ये वाचकः स्मृतम्। 3 C ह्वाव। 4 A मतः। 5 B भिन्न। 6 B तामर्थान्प्र। 7 A यः पाति। 8A यन्न।

अनिश्चलत्वं मनसो यस्मात्तन्मानसो[1]ऽद्भुतः ।
चेलाङ्गुलीनां भ्रमणमुत्थायोत्थाय वल्ग[2]नम् ॥

दानप्रबन्धो नटनमाश्लेषश्च परस्परम् ।
परस्परस्य भुजयोः परस्परतलाहतिः ॥

एवमादिविकारो यः स भवेदाङ्गिकोऽद्भुतः ।
हाहाकारः साधुवादः कपोलास्फालनध्वनिः ॥

उच्चैर्हासो हर्षघोषौ गीतमुच्चावचं वचः ।
एवमादिर्विका[3]रो यः स भवेद्वाचिको[4]द्भूतः ॥

शिरोभिर्बहुभिः स्थूलैः केशैरुद्धूत[5]पिङ्गलैः ।
बाहु[6]भिर्ह्रस्वदीर्घैश्च बहुशस्त्रास्त्रधारिभिः ॥

उद्वृत्तरक्तनयनैर्महाकायैः सितेतरैः ।
एवंप्रकारो रौद्रोऽयमाङ्गिकः कथ्यते बुधैः ॥

कृष्णरक्तानि वासांसि कृष्णरक्तानुलेपनम् ।
कृष्णरक्तानि माल्यानि कृष्णं रक्तश्च भूषणम् ॥

एवं नैपथ्यजो[7] रौद्र इति विद्वद्भिरुच्यते ।
छिन्धि भिन्धि बधानैनं खाद मारय ताडय ॥

पिबामि रुधिरं तेऽद्य पिनष्टीत्यादि यद्वचः ।
एतत्तु वाचिको रौद्र इति नाट्यविदी[8]रितः ॥

वाक्यार्थाननुसन्धानं निश्वासोच्छ्वासदीर्घता ।
उपेक्षा केश[9]वासोऽङ्गसंस्कारादिषु दीनता ॥

अनुभूतानभिज्ञत्वमनवस्थितचित्तता ।
विरक्तिः सर्वविषया[10] स्निग्धेष्वनभिष[11]ङ्गता ॥

---

1 A B यत्तस्यात्मा रसो । 2 C वन्द । 3 A B प्रका । 4 B दाङ्गिको । 5 A रुद्धूत । 6 A बहु । 7 A B यो । 8 C धी । 9 B देश । 10 B ये C यैः । 11 A B सं ।

आकाशवीक्षणश्चेति मानसः करुणः स्मृतः ।
हाकारो रोदनं क्रोशः प्रलापो दीर्घभाषणम् ॥

दूराह्वानमथा[2]क्रन्दो वाचिकः करुणः स्मृतः ।
[3]रुधिरादिषु द्व[4]ष्टेषु मनः क्षुभ्यति चञ्चलम् ॥

अतो हि मानसः सद्भिर्बीभत्सः क्षोभनः स्मृतः ।
बिभेति ग्लायति द्वेष्टि[5]मुहुर्मुह्यति बुद्ध्यति ॥

क्रन्द[6]त्यपक्रामति च विषीदति च नि[7]न्दति ।
दयते[8] भ्राम्यति त्रस्यत्यास्ते तूष्णीं च गूहते ॥

यत्ततो मानसः क्षोभजन्मा बीभत्स उच्यते।
उद्वेगजो यो बीभत्सः स त्वाङ्गिक उदाहृतः ॥

वस्त्रावकुण्ठनं[9] नासाच्छादनं नेत्रकूण[10]नम् ।
अस्पष्ट[11]पादपतनमपवर्तितवक्रता ॥

द्रुतपादाग्रगमनं ष्ठीवनं च मुहुर्मुहुः ।
एवमाङ्गिक उद्वेग[12]जन्मा बीभत्स उच्यते ॥

दिङ्मोहः कान्दिशीकत्वं सहायान्वेषणं मुहुः ।
पार्श्वयोर्वीक्षणं पाणि[13]पादयोरपि कम्पनम् ॥

दंशोऽङ्गुलीनामभययाचनं दन्तदर्शनम् ।
एतैर्भयानकस्तज्ज्ञैः कथित[1] स्त्वाङ्गिकात्मना ॥

ऊरुस्तम्भश्च हृत्कम्पः स्वेदो दृक्चलतारका ।
शुष्कोष्ठताऽऽस्यशोषश्च गद्गदत्वं विवर्णता ॥

विषयस्यापरिच्छित्तिरुक्तानुक्तानभिज्ञता ।
एतैर्भयानकः स्वाभाविको मानस उच्यते ॥

1 A शं । 2 A मदो । 3 C omits two lines । 4 B द्विं । 5 A दृष्टिः ।
6 A क्रुध्य । 7 B न । 8 यदतो । 9 C वंकर्षणं । 10 A कुण्ठ । 11 A अस्त । B अस्पृ ।
12 A बीभत्स । 13 A भूयः । 14 C क्षा ।

एवं रसविकल्पाश्च कथिताः स्वस्वरूपतः ।
अधिदैवतमेतेषां भरतादिभिरुच्यते ॥

शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः ।
महेन्द्रदैवतो वीरस्त्वद्भुतो ब्रह्मदैवतः ॥

[1]रुद्राधिदैवतो रौद्रः करुणो यमदैवतः ।
बीभत्सः कथ्यते सद्भि[2]र्महाकालाधिदैवतः ॥

[3]भयानकोऽपि कथितः कालदेवाधिदैवतः ।
आभिरूप्यमधिष्ठानं शृङ्गारस्य यतो भवेत् ॥

अभिरूपोत्तमो विष्णुस्तस्मादस्याधिदैवतम्[4] ।
[5]विकटाभिनयत्वं यद्धास्याधिष्ठानमुच्यते ॥

तदस्ति प्रमथे यस्मात्सोऽयमस्याधिदैवतम् ।
वीरस्य यदधिष्ठानं तद्धैर्यमिति गण्यते ॥

धीरो महेन्द्रो यस्मात्तु सोऽयमस्याधिदैवतम् ।
अद्भुतस्याप्यधिष्ठानं नानाशिल्पात्मिकैव धीः ॥

ब्रह्मणः सेयमस्तीति सोऽयमस्याधिदैवतम् ।
रौद्रस्य यदधिष्ठानं कर्म रोग[6]रुजात्मकम् ॥

रुद्रस्य च त[7]दस्तीति सोऽयमस्याधिदैवतम् ।
करुणस्याप्यधिष्ठानं दयेति परिभाष्यते ॥

पापं त[8]या यमयति यमः सोऽस्याधिदैवतम् ।
[9]बीभत्सस्याप्यधिष्ठानं महाकालोऽसृगात्मकः ॥

प्रलयेऽस्य तदस्तीति सोऽयमस्याधिदेवता ।
भयानकस्याधिष्ठानं विकृताकाररूपता ॥

---

1 C Omits this line । 2 C ऽस्माभिः । 3 C Omits this line । 4 A देवता । 5 A Omits two lines । 6 A रोद । 7 A B यद्द । 8 B पापात्त । 9 A B omit four lines ।

कालदेवस्य संहारकालेऽस्तीति स देवता।
श्यामः श्वेतश्च गौरश्च पीतो रक्तश्च पञ्चमः॥

कपोतश्चैव नीलश्च कृष्णश्चेति यथाक्रमम्।
यथाऽधि[1]देवतं वर्णः कथितः पूर्वसूरिभिः॥

शृङ्गारादिरसानां तु स्वरूपं जन्मनामनी।
तद्विकल्पाश्च तद्रूपं तद्दैवं वर्णकल्पना॥

भावानामपि कृत्यश्च तत्स्वरूपञ्च नाम च।
संहितोक्तेन मार्गेण तथा वासुकिवर्त्मना॥

व्यासोक्तेनाध्वना चैव नारदाभिहि[2]तेन च।
निर्णीतानि[3] यथाशास्त्रं दर्शितानि यथार्थतः॥

रसानां ये विभावाद्यास्ते गुणाः स्युः कदाचन।
अनुभावा अपि क्वापि सात्त्विकाश्च कदाचन॥

नायिकानायकादीनां व्यापाराद्यनुरूप[4]तः।
गुणा भवन्ति कुत्रापि स्थायिनोऽपि कदाचन॥

विशेषास्तेषु येऽनुक्तास्तेषां रूपं प्रदर्श्यते।
लघुविक्रमकारित्वं शौर्यमित्यभिधीयते॥

बुद्धेर्विरूपावसायो व्यवसाय इति स्मृतः।
सहसा यत्कृतं कर्म तत्साहसमुदीरितम्॥

शस्त्रास्त्रादिहतस्यापि परमाक्रमितुं मनः।
प्रवर्तते फलप्राप्तेः स पराक्रम ईरितः॥

प्रतपन्ति यतो द्वेष्याः स प्रताप इहोच्यते।
प्रौढिः प्रवृत्तिः सोत्साहा प्रारब्धस्याफलो[5]दयात्॥

---

1 A दि। 2 A ह्र। 3 C तश्च। 4 A शानुकूल्य। 5 BC स्फलो।

कृतिर्या रमयत्येव विश्वं[1] सा कीर्तिरुच्यते ।
कुलक्रमागता सा चेत्कीर्तिनाम्ना प्रकाशते ॥

स्वापदानप्रसूता चे[2]द्यश इत्यभिधीयते ।
यतो[3] विश्वस्य शमिति तस्माद्यश इतीरितम् ॥

विनयो लोकमर्यादाशास्त्रार्था[4]नतिलङ्घनम् ।
दण्डनीतेरनुष्ठानं नय इत्यभिधीयते ॥

अनि[5]युक्ता अपि स्वे स्वे कृत्ये यत्सन्निधौ[6] प्रजाः ।
प्रभुत्वं तदिति प्रोक्तमाज्ञा[7] सैव भयात्मिका ॥

वीर्यं विचित्रमव्यग्रा प्रवृत्तिर्युद्धकर्मणि ।
शुण्डारवद्बलं यस्य दोष्णोः शौण्डस्स[8] कथ्यते ॥

शौण्डान्य[9]तः प्रेरयति तच्छौण्डीर्यमुदाहृतम् ।
प्रकर्षभावना जन्तोः प्रभावो[10]ऽभीष्टदानतः ॥

भावाः परोपकारार्था लक्ष्यन्ते यत्र[11] सर्वथा ।
स चानुभाव इत्युक्तो येभ्यः स्पृहयते जनः ॥

सत्त्वं जवबलप्राणकायबुद्धिषु वर्तते ।
स महासत्त्व इत्युक्तो धीरपर्यायनामकः ॥

इत्याकृत्या नियमिताः स्थैर्यं सर्वैरभेद्यता ।
एते गुणाश्च वीरस्य विभावा एत एव हि ॥

रौद्रस्य करुणस्यापि ये विभावादयोऽभवन् ।
तदालम्बनभूतानां कथ्यन्ते ते गुणात्मकाः ॥

यस्मिन्नर्थे च यद्वाक्यमर्थासंस्पर्शि तत्त्वतः ।
अनृतत्वं तदथवा तदर्थस्य विपर्ययः ॥

---

1 A विश्वा । 2 A नात्प्रसादाच्चे । 3 A यशो । 4 A द्य । 5 A अपि । 6 A धेः । 7 C त्मा । 8 A शुण्ठारवद्यस्य दोष्णोः स शौण्ड इति । 9 A शौण्ठाद्य । 10 A प्रधानो । 11 B C इय । 12 B हि ।

अवज्ञा सा प्रकृष्टस्य यत्त[1]थाऽज्ञायमानता ।
अवज्ञा मानसी ज्येष्ठे न्यक्कारो वाक्ति[2]रस्कृतिः ॥

वाचिकी गुणनिन्दा स्यात् शारीरी ताडनादिका ।
प्रकृष्टयोर्द्वयोरेकमानेनैवावमानिता ॥

मृषैव दोषमारोप्य क्रोश आक्रोश उच्यते ।
असूयादिभिरन्योन्यं क्षेप आक्षेप उच्यते ॥

क्रोधस्त्रिधा भवेत्क्रोधकोपरोषविभागतः ।
शत्रुमित्रप्रियाभृत्यपूज्यादिष्वेव पञ्चधा ॥

कुटिलां भ्रुकुटिं धत्ते जिह्वया लेढि सृक्किणी[3] ।
मुहुर्मुहुर्दशत्योष्ठं दन्तान्कटकटापयन् ॥

शस्त्राण्युद्वीक्षते रूक्षं दसश्चोद्वीक्षते भुजौ ।
न तिष्ठति न चैवास्ते विधत्ते कण्ठगर्जितम् ॥

एवं हि वर्तते प्रायो जातक्रोधस्तु शत्रुषु ।
व्रीडाऽवनम्रवदनः स्खलद्बाष्पः श्व[4]सन्मुहुः ॥

तूष्णीं ध्यायति निश्चेष्टः शेते मित्रक्रुधा[5] रहः ।
रोषरज्यत्कटाक्षश्च[6] स्फुरिताधरपल्लवः ॥

स्फुरद्भ्रुकुटिरल्पाङ्गविकृतिः स्यात्प्रियाक्रुधि ।
शिरःकम्पाक्षिविक्षेपभर्त्सनाङ्गुलितर्जनैः ॥

क्रोधोऽभिनेयो भृत्येषु वीक्षणैश्च मुहुर्मुहुः ।
विनम्रवदनः स्वेदस्नपितो गद्गदस्वनः[7] ॥

अनुत्तरोऽवदन्किञ्चित् पूज्ये क्रुद्धो[8] विभाव्यते ।
अष्टाववस्थाः क्रुद्धानां कथ्यन्तेऽत्र मनीषिभिः ॥

---

1 A व्यक्त । 2 A वा ति । 3 B काम् । 4 C श्व । 5 A त्तौ यथा । 6 A क्षश्च ।
7 A नम् । 8 A ज्यक्रुद्धो । B ज्ये क्रोधो ।

प्रथमा निन्दति गुणान्द्वितीया परुषं वदेत् ।
तन्नाशोपायचिन्तैव[1] तृतीयायामु[2]दाहृता ॥

चतुर्थ्यां[3] हननेच्छा स्यात्पञ्चम्यामायुधग्रहः ।
षष्ठ्यां निहन्ति वेगेन विघ्नैरपि च वारितः ॥

सप्तम्यां निहतस्यासृक्पानमान्त्रापकर्षणम् ।
यावत्फलावधिः क्रोधः कैश्चिद्विघ्नै[4]रसाधितः ॥

क्रुद्धः क्रोधस्य कौटिल्यात्प्राणांस्त्यजति कामतः ।
क्रोधो रौद्रेषु भूयिष्ठः[5] कोपो धी[6]रेषु शस्यते ॥

स्त्रीपुंसयोर्मिथो रोषः प्रणयादिर्हि क[7]थ्यते ।
क्रोधस्तिष्ठति सर्वत्र क्रुद्धानामाफलोदयात् ॥

कोपोऽनुनाथितः सद्यो निवर्तेत फलोदयात् ।
उद्दीप्तश्चेत्प्र[8]वर्धेत तत्तदुद्दीपनैर्मुहुः ॥

रोषः प्रायेण सर्वत्र शाम्यत्येवानुनाथितः ।
विलापः स्याद्गुणाख्यानमिलितं रोदनं भवेत् ॥

परिदेवितमेतत्स्याद्रुदितं यत्सगद्गदम् ।
उच्चै रोदनमाक्रन्दः शोकोत्कर्षे स[9] कथ्यते ॥

निकृष्टे च विलापः स्यान्मध्यमे परिदेवितम् ।
रुदितं त्रिविधं विद्यादीर्ष्यानन्दार्तिभेदतः ॥

स्फुरदोष्ठा[10] सनिश्वासा सशिरःकम्पवेपथुः ।
भ्रुकुटीकुटिलालोका[11] भवेदीर्ष्योत्थरोदने[12] ॥

फुल्लत्कपोला शिशिरबाष्परोमाञ्चनिर्भरा ।
सगद्गदस्वना येन तत्स्यादानन्दरोदनम् ॥

---

1 A चित्ते वा । 2 A B समु । 3 A र्थें । 4 A B द्वीयैं । 5 A घेरौद्रे च भूयिष्ठा । 6 A वीरे । 7 A पु क । 8 C प्तये प्र । 9 C ण । 10 B द्रोषा । 11 B लारोषो । C लाकारो । 12 C र्ष्याविकत्थने ।

प्र[1]लापो भूमिपतनं बाष्पधाराविवेष्टनम्।
हाहेति भाषणं मन्दमार्तिजे रुदिते भवेत् ॥

प्रायेण रुदितं स्त्रीणां नीचादौ क्वापि वा भवेत्।
रसालम्बनभूतानां पदार्थानां ततस्ततः ॥

साधारणाः स्युर्ये भावास्ते कथ्यन्ते[2] यथार्थतः।
आवेध्या[3]रोप्यनिक्षेप्यबन्धनीयैरभूषितम्[4] ॥

यद्भूषितमिवाभाति तद्रूपमिति कथ्यते।
यद्भूषणं[5] रत्नमयं केवलं हैममेव वा ॥

कर्ण[6]स्य कर्ण[7]पाशस्य तदावेध्यमुदाहृतम्।
इन्द्रच्छन्दादयो हारा हेमसूत्रादयोऽपिच ॥

एते भूषणमारोप्यमिति विद्वद्भिरीरितम्।
मुक्तामयाः स्वर्णमयाः श्रोणीसूत्राङ्गदादयः ॥

ग्रैवेयकाश्च कविभिर्बन्धनीयमुदाहृतम्।
निक्षेप्यं नूपुरं हस्ताभरणादि निगद्य[8]ते ॥

प्लवमानमिवाभाति यदङ्गं कान्तिवारिणि।
लावण्यमिति तत्प्राहुः पुलकं प्रतिमादिषु ॥

यद्रूपं स्वगुणोत्कर्षैः पदार्थमभितः स्थितम्।
स्वात्मवत्कुरुते यत्तदाभि[9]रूप्यमुदाहृतम् ॥

अन्यूनानतिरिक्तं य[10]दङ्गप्रत्यङ्गसौष्ठवम्।
सुश्लिष्टसन्धिबन्धं यत् तत्सौन्दर्यमिति स्मृतम् ॥

अङ्गं शिरः कटी वक्षः कुक्षिःपादावितीरितम्[11]।
जङ्घोरुबाहुग्रीवादिः प्रत्यङ्गमिति कथ्यते ॥

---

1 A वि। 2 B वाः कथयन्ति। 3 A थ्या। B द्या। 4 B तः। 5 A B षितम्। 6 A वर्ण। B सत। 7 B कण्ठ। 8 B दीनि कथ्य। 9 A वि। 10 A B न्यूनातिरिक्तं यत्किञ्चि। 11 A तः।

उपाङ्गं नासिकानेत्र[1]भ्रूकपोलाधरादिकम् ।
सौकुमार्यं त्रिधा भिन्नं ज्येष्ठम[6]ध्याधमक्रमात् ॥

प्रसूनपल्लवस्पर्शासहं यत्स्यात्तदुत्तमम् ।
पाणिस्पर्शाद्यसहनं सौकुमार्यं तु मध्यमम् ॥

शीतातपा[2]द्यसहनं सौकुमार्याधमं[3] भवेत् ।
सुखस्पर्शत्वमेवाहुः मृदुत्वमिति तद्विदः ॥

अन्ये तु स्पृष्टमपि यदस्पृष्टमिव भाव्यते ।
तदेव मार्दवमिति कथयन्ति मनीषिणः ॥

त्रिधा प्रसादो वदने दृशोश्चित्ते च कथ्यते ।
लावण्यरसनिष्यन्दि[4] स्मयमानमिवासकृत् ॥

पुलकोल्लासिगण्डं यत्प्रसन्नं वदनं भवेत् ।
सभ्रूविलासललितं सकटाक्षनिरीक्षणम् ॥

स्मेरतारं स्वतःस्निग्धं प्रसन्नं नयनं भवेत् ।
कृतज्ञतोपकर्तृत्वं भूयो दोषानभिज्ञता ॥

एतत्प्रसन्नचित्तानां लक्षणं समुदाहृतम् ।
श्यामो रक्तः प्रसन्नश्च मुखरागोऽपि च त्रिधा ॥

शुष्यत्कान्ति परिम्लानमसृणाधरपल्लवम् ।
मन्दनिश्वासमामी[5]लद्रूक्ष[6]तारावलोकितम् ॥

[7]येन स्याद्वदनं श्यामो[8]मुखरागोऽयमीरितः ।
प्रस्फुरत्स्वेदकणिकं रोषारुणविलोचनम् ॥

रज्यत्कपोलयुगलं स्फूर्जन्नि[9]श्वसितोष्मलम्[10] ।
मुखं यत्तत्र रक्ताख्यो मुखरागः प्रकीर्तितः ॥

1 B श्रोत्र । 2 B तस्पर्शा । 3 A र्येऽधमे । 4B मपि निष्यन्द । 5 A B मानी ।
6 A दूष । 7 C omits this line । A एतत्स्या । 8B मम् । 9 A जेनि । 10A तोष्ठकम् ।

आविस्स्मितं स्फुरत्कान्ति भाषमाणमिवासकृत् ।
प्ररूढरागं नयनं स्निग्धतारावलोकितम् ॥

यत्र तत्र प्रसन्नाख्यो मुखराग उदाहृतः ।
भयानके सबीभत्से करुणे श्याम इष्यते ॥

रक्तो रौद्रे क्वचिद्वीरे विवादे कैश्चिदिष्यते ।
भवेत्प्रसन्नः शृङ्गारे स्वतः सम्भोगनामनि ॥

अद्भुते दानवीरे च प्रणयानुनयान्तरे ।
द्रव्यैः स्वस्योपभो[1]गार्हैः सत्क्रिया मानना मता ॥

सानुरागं सहर्षं च सस्मितं चैव सादरम् ।
उच्यते वचनं यत्तद्भाषामाधुर्यमुच्यते ॥

देयस्य चापरिच्छित्तिर्दत्त[2]स्यैवानभिज्ञता ।
ददतो हर्षवृद्धिर्यत्स त्याग इति कीर्तितः ॥

क्षिणोति दुःखं येनैव स क्षणः परिकीर्त्तितः ।
उद्धुनोतीति यद्दुःखमुद्धवः परिकीर्तितः ॥

उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः ।
दभ्नोति खेदयत्यन्यान् स दम्भः परिपठ्यते ॥

सुखप्रयोगचातुर्यं कृत्येष्वाहुस्तु कौशलम् ।
द्रव्यक्रियागुणादीनां हानोपादानकर्मसु ॥

सूक्ष्मार्थावासिनिर[3]तो धीव्यापारस्तु नैपुणम् ।
अर्थः प्रयोजनं यस्य[4] व्यापारोऽर्थाविनाकृतः ॥

स समर्थोऽस्य[5] ताच्छील्यात्सामर्थ्यं तस्य कथ्यते ।
विलोभन[6]मसद्रूपे सद्रूपोत्कर्षणं विदुः ॥

---

1 B रसैः स्वस्वोपयो । 2 B देय । 3 A निय । 4 C यस्मात् । 5 C थैस्य । 6 B पन ।

उल्काऽशनि[1]नृपव्याघ्रादिभिर्यश्चित्तविप्लवः ।
आतङ्कः स भवेत्सोऽपि प्रायः करुणतामियात् ॥

एकस्यैव पदार्थस्य नानारूपप्रकल्पनम् ।
वाङ्मनःकर्मभिर्यत्तच्छिल्प[2]मित्यभिधीयते ॥

लौकिके वैदिके चार्थे तथा सामयिकेऽपि च ।
सम्यक्परिचयप्रौढिर्वैदग्ध्यमिति गीयते ॥

दुस्तरस्य स्वभावेन येन केनापि कर्मणा ।
मिथ्यातर[3]णयोग्यार्थकथनं स्यात्प्रतारणम् ॥

एवं प्रकाराः कविभिरूह्या भावा यथारसम् ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने रसभेदतत्प्रकार-
स्वरूपनिर्णयो नाम तृतीयोऽधिकारः ।

---

1 उल्काशति । 2 A त्लश्विल । B त्तश्वित्त । 3 A कर ।

॥ श्रीः ॥

## अथ चतुर्थोऽधिकारः ।

---

रसालम्बनभावा[1]नामुक्ताः साधारणा गुणाः ।
सुखेप्सवस्ते[2] सर्वेऽपि[3]भोग[4]स्तत्सुखसाधनम्[5] ॥

भोगः स एष शृङ्गारविशेष इति गीयते ।
भोगोपभोगसम्भोगशब्दाः पर्यायवाचकाः ॥

सम्भोगे चापि[6] सर्वत्र जन्तूनां मामसी र[7]तिः ।
वर्तते मुख्यया वृत्त्या यूनोरेव सरागयोः ॥

तथाप्यर्थविशेषोऽयमेतेषां कथ्यते पृथक् ।
भोग्यद्रव्योपभोगो यः स भोग इति गण्यते ॥

उपभोगः स एव स्यात् देशकालसमेधितः ।
कामोपचारः सम्भोगः कामः स्त्रीपुंसयोः सुखम् ॥

सुखमानन्दसम्भेदः परपस्परविमर्दजः ।
उपचारस्तदानन्दकारकं कर्म कथ्यते ॥

सुखाश्रयाः स्युः प्रमदास्तासामामोदकारकः ।
यतः शृङ्गार एवैकस्तस्मादेष सुविस्तरम् ॥

कथ्यते शास्त्रदृष्टेन वर्त्मना चा[8]नुभूतितः ।
स्थायी रत्याह्वयो भावः स्वविभावादिवर्धितः ॥

---

1 B भूता । 2 B C प्लवन्ते । 3 A षु । 4 B गा । 5 B नाः । 6 A गश्चात् ।
7 A स्थि । 8 A वा ।

शृङ्गाररसनामा स्यात्तत्तदालम्बनाश्रयी[1] ।
नायकप्रमदाभेदाः सम्भोगस्य भिदा अपि ॥

वक्ष्यन्ते तत्स्वरूपञ्च तच्चेष्टा अपि तत्त्वतः ।
रतेः स्वरूपमाचार्यैरुक्तमत्राभिधीयते ॥

परस्परस्वसंवेद्यसुखसंवेदनात्मिका ।
याऽनुभूतिर्मिथः सैव रतिर्यूनोः सरागयोः ॥

सम्पन्नैश्वर्यसुख[2]योरशेषगुणयुक्तयोः ।
नवयौवनयोः श्लाघ्यप्रकृत्योः श्रेष्ठरूपयोः ॥

नारीपुरुषयोस्तुल्या परस्परविभाविका ।
स्पृहाह्वया चित्तवृत्ती रतिरित्यभिधीयते ॥

रतिरिच्छा भवेद्यूनोरुभयप्रार्थनात्मिका ।
यूनोः परस्पराह्लादरहोविस्रम्भकारिता ॥

सुखात्मिका मनोवृत्ती रतिरित्यभिधीयते ।
आलापलीलोपचारचेष्टादृष्टिविलोकनैः ॥

अन्योन्यभोग्यधीरेव रहः स्त्रीपुंसयो रतिः ।
इयमङ्कु[3]रिता प्रेम्णा मानात्प[4]ल्लविता पुनः[5] ॥

सकोरका[6] प्रणयतः स्नेहात्कुसुमिता भवेत् ।
रागात् फलवती चेय[7]मनुरागेण भुज्यते ॥

इ-शब्दवाच्यो मदनो माति यत्र प्रकर्षतः ।
तत्प्रेम तदधिष्ठानं रति[8]र्यूनोः परस्परम् ॥

परस्पराश्रयघनं निरूढं भाववन्धनम् ।
यदेकापायतोऽपायि त[9]त्प्रेमेति निगद्यते ॥

---

1 B यैः । 2 C गुण । 3 B माका । 4 A मनाक्प । 5 A भवेत् । 6 A प्ररोहा । 7 B चैवं । 8 A रते । 9 A कापयतो न स्यात्तत् ।

इदं तदिति सङ्कल्पो ययोर्न क्वापि दृश्यते ।
तद्भावबन्धनमिति कथयन्ति मनीषिणः ॥

एतत्प्रेम रतिं पुष्येत्तैर्विभावादिभिः पुनः ।
यदक्लिष्टं[1] विगाहेत कौटिल्यं प्रीतिकारकम् ॥

तदेव प्रेमकौटिल्यं यत्स्वातन्त्र्यं मिथः प्रियम् ।
स्वातन्त्र्यं तद्यदन्यस्य मनोरथ[2]निरोधनम् ॥

स एव मान इत्युक्तो मनोरथनिरोधनम् ।
मा नेति वीप्सया रोधो मान इत्युच्यते बुधैः ॥

ईर्ष्याप्रणयरोधे[3]न मानः स्त्रीपुंसयोर्द्विधा ।
सपत्नी[4]दर्शनस्पर्शश्रवणासहता स्थिरा ॥

ईर्ष्या स्त्रीणां तया रोध ईर्ष्यामान उदाहृतः ।
मान्यते प्रेयसा येन यत्प्रियत्वेन मन्यते ॥

मनुते यो मिमीते यस्स हि मानः प्रकीर्तितः ।
उपचारैर्मिथो यूनोर्यद्बाह्याभ्यन्तराभिधैः[5] ॥

मानप्रकर्षप्रभवरोषास्वादकषायितम् ।
प्रेम नीतं प्रकर्षं चेत्स एव प्रणयः स्मृतः ॥

येनेर्ष्यासु प्रसादः स्यात्स्वाभीष्टार्थानुकूलतः ।
प्रियेण स[6]विधीयेत समानप्रणयात्मके ॥

अयं प्रणयमानस्तु वर्णनीयो द्वयोरपि ।
ईर्ष्यामानस्तु कविभिर्योषितामेव वर्ण्यते ॥

स पुंसां यदि वर्ण्ये[7]त वैरस्यायैव कल्पते ।
स्वतोऽपि कुटिलं प्रेम किमु मानान्वये सति ॥

---

1 A B उंद D उदतिष्ठन् । 2 A स्यामनुरोध । 3 A भेदे । 4 B संपत्ति । 5. A वधेः ।
6 न । 7 B मन्ये ।

मनसो यद्द्रवा[1]द्रत्वं विषयेषु ममत्वता ।
भयशङ्कावसानात्मा स एव स्नेह उच्यते ॥

द्विधा[2] द्रवः स्यान्मनसो दर्शनात्स्पर्शनादपि ।
जतुवद्व[3]ह्निसंस्पर्शाद्दर्शनाच्चन्द्रकान्तवत् ॥

आर्द्रता शिशिरत्वं यत्सर्वावस्थासु मानसम् ।
द्विधा भवेत्स च स्नेहः कृत्रिमाकृत्रिमात्मकः[4] ॥

सोपाधिः कृत्रिमः स्नेहो निरुपाधिरकृत्रिमः ।
उपाधौ विनिवृत्ते तु तज्जन्यो विनिवर्तते ॥

स्नेहः स्वभावजो यावद्द्रव्यभावी भविष्यति ।
शङ्का स्यात्कृतके तत्तद्विक्रियान्वेषणात्मिका ॥

स्वाभाविके भयं तत्तद्विषयादेः प्रमादतः ।
एकाश्रयः स च क्वापि क्वापि स्यादुभयाश्रयः ॥

एकाश्रयस्तिर्यगादौ मर्त्यादावुभयाश्रयः ।
आश्रयाद्वासनातश्च जायन्ते तत्र तत्र तु ॥

एकाश्रयो वासनातो द्व्याश्रयो हेतुभिर्भवेत् ।
स तु स्नेहस्त्रिधा प्रौढमध्यमन्दविभागतः ॥

विदेशस्थे मृते वापि दुर्बले प्रतिवोगिनि[5] ।
धर्मिणः क्लेशकारी यः स प्रौढः स्नेह उच्यते ॥

तत्तद्वियोगजं दुःखं तादृशं प्रतियोगिना[6] ।
अनुभूयातिवृत्त[7]श्चेत्स्नेहो मध्यः प्रकीर्तितः ॥

तदात्वव्यसनापत्तिमात्रको मन्द उच्यते ।
स्थिरश्च गत्वरश्चेति नश्वरश्चेति स त्रिधा ॥

---

1 B मानसो यद्रुपा । 2 A विधा । 3 A भश्कद्व । 4 B मत्वतः । 5 A स्वेतराश्रये । 6 A नः । 7 त्ति ।

उत्तमे मध्यमे नीचे तत्तत्कार्यवशाद्भवेत्।
उत्तमे वृद्धिमभ्येति नोपकारानपेक्षते ॥

उपकारं न जानाति स स्नेहः स्थिर उ[1]च्यते।
बहूपकारप्रभव उपकारानपेक्षते ॥

मध्यमे वर्धितः किञ्चित्स स्नेहो गत्वरो भवेत्।
दोषश्रवणमात्रेण सौमनस्यं विहाय यः ॥

प्रातिकूल्ये प्रवर्तेत स स्नेहो नश्वरो भवेत्।
नीचादावस्थिरः प्रायः स्नेहो ज्यायसि तु स्थिरः ॥

एवं पुत्रकलत्रादौ पित्रा[2]दावपि दृश्यताम्[3]।
स एव चेद्गुणद्रव्यदेशकालादिभिर्हृदि[4] ॥

रज्यते दीप्यते चित्ते स राग इति कथ्यते।
सुखदुःखात्मकं भोग्यं सुखत्वेनाभिमन्यते ॥

येन रागः स इत्युक्तो रञ्जनाद्विषयात्मनोः।
नीलीकुसुम्भमञ्जिष्ठारागौपम्येन स त्रिधा ॥

क्षालितो यस्तु नापैति यश्च नातीव शोभते।
नीलीरागः स एवेति कथितो रागवेदिभिः ॥

योऽपैति क्षालितः क्षिप्रमध्यक्षं योऽपि शोभते।
कुसुम्भराग एवैष इति विद्वद्भिरीरितः ॥

अतीव शोभते यस्तु नापैति क्षालितोऽपि सन्।
स एव कविभिः सर्वैर्मञ्जिष्ठाराग उच्यते ॥

ज्येष्ठो मञ्जिष्ठरागः स्यान्नीलीरागस्तु मध्यमः।
कुसुम्भरागः कविभिरधमः परिकीर्तितः ॥

---

1 A तिरु। 2 A चित्रा। 3 B भृत्यता। 4 B भिस्त्रिभिः। 5 B नयात्मके।

रागोऽनुवृत्तोऽविच्छिन्नमनुराग उदाहृतः ।
अनुरूपोऽथवा राग इति वा निर्णयो भवेत् ॥

स तु प्रायः स्वसंवेद्यो यूनोरन्योन्यरक्तिमा ।
अन्यत्रैष प्रयुज्येत गौणवृत्तिव्यपाश्रयात् ॥

एते प्रेमादयो भावाः शृङ्गारालम्बनाश्रयाः ।
भट्टाभिनवगुप्तार्यपादैरेव प्रकाशिताः ॥

[1]अथाऽयं वर्त्मना तेषां शृङ्गारोऽपि प्रदर्श्यते ।
रम्यदेशकलाकालवेषभोगादिसेवनैः ॥

प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः ।
प्रकृष्यमाणः शृङ्गारो मधुराङ्गविचेष्टितैः ॥

वेलारामसरिच्छैलपुरराष्ट्राम्बुराशयः ।
कान्ताराश्रमहर्म्यादिर्देशाः कविभिरीरिताः ॥

कला सङ्गीतविद्या[2]दिः परस्तात्सापि वक्ष्यते ।
कालोप्यृतुदिवारात्रिचन्द्रार्कास्तमयादयः ॥

वेषोऽलङ्कारयुक्तिः स्याद्वयोर्जातिकुलाश्रया ।
उद्यानयात्रामदिरावारि[3]केलिरतोत्सवाः ॥

विप्रलम्भो विवाहश्च[4] चेष्टा बाह्याः प्रकीर्तिताः ।
आभ्यन्तराश्च वक्ष्यन्ते रक्तारक्तासमुत्थिताः ॥

सरितः पुलिनं वेला कान्ताराराममूधराः ।
लतागृहाणि चित्राणि शय्याः किसलयाचिताः ॥

दिवा विहारदेशाः स्युर्हर्म्यप्रासाद[5]भूमयः ।
मण्टपो भवनं[6] गर्भगृहं वासगृहाणि च ॥

---

1 A omits this line । 2 A वाद्या । 3 C पान । 4 B म्भा विवाहाश्च । 5 A प्राकार ।
6 A मलिका B मालिका ।

सङ्गीतशाला वारान्तःपुरिका भवनानि च ।
निशाविहारदेशाः स्युः सम्भोगग्राम[1]माश्रिताः ॥

उद्यानयात्रा सलिलक्रीडा पुष्पापचायिका ।
द्यूतादयो दिवाचेष्टा निशासु मदिरादयः ॥

चेष्टाः स्युर्नायकादीनामभिसाराः पृथक्पृथक् ।
यदा विशेष्यते देशः कालतत्तद्गुणादिभिः ॥

रसोऽभिधीयते तत्र तन्नाम्ना रसकोविदैः ।
गुणद्रव्यक्रियाभेदात्सविशेषस्त्रिधा भवेत् ॥

चन्द्रिका कोकिलालापो हंससारसनिस्वनः ।
भ्रमद्भ्रमरिकागीतं गन्धाः सर्वसुखावहाः ॥

केकारावादयः कालगुणाः कविभिरीरिताः ।
चन्दनानि सुगन्धीनि मृदुला च शिलातली ॥

चम्पकाशोकपुन्नागचूताः कुरबकादयः ।
प्रवालपुष्पभरिता लतिका मल्लिकादयः ॥

भवनादीनि रम्याणि शयनानि मृदूनि च ।
हेमरत्नमयी भूषा पुष्पाणि सुरभीणि च ॥

मृदूनि च दुकूलानि स्वादूनि सलिलानि च ।
इत्यादयो विभाव्यन्ते द्रव्याणीति मनीषिभिः ॥

उद्यानयात्रा शक्रार्चा[2] मदिरापानकेलयः ।
रतोत्सवोपहाराश्च व्यापाराश्चाप्यलङ्कृतौ ॥

चेष्टितान्येवमादीनि क्रियेति परिभाष्यते ।
गन्धाः सुरभयो वातास्तरवः कुसुमाचिताः[3] ॥

---

1 A सङ्केतग्राम । 2 C चक्राश्च । 3 A मावहाः । B माञ्चिताः ।

भ्रमराः कोकिला हर्म्यं मृद्वी शय्या सुरासवः ।
इत्यादयो विभावाः स्युर्वसन्ते रागदीपनाः ॥

उद्यानसलिलक्रीडा च्छायाः किसलयास्तराः ।
एलालवङ्गकर्पूरहिमाम्भश्चन्दनादयः ॥

लतागृहाणि चित्राणि पुराणाश्चैव शीथवः ।
धारागृहं हिमगृहं मृणालमणिकुट्टिमे ॥

फुल्लकेसरकल्हारपाटलेन्दीवरादयः ।
मुक्तागुणवती भूषा वासो गैरिकरूषितम् ॥

इत्यादयः स्युः संसृष्टा ग्रीष्मे रागप्रदीपनाः ।
कदम्बकेतकीलोध्रकदलीकुटजादयः ॥

शिखिनः शाद्वलं शक्रगोपाश्च गिरिनिर्झराः ।
तटाकानि च पूर्णानि वहन्त्यः सरितस्तथा ॥

वारिदा वारिधाराश्च तटितो मेघगर्जितम् ।
माद्यन्मतङ्गजक्रीडा नदद्गोवृषभध्वनिः ॥

[1]पोप्लूयमानहरिणाः श्यामलानि वनानि च ।
शाल्मलीतूलशयनं धूपाः कालागरूत्थिताः ॥

प्रच्छदाच्छादनपटो मञ्जिष्ठारागरूषितः[2] ।
पद्मरागमयी भूषा क्वचिच्च विरलैव सा ॥

इत्यादयः प्रावृषि स्युर्विभावा रागदीपनाः ।
चन्द्रिका मृदुला वाताः[3] पद्मिन्यः समरालिकाः[4] ॥

प्रसन्नं वारि पुलिनं नलिनीतलिमानि च ।
वेला सरित्तटारामा भुवश्चाभ्यानकर्दमाः ॥

---

1 A omits this line । 2 C ता: । 3 A लांवर्ता: । 4 B C समृणालिका: ।

स्फूर्जन्मृगमदामोदो हंससारसनिस्वनः।
पुण्ड्रेक्षवः क्षरन्मुक्तामणयः पाकपाण्डराः॥

निष्पन्नानि च सस्यानि पन्थानश्च विकर्दमाः।
ललिता नातिशीतोष्णा शय्या केलिवसुन्धरा॥

भूषा मरकताश्लिष्ट[1]वैडूर्यमणिमालिनी।
विमलानि दुकूलानि गन्धा मृगमदादयः॥

विभावाः शरदि प्रायः संसृष्टा रागदीपनाः।
गन्धपुष्पाणि वासांसि भूषणं शयानानि च॥

सङ्कीर्णान्यनुभूयन्ते हेमन्ते शिशिरेऽपि च[2]।
रसोत्कर्षो विभावस्य प्राधान्यद्वारतो भवेत्॥

एकस्य वा द्वयोर्वापि बहूनां वा स दृश्यते।
सदृशैश्च[3] विभावाद्यै रसोत्कर्षः कदाचन॥

इतरेषाञ्च भावानामेवं भावी रसोदयः।
वियोगायोगसंभोगैः शृङ्गारो भिद्यते त्रिधा॥

परस्परं विभावाद्यैर्यूनोरुद्धुतरागयोः।
असङ्गतिरयोगोऽस्मिन्दशावस्था द्वयोरपि॥

साक्षात्प्रति[4]कृतिस्वप्नच्छायामायागुणादिभिः।
नायिकाया नायकस्य दर्शनं स्यात्परस्परम्॥

दशावस्थत्वमाचार्यैः प्रायोवृत्त्या तु दर्शितम्[5]।
महाकविप्रबन्धेषु दृश्यन्ते तास्त्वनेकधा[6]॥

वियोगो विप्रकर्षः स्याद्यूनोः सम्भोगमग्नयोः।
वियोगोऽपि द्विधा मानप्रवासकृतभेदतः॥

---

1 B ष्टा। 2 C शिशिरेपि च तादृशैः। 3 C सहितैश्च। 4 B C साच प्रति।
5 B C निदर्शितम्। 6 C द्वनन्तता।

तत्र प्रणयमानः स्यात्कोपोपहतयोर्द्वयोः ।
स्त्रीणामीर्ष्याकृतो मानः कार्योऽन्यासङ्गिनि प्रिये ॥

सोऽपि त्रिधाऽनुमाध्यक्षश्रवणादवगम्यते ।
गोत्रस्खलनभोगाङ्कोत्स्वप्नायितविभावितः ॥

त्रिधाऽनुमानिकोऽध्यक्षः साक्षादिन्द्रियगोचरः ।
दासीसख्यादिमुखतः श्रुतिः श्रवणमुच्यते ॥

यथोत्तरो गुरुः[1] षड्भिरुपायैस्तदुपाचरेत् ।
साम्ना दानेन भेदेन[2] नत्युपेक्षारसान्तरैः ॥

तत्र प्रियवचः साम भेदः स्यात्सख्युपग्रहः[3] ।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥

सामादौ तु परिक्षीणे स्यादुपेक्षाऽवधीरणम् ।
रभसत्रासहर्षाद्यैः कोपभ्रंशो रसान्तरम् ॥

प्रवासो भिन्नदेशत्वं तच्छापाद्बुद्धिपूर्वतः ।
सम्भ्रमादपि तत्रैष बुद्धिपूर्वस्त्रिधा मतः ॥

भावी भवन् भूत इति कालत्रितयसङ्गतेः ।
स्वरूपाद्यन्यथाभावकरणं शाप ईरितः ॥

सम्भ्रमः सहसोत्पन्नो दिव्यमानुषविप्लवः ।
वियोगभेदो मरणमिति केचिन्न तद्भवेत् ॥

मृते त्वन्यत्र यत्रान्यः[4] प्रलपेच्छोक एव सः ।
साधारणोऽयमुभयोः प्रवासः शापसम्भवः ॥

सम्भ्रमे बुद्धिपूर्वे च[5] कार्श्यश्वासाश्रुनिर्गमाः ।
लम्बालकादिकाः स्त्रीणां वर्ण्यन्ते कविपुङ्गवैः ॥

---

1 A B गुणः । 2 A B मानेन । 3 C ख्युपार्जनम् । 4 B तत्रान्यः । 5 C मेण प्रवासे तु ।

साधारण्याद्विभावादेरत्रायोगवियोगयोः ।
करुणस्यानुरूप्ये[1]ऽपि रतिस्थाय्यनुवृत्तितः ॥

एतौ शृङ्गारभेदौ स्त इति सत्कविनिर्णयः ।
अतः शृङ्गारसंज्ञाऽत्र[2] ग्रामान्ते ग्रामशब्दवत् ॥

मरणं यदि सापेक्षं प्रत्युज्जीवनकाङ्क्षया ।
तद्वर्ण्यते वियोगोत्थदुःखसाधारणात्मकम् ॥

कामः स एष सम्भोगः स चतुर्धा विभज्यते ।
यूनोः परस्परस्पर्शविशेषविषयीकृतः[3] ॥

सौख्याभिमानसङ्कल्पफलवान्काम इष्यते ।
स मितः सङ्करश्चेति सम्पन्नश्च समृद्धिमान् ॥

परस्परस्योपचारैर्यूनोर्यत् साध्वसादिभिः ।
मितं[4] प्रयुज्यते भोगे प्रथमे स मितो भवेत् ॥

प्रसादेऽपि व्यलीकादिस्मृतेः[5] कोपानुवर्तनात् ।
सङ्कीर्यते यः सम्भो[6]गस्तस्मात्सङ्कर ईरितः ॥

सम्पन्नकामैरायातैः प्रोषितैरुपभुज्यते ।
सम्पन्नमेव यत्तस्मात्सम्पन्न इति कथ्यते ॥

प्रत्युज्जीवनहर्षादेः प्रवृद्धो मृतजीवतोः ।
दीपनातिशयैर्दीप्तः सम्भोगः स्यात्समृद्धिमान् ॥

चेष्टाविशेषाः सम्भोगे चुम्बनालिङ्गनादयः ।
विकाराः स्तम्भरोमाञ्चस्वेदाः स्युः साध्वसादयः ॥

वियोगे शिशिराचारचिन्तानिश्वसितादयः ।
विकाराः[7] स्तम्भवैस्वर्यकम्पाश्रुप्रलयादयः ॥

---

1 A B नकूल्ल्ये । 2 A B संज्ञौ तौ । 3 A षये कृतम् । 4 A मिथः । 5 A दिःस्मृतः । 6 A त्संभो । 7 BC विभावाः ।

तैस्तैरुपक्रमैर्यूनो रक्तयोश्चेदस[1]ङ्गमे ।
दशधा मन्मथावस्था भवेद्द्वादशधाऽथ वा[2] ॥

इच्छोत्कण्ठाभिलाषाश्च चिन्ता स्मृतिगुणस्तुती ।
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ॥

जाड्यं मरणमित्यादि द्वे कैश्चिद्वर्जिते बुधैः ।
यदक्षं यत्र संसृष्टं[3] तत्रत्यगुणसंपदा ॥

मनसः स्पन्दनैकाग्र्यमिच्छेति परिभाष्यते ।
सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते[4] ॥

तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ।
अन्तस्सम्भोगसङ्कल्पः तत्कथाशाविलो[5]कनम् ॥

अङ्गग्लानिर्मनोरक्तिर्मनोरथविचिन्तनम् ।
अधिजानुकरा[6]लम्बिकपोलतलमाननम् ॥

प्रसन्नमुखरागश्च स्वेदोष्मा गद्गदा च वाक् ।
उत्कण्ठानुभवा भावाः कथ्यन्ते भावकोविदैः ॥

सङ्कल्पेच्छासमुद्भूतव्यवसायपुरस्सरः[7] ।
यस्तत्स[8]मागमोपायः सोऽभिलाषः प्रकीर्तितः ॥

मुहुरन्तः प्रविशति निर्गच्छति मुहुःपथि ।
करोति मान्मथीं चेष्टां तद्दृष्टिपथवर्तिनी ॥

अलङ्करोति चात्मानमास्ते चैकाकिनी क्वचित् ।
अभिलाषभवा भावाः कथ्यन्ते मान्मथा बुधैः ॥

केनोपायेन तत्प्राप्ति[9]र्ममैव स भवेत्कथम् ।
किं स वक्ष्यति किं वक्ष्ये[10]दूतादि प्रेषयामि किम् ॥

---

1 C रतिभाजोरस । 2 C धापिवा । 3 AB सप्रेष्ठ । 4 B तिमनः क्रिया । 5 A तत्पथस्यावलो । 6 C भुजा । 7 B स्सरम् । 8 A यत्तत्स । 9 A मर्म वै । 10 A वक्ष्येत् ।

किं तेनेति वितर्कोऽयं हृदि चिन्तेति कथ्यते ।
बध्नाति मेखलादीनि परामृशति पाणिना ॥

स्पृशत्यूरूंश्च नाभिंश्च नीवीं विस्रस्य नह्यति ।
अन्तर्बाष्पोद्गमं चक्षुराकेकरकनीनिकम् ॥

अन्तर्बहिः पुरः पश्चादनालम्बनवीक्षणम् ।
चिन्तासमुत्थिता ह्येते भावाः स्युर्मन्मथाश्रयाः ॥

सुखदुःखादिभावानां देशकालानुषङ्गिणाम् ।
अनुभूयातिवृत्तानां विमर्शो मनसा स्मृतिः ॥

ध्यायति श्वसिति द्वेष्टि कार्यमन्यच्च निन्दति ।
न भुङ्क्ते नापि निद्राति न प्रीतिं लभते क्वचित् ॥

एते ह्यनुस्मृतिभवा भावा मन्मथकल्पिताः ।
रूपौदार्यगुणैर्लीलाचेष्टाहसितविभ्रमैः[1] ॥

सौन्दर्यालापमाधुर्यैर्नास्त्यन्यस्तत्समः पुमान् ।
इति यत्रेदृशी वाणी भवेत्सैव गुणस्तुतिः ॥

गुणान् गणयति स्वैरं वीक्षते भावमन्थरम् ।
रोमाञ्चो गद्गदपदा वाक्स्वेदश्च कपोलयोः ॥

विस्रम्भकथनं दूत्या तत्समागमचिन्तनम् ।
एवङ्गुणस्तुतिभवा भावा मदनसूचनाः ॥

उद्वेगो मनसः कम्पः क्रोधशोकभयादिजः ।
निश्वासोन्निद्रताचिन्ताः स्तम्भो वैवर्ण्यमश्रु च ॥

न शय्यासनयोः प्रीतिर्हृल्लेखो[2] दीनतापि च ।
एवमुद्वेगजा भावाः कन्दर्पपरिकल्पि[3]ताः ॥

---

1 A B C वीक्षितैः। 2 A ल्लेपो। 3 A B दर्पात्कन्दर्पकल्पि।

इह दृष्टमिहाश्लिष्टमिहागतमिह स्थितम् ।
इह निर्वृत्तमत्रैव शयितं चाप्यलङ्कृतम् ॥

एवमादीनि वाक्यानि प्रलाप इति कथ्यते ।
अन्तर्बहिः पुरः पश्चाद्दूरादारात् समीपतः ॥

क्वचित्पश्यति यात्येव क्वचित्काप्यवतिष्ठते ।
आस्ते क्वचित्क्वचिच्छेते क्वचिन्निन्दति नन्दति ॥

इतश्चेतश्च रथ्यायां रौति भ्राम्यति धावति ।
एवं विलापजा भावा मनोभववशानुगाः ॥

उन्मादो विरहोत्थो यः सोऽतस्मिं[1]स्तद्ग्रहाग्रहः ।
सर्वावस्थासु सर्वत्र सर्वथा सर्वदा मनः ॥

तद्गतं तत्कथाह्लादि प्रद्वेष्टीष्टानपीतरान् ।
दीर्घं मुहुर्निश्वसिति तिष्ठत्यनिमिषेक्षणम्[2] ॥

विहारकाले रुदति क्रन्दति ध्यायति क्षणम् ।
गायति स्वदते तस्मिन् हसति स्तौति[3] मुह्यति ॥

इत्थमुन्मादजा भावाः कथिता नाट्यकोविदैः ।
कामै[4]र्विलोभनं द्रव्यैः सामदानो[5]पबृंहितैः ॥

प्रेषितैरपि केनापि हेतुना च निराकृतैः ।
अभीष्टसङ्गमाभावाद्व्याधिः समुपजायते ॥

मोहोऽङ्गदाहः सन्तापः शिरश्शूलश्च वेदना ।
मुमूर्षा[6]जीवितोपेक्षा पतनं यत्र कुत्रचित् ॥

स्रस्ताक्षता[7] निश्वसितं स्तम्भश्च परिदेवितम् ।
एते व्याधिभवा भावाः प्रायः शृङ्गारयोनिजाः ॥

---

1 B C स तस्मिं । 2 A क्षणा । 3 A स्नाति । 4 A काम्यै । 5 A भनैः सामदानमानो । 6 A मूर्छ । 7 A क्षिता ।

जाड्यमप्रतिपत्तिः स्यात्सर्वकार्येषु सर्वदा ।
इष्टानिष्टान्न जानाति सुखदुःखे न वेत्ति च ॥

प्रश्ने न किञ्चित्प्रब्रूते न शृणोति न पश्यति ।
हाहेति भाषणाकाण्डहुङ्कारः शिथिलाङ्गता ॥

कार्श्यवैवर्ण्यनिश्वासाः स्तम्भः स्पर्शानभिज्ञता ।
एते जाड्यभवा भावा मीनकेतनमाश्रिताः[1] ॥

आस्ववस्थासु विहितैः प्रतीकारैः समागमः ।
न भवेद्यदि कामाग्निदग्ध[2]योर्मरणं भवेत् ॥

अमङ्गलं स्यान्मरणमिति यूनोर्न कल्प्यते ।
समग्रवर्णनाधारः शृङ्गारो वृद्धिमश्नुते ॥

उत्कर्षः पुष्टिसम्पच्चेत्येतेषां क्वापि सम्भवः ।
पात्रादीनां गुणैः[3] पूर्णैरसवृद्धिर्विभाव्यते ॥

रसोत्कर्षो भवेदैश्वर्यैर्गुणैः सर्वत्र पुष्कलैः ।
परिपूर्णगुणात्कालाद्रसस[4]म्पद्विभाव्यते ॥

देशकालानुकूलाभिश्चेष्टाभिः पुष्टिमश्नुते ।
देशकालगुणाश्चोक्ताश्चेष्टाः काश्चिच दर्शिताः ॥

पात्राणि तद्गुणान् सर्वान्कथयामि यथार्थतः ।
नायको नायिका सख्यो विटादि[5]सचिवा अपि ॥

दूत्यश्च दूताश्चेत्येतत्पात्रं नाट्यस्य कथ्यते ।
ज्येष्ठो मध्यः कनिष्ठश्च त्रिधा नायक उच्यते ॥

उक्तसर्वगुणोपेतो ज्येष्ठ इत्यभिधीयते ।
द्वित्रैर्वा पञ्चषैर्वापि गुणैर्हीनोऽथ मध्यमः ॥

1 A B मोहिताः । 2 B C मादिदम्प । 3 A गणैः । 4 B लादूव्यांस । 5 B विभाति ।

हीनो गुणैश्च बहुभिरधमः परिकीर्तितः ।
चतुर्धा धीरललितशान्तोदात्तोद्धताः[1] क्रमात् ॥

चतुर्धाभेदभिन्नस्य तस्य साधारणा गुणाः ।
[2]सर्वोऽपि वस्तुललितस्तस्यैते ह्याभिगामिकाः ॥

[3]साङ्ग्रामिका गुणाः सर्वे तस्यैतेभ्योऽभिगामिकाः ।
साङ्ग्रामिकाः स्युरुभयोरुद्धतोदात्तयोः स्वतः ॥

शान्तस्य ललित[4]स्यापि द्वयोस्ते ह्याभिगामिकाः ।
इति केचिद्वदन्त्यन्ये सर्वे साधारणा इति ॥

गुणान् साङ्ग्रामिकान्वक्ष्ये परस्तादाभिगामिकान् ।
राजभोगेष्वनिश्चिन्तो यौवनाभोगभूषितः ॥

विलासी भोगरसिको ललितः स्याद्र[5]तिप्रियः ।
कलासक्तः क्षमा[6]युक्तो गम्भीरश्च[7] क्वचित्क्वचित् ॥

धीरशान्तो भवेत्क्वापि ललितादिगुणैर्युतः ।
महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ॥

स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ।
विकत्थनश्चलश्चण्डो मायाच्छद्मपरायणः ॥

समत्सरश्चाहङ्कारी धीरोद्धत इतीरितः ।
विशेषलक्षणेष्वेषु ये सामान्यगुणाः स्मृताः[8] ॥

ते तन्नायकभेदेषु कल्पनीयाः क्वचित्क्वचित् ।
समानानां गुणानां ये मायाच्छद्मादयो गुणाः ॥

विरोधिनस्तेऽसामान्या गुणाः स्युर्नायकेषु तु ।
सङ्गीतान्तःपुरासक्तो युद्धादिष्वतिनादृतः ॥

---

1 A तः शान्तः शठ इति । 2 A omits this line । 3 C omits this line । 4 A B न्त्या ललितक । 5 B C स्तद्र । 6 B क्रिया । 7 C रोपि । 8 B C D. read after this अमात्यायत्तसिद्धिः स्याच्छृङ्गारी ललितश्च ते ।

अमात्यायत्तसिद्धिः स्यात् शृङ्गारी ललितः स्मृतः ।
शमप्रधानः क्लेशादिसहिष्णुश्च विवेचकः ॥

धीरशान्तो भवेदेषां धैर्यं साधारणो गुणः ।
उदात्तो विजिगीषुः स्यादुभयायत्तसिद्धिकः ॥

अकृत्य[1]कारी स्वायत्तसिद्धिर्धीरोद्धतो भवेत् ।
शृङ्गारापेक्षया तेषां नायिकासु च[2] वृत्तिभिः ॥

अनुकूलादिभेदेन चातुर्विध्यं प्रसिद्ध्यति ।
अनुकूलो दक्षिणश्च शठो धृष्ट उदीर्यते ॥

एवं षोडशधा भिन्ना ज्येष्ठादित्रयसंयुताः ।
एतेऽष्टचत्वारिंशत्[3] स्युर्नायकाः कविकल्पिताः ॥

स्वरूपमनुकूलादेः परस्तादभिधास्यते ।
पताकानायकस्तेषामुपनायक उच्यते ॥

तस्यैवानुचरो भक्तः किञ्चिन्न्यूनश्च तद्गुणैः ।
शृङ्गारापेक्षया तेऽपि[4] कथ्यन्ते बहुधा पुनः[5] ॥

यत्रैव विनियुज्यन्ते वक्ष्यन्ते तत्र तत्र ते ।
एतेषां नर्म[6]सचिवा ऋत्विजः सपुरोहिताः ॥

तपस्विनो वेदविदो ब्राह्मणा व्रतिनोऽपि च ।
अन्ये चाश्रमिणः सर्वे धर्मस्य सचिवाः स्मृताः ॥

मन्त्रिणः सैन्यपालाश्च कुमाराः सुहृदोऽपि च ।
अर्थस्य सचिवाः प्रोक्तास्तत्तदर्थानुषङ्गिणः ॥

एते स्युः कामसचिवाः पीठमर्दो विटस्तथा ।
विदूषकश्च सख्यादिपरिवारेण संयुतः ॥

---

1 A अवृत्ति । 2 A स्वस्व । 3 A शाः । 4 A केऽपि । B तेषाम् । 5 A परैः ।
6 A धर्मे ।

श्रृङ्गारापेक्षया तेषां स्वरूपं कथ्यतेऽधुना ।
एकविद्यो विटस्तस्य[1] कामतन्त्रेषु कौशलम् ॥

विकृताङ्गवचो[2]वेषैर्हास्यकृत्स्याद्विदूषकः ।
पीठमध्या[3]स्य पुरतः प्रयोक्ता नायकादिषु ॥

स पीठमर्दो विश्वास्यः[4] कुपितस्त्रीप्रसादकः ।
कथिनी लिङ्गिनी दासी कुमारी कारुशिल्पिनी ॥

पाषण्डिनी प्रातिवेश्या सखी रङ्गोपजीविनी ।
धात्रेयिका प्रेक्षणिका दूत्यः स्त्रीपुंसयोर्मिथः ॥

न दीनं ना[5]र्थवन्तं च न चा[6]तिचतुरं जडम् ।
दूतं वापि हि दूतीं वा कदाचन च सन्दिशेत् ॥

देशकालज्ञता भाषामधुरत्वं विदग्धता ।
प्रोत्साहनेषु प्रौढत्वं तथा संवृतमन्त्रता ॥

यथोक्तकथनं चेति गुणा दौत्यं प्रपश्यताम् ।
नवानुरागे मानादिविरहे वा समागमः ॥

[7]नानोपायैर्विधेयः स्याद्दूतीभिः पुरुषाश्रय[8]ः ।
उत्सवे रात्रिसञ्चार उद्याने ज्ञातिवेश्मनि ॥

धात्रीगृहे च सख्याश्च तथा चैव निमन्त्रणे ।
व्याध्यादिव्यपदेशेन शून्यागारनिवेशने ॥

नवानुरागे कर्तव्यो[9] नृणां प्रथमसङ्गमः ।
स्वाऽन्या साधारणा चेति त्रिविधा नायिका मता ॥

मुग्धा मध्या प्रगल्भेति त्रेधा स्वीया विभज्यते ।
मध्या त्वधीरा धीरा च धीराधीरेति भिद्यते ॥

---

1 A त्वम् । 2 A यो । 3 B मर्दो । 4 A श्वस्य । 5 C दीनं नचा । 6 A जा ।
7 C omits five lines । 8 B शयः । 9 A व्ये ।

भिन्ने ज्येष्ठाकनिष्ठेति प्रगल्भा मध्यमापि च ।
तयोरुदात्तललितशान्तिभेदैस्त्रिधा भिदा ॥

ऊढा च कन्यका चेति द्विधैवा[1]न्याङ्गना भवेत् ।
साधारणस्त्री गणिका साप्ये[2]कैव न भिद्यते ॥

त्रयोदशविधा स्वीया द्विविधान्याङ्गना मता ।
एका वेश्या पुनश्चाष्टाववस्थाभेदतोऽपिताः ॥

पुनश्च ताः त्रिधा[3] सर्वा उत्तमाधममध्यमाः ।
इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा ॥

सङ्ख्येयं रुद्रटाचार्यैरुपभोगाय दर्शिता ।
अन्या त्र्यवस्थैवेत्येके कथयन्ति मनीषिणः ॥

प्रथमायामवस्थायामन्या स्याद्विरहोन्मनाः ।
ततोऽभिसारिका भूत्वा सङ्केते पश्यति प्रियम् ॥

सङ्केताच्चेत्परिभ्रष्टा विप्रलब्धा भवेत्पुनः ।
पराधीनतया तस्या नान्याऽवस्था विलोक्यते ॥

स्वीयं सुवृत्तमु[4]ल्लङ्घ्य यद्येकेन[5] चिरं वसेत् ।
साऽन्या स्याद्गणिकाऽप्येवं भवेत्साऽन्या भविष्यति ॥

साधारणस्त्री गणिका सा वित्तं परमिच्छति ।
निर्गुणेऽपि न विद्वेषो न रागोऽस्या गुणिन्यपि ॥

शृङ्गाराभास एव स्यान्न[6] शृङ्गारः कदाचन ।
इति द्विषन्त[7]मुद्दिश्य प्राह श्रीरुद्रटः कविः ॥

रागशृङ्गारनिर्मुक्ता यदि[8]स्युर्गणिकाः स्वतः ।
योषित्सामान्यतो जातः स्मरः किं भक्षितः श्वभिः[9] ॥

1 A विधैवाङ्ग । 2 A सख्ये । 3 A स्त्रियः । 4 B यां स्ववृत्तमु । 5 A तेन । 6 A ङ्गाभावात्स एवास्या न । 7 B विध । 8 A B इति । 9 A श्व हि ।

किन्तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्मारित[1]परस्त्रीकं सुरतं[2]जायते नृणाम् ॥

कुप्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
उज्जीवितः पुनः कामो मन्ये वेश्याविलोकितैः ॥

कलाविलासवैदग्ध्यवसतिर्ग[3]णिकाजनः ।
पुंसां सौभाग्यवैदग्ध्यनिकषः[4]केन निर्मितः ॥

ईर्ष्या कुलस्त्रीषु न नायकस्य
निश्शङ्ककेलिर्न पराङ्गनासु ।

वेश्यासु चैतद्वितयं प्ररूढं
सर्वस्वमेतास्तदहो स्मरस्य ॥

समानकुलशीलेन येनोढा वह्निसाक्षिकम् ।
सा स्वीया तस्य सैवान्या भवेद्भर्तृ[5]व्यतिक्रमे ॥

व्यतिक्रमे तु कन्यायाः साप्यन्या न[6] कुलाङ्गना ।
भोगेप्सवः स्युः स्वीयाश्चेदन्या भोगधनेप्सवः ॥

अर्थेप्सवः स्युर्गणिकास्तास्तथा वर्णयेत्कविः ।
न मुञ्चति प्रियं स्वीया सम्पत्स्वपि विपत्स्वपि ॥

शीलसत्यार्जवोपेता रहःसम्भोगलालसा ।
मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि ॥

यतते रतिचेष्टासु पत्युर्व्रीलामनोहरम्[7] ।
अपराधे[8] रुदत्येव न वदत्यप्रियं[9] प्रिये ॥

प्रियं प्रार्थयते मध्या रतिव्यायामकेलिषु ।
स्वयं पुनः प्रवर्तेत सहते सुरतश्रमम् ॥

---

1 B तम् । 2 B ते । 3 न्ति ग । 4 र्षः । 5 A त्कर्तृ । B भाव । 6 A नान ।
B न्या तु । 7 B रा । 8 C द्धे । 9 A देच्च प्रिया ।

सोपालम्भं वचो[1] वक्ति सापराधे प्रिये रुषा[2] ।
प्रगल्भाऽऽरभते[3] स्वैरं बाह्ये चाभ्यन्तरे रते ॥

अपराधे प्रियं[4] रोषात् भाषते परुषं[5] मुहुः ।
धीरा रतिपरिश्रान्ता मूर्च्छिताऽपि पुनःपुनः ॥

प्रोत्साहयति वा स्वैरं[6] यतते पुरुषायिते ।
उपचारैः सविनयैरथवाऽक्रमभाषितैः[7] ॥

खेदयत्येव नेक्षेत[8] सापराधं प्रियं रुषा[9] ।
अधीरा दयिताश्लिष्टा रतिचेष्टा न बुद्ध्यति ॥

मोदते मुह्यति मुहुः स्वेदरोमाञ्चमन्थरम् ।
अपराधे सति मुहुर्हुं हुमित्येव भाषते[10] ॥

सखीसमक्षं कुरुते केशाकर्षणताडनम् ।
धीराधीरा तदुभयं व्यनक्ति रतिचेष्टितम् ॥

उदात्तादिभिदाः केचित्सर्वासामिति जानते[11] ।
तेऽपि प्रायेण दृश्यन्ते सर्वासामपि कार्यतः ॥

कन्योढाचेष्टितं मुग्धाचेष्टितेषु प्रवक्ष्यते[12] ।
वेश्याऽन्यदीयाचेष्टाश्च रक्तारक्तादिलक्षणे ॥

वक्ष्यामस्तत्र तत्रैव विद्वद्भिरवलोक्यताम् ।
अल्पान्तरत्वादन्यासामवस्थानां स्वभावतः ॥

अल्पवैषम्यतोऽवस्थाभिदा न पृथगीरिताः ।
उदात्ता केशवासोऽङ्गमाल्यभूषासु सादरा ॥

शय्याभरण[13]संस्कारपरिबर्हसमेधिनी ।
स्थिरस्नेहा कृतज्ञा च ददात्याश्रितवत्सला ॥

---

1 A B म्भवचो । 2 A B मिथः । 3 B रमते । 4 A B प्रिया । 5 B षान् । 6 A प्रियं प्रोत्साहयति च । 7 C रर्धापाङ्गावलोकनैः । 8 C वक्रसोल्लुण्ठनं वक्ति । 9 A क्रुधा । 10 B णम् । 11 B यते । 12 B ति । 13 A B वन ।

मानयन्ती च मानार्हान्नित्योत्सवरताऽपि च ।
बन्धुसम्बाधमुदिता कृतज्ञा प्रियवादिनी ॥

एवमादिगुणैर्युक्तामुदात्तां परिचक्षते ।
सौन्दर्यैश्वर्यसौभाग्यविद्याभोगैरहङ्कृता ॥

विद्याभिजनसम्पन्ना[1]न्बन्धूनप्यवमन्यते ।
गर्वाभिमानभरिता मायाच्छद्मपरायणा ॥

आत्मकुक्षिम्भरा घोरा सोद्धता परिकीर्तिता[2] ।
सुखिनी नित्यसन्तुष्टा सतसं[3]मानावमानयोः[4] ॥

[5]अनसूयुरहंमानहीना विगतमत्सरा ।
उपकारपरा नित्यमपकारपरेष्वपि ॥

उपाचरति बन्धून् या[6] सा शान्तेति च कथ्यते ।
[7]रूपयौवनसम्पन्ना सखीकेलिकृतोद्यमा ॥

वासोऽङ्गरागमाल्यर्तुवेलाशैलसरित्प्रिया ।
[8]संभोगरसिका हेलाभावहावसमेधिता ॥

कलाशिल्पविशालाढ्या[9] ललिता परिकीर्तिता ।
खण्डिता विप्रलब्धा च तथा वासकसज्जिका ॥

स्वाधीनभर्तृका चैव कलहान्तरितापि च ।
विरहोत्कण्ठिता चैव तथा प्रोषितभर्तृका ॥

तथाऽभिसारिकेत्यष्टाववस्था नायिकाश्रिताः ।
अतीत्य समयं यस्या व्यासङ्गादन्यतः पतिः ॥

भोगाङ्कलक्षितः प्रातरेति चेत्सा हि[10] खण्डिता ।
बिभेति चिन्तयति च तूष्णीं ध्यायति ताम्यति ॥

---

1 A B न्नाव । 2 A B read four lines here ददाति याचमानेभ्यः कृतज्ञाश्रितवत्सला । मानयन्ती च मानार्हान् नित्योत्सवरतापि च । बन्धुसम्बन्धमुदिता कृतज्ञा प्रियवादिनी । एवमादिगुणैर्युक्तामुदात्तां परिचक्षते । 3 A सा सा । 4 C परोपकृतितत्परा । 5 C omits two lines । 6 A B गम्यानुपचरत्येव । 7 C omits two lines । 8 A B omit this line । 9 A कामभोगैकरसिका । 10 C त्सैव ।

खिद्यति भ्राम्यति मुहुर्दीर्घं श्वसिति रोदिति ।
मुहुर्विलपतीत्येते विकाराः खण्डितागताः ॥

प्रागुक्ता एव भावाः स्युस्सा[1]पराधप्रियागमे ।
समयं चापि[2] सङ्केतं दत्त्वा प्रेष्य च[3] दूतिकाम् ॥

अनागतश्चेद्व्यासङ्गाद्विप्रलब्धा तु सा स्मृता ।
चिन्तानिश्वासखेदाश्च हृत्तापो मूर्च्छनं मुहुः ॥

प्रलापो जागरः कार्श्यं विप्रलब्धासु विक्रियाः ।
भोगोपकरणैः सर्वैः सज्जिते वासवेश्मनि ॥

आस्तीर्य भोग[4]शयनं शयनं केलिनिद्रयोः ।
प्रतीक्षते या पर्यङ्के प्रियागममलङ्कृता ॥

सेयं वासकसज्जेति कथिता कविपुङ्गवैः ।
सखीविनोदः सम्भोगमनोरथविचिन्तनम् ॥

[5]हृल्लेखः श्वसितं दूतीप्रत्यागमनचिन्तनम् ।
इति वासकसज्जाया विक्रियाः कथिता बुधैः ॥

यस्या रतिरसा[6]स्वादमुदितो दयितः सदा ।
सदैवास्ते तया साकमेषा स्वाधीनभर्तृका ॥

उद्यानसलिलक्रीडाकुसुमापचयक्रिया ।
आपानकेलिः शक्रार्चा वसन्तमदनोत्सवाः ॥

स्वाधीनभर्तृकायाः स्युर्विलासाश्चैवमादयः ।
कृतापराधं प्रेयांसं प्रसाधनपरं मुहुः ॥

सखीसमक्षं प्रणतमीर्ष्याक्रोधादपास्य या ।
पश्चात्तापेन तपति कलहान्तरिता तु सा ॥

---

1 C स्त्वा । 2 B याति । 3 B क्ष्य च । 4 C केलि । 5 B omits this line.
6 C सुखा । 7 A कर्जितो ।

हृद्दाहः सम्भ्रमो मोहः संज्ञा निश्वसितं ज्वरः ।
मुहुर्मुहुर्विलापोऽपि[1] द्वेषः सर्वत्र वस्तुषु ॥

कलहान्तरितायाः स्युरेवमाद्याश्च विक्रियाः ।
उचिते वा स्वयं दत्ते समये प्रोषितः पतिः ॥

नैति व्यासङ्गतो यस्याः सा तु प्रोषितभर्तृका ।
मालिन्यं जागरः कार्श्यं निमित्तादिपरीक्षणम् ॥

अङ्गसादश्च चिन्ता च[2] जाड्यं शय्यारतिस्सदा ।
एवं प्रोषितनाथाया विक्रियाः कथिता बुधैः ॥

उचितेऽहनि सम्प्राप्ते[3] नैति केनापि हेतुना ।
यस्याः पतिः सा विदग्धैर्विरहोत्कण्ठिता स्मृता ॥

विषयस्यापरिच्छित्तिरङ्गसाद[4]श्च वेपथुः ।
अनुभूतस्मृतिर्द्वेषो हृत्तापो बाष्पनिर्गमः ॥

दूतीसख्यादिविस्रम्भः स्वीयावस्थाप्रदर्शनम् ।
विरहोत्कण्ठितायाः स्युरेवं भावा विकारजाः ॥

रूपयौवनसम्पन्ना कुलभोगधनाधिका[5] ।
वासोऽङ्गरागमाल्यर्तुचन्दनेन्दूदयादिभिः ॥

उद्दीप्यमानपञ्चेषुपञ्चबाणव्रणार्दिता[6] ।
याऽभिसारयते कान्तं सा भवेदभिसारिका ॥

विलीना स्वेषु गात्रेषु निश्शब्दपदसञ्चरा ।
पश्चान्नि[7]वर्तितपदा शङ्कमाना पदे पदे ॥

प्रभूतवेपथुमती स्वेदोदस्नपिताङ्गका ।
शार्दूलदर्शनत्रस्त[8]हरिणीशाववीक्षणा ॥

---

1 B मुहुः प्रलापो । C मुहुर्विलापो जागरणम् । 2 B C मोहश्च । 3 B तो विप्रवासीयो । 4 C दाह । 5 B समन्विता । 6 C प्रणोदिता । 7 A B राङ्घ्रि । 8 B स्नेह ।

ज्योत्स्नीतमस्विनीयानयोग्यवेषविभूषिता ।
नीलीकुसुम्भमञ्जिष्ठारागैः पट्टोत्तरीयकैः ॥

अवकुण्ठितसर्वाङ्गी शनैर्याति पराङ्गना ।
आविस्म[1]रस्मितमुखी मदारुणविलोचना ॥

स्नातानुलिप्तसर्वाङ्गी नानाभरणभूषिता ।
हर्षोदञ्चितरोमाञ्चव्याजाङ्कुरितमन्मथा ॥

वृता परिजनैः स्फीतभोगोपकरणोज्ज्वलैः ।
नितम्बालम्बिरशनास्वनोद्भूतमनोभवा ॥

चरणाम्भोरुहरणन्मणिमञ्जीरमन्थरा ।
एवं प्रीताऽभिसरति वेश्या वैशिकनायकम्[2] ॥

विस्रस्तबाहुविक्षेपस्रंसद्ध[3]म्मिल्लमालिका ।
व्याविद्धगतिसञ्चारश्लथमानांशुकाञ्चला ॥

प्रस्फुरद्भ्रूविलासश्रीः[4]विभ्रमोत्फुल्ललोचना ।
अविरामादराभ्या[5]समदस्खलितजल्पिता ॥

प्रेष्याभियाति[6]चेटीभिः प्रियमत्यन्तगर्विता ।
सुप्ते पराङ्गना तस्मिन् पार्श्वे ति[7]ष्ठति निश्चला ॥

अलङ्करोति निभृतं शीतैर्माल्यानुलेपनैः ।
[8]प्रबोधयति भावज्ञा[9] भावांस्तस्य प्रतीक्षते ॥

वेश्याऽतिमृदुभिः स्पर्शैः तत्केशोल्लेखनादिभिः ।
प्रबोधयति तद्बोधे प्रणयात्कुप्यति क्षणम् ॥

प्रेष्याक्ष्युन्मीलनैर्वस्त्रव्यजनैः पादमर्दनैः ।
प्रबोध्य निर्भर्त्सयति नासाभङ्गपुरस्सरम् ॥

---

1 B अविस्मे । 2 A नाशनम् । 3 C स्रस्त । 4 A B साऽपि । 5 A विरभ्या । B मद्वि-रभ्या । 6 B भिर्या । 7 A चलं पार्श्वेति । 8 C omits four lines । 9 B वानाम् ।

[1]चेष्टितान्येवमादीनि भवन्त्यासां पृथक्पृथक् ।
स्नेहोत्सिक्तै[2]ःकुलीनैश्च गुणिभिः काम्यते च या ॥

गृह्णाति कारणाद्रोषमनुनीता प्रसीदति ।
कुर्वतोऽप्यप्रियं भर्तुः प्रियमेव करोति च ॥

ईर्ष्यावत्यपराधेऽपि तूष्णीं वा[3] सोत्तमा भवेत् ।
स्वयं कामयते पुंसः पुरुषैर्या च काम्यते ॥

अपराद्धाऽपराधे स्यादनृतेऽनृतभाषिणी ।
स्निह्यन्ती स्निह्यति परमुपकर्त्र्युपकर्तरि ॥

एवमादिगुणैर्युक्ता मध्यमा सा स्मृता बुधैः ।
कुप्यत्यकारणे कोपं न नियच्छति याचिता ॥

अरूपं रूपवन्तं वा गुणिनं निर्गुणं च वा ।
जीर्णं वापि युवानं वा या वा कामयते मुहुः ॥

रोषेर्ष्याकलहाक्रान्ता साधमा कथ्यते बुधैः ।
सर्वासामेव नारीणामेते साधारणा गुणाः ॥

स्वीयास्तु निभृतास्ते स्युरन्यदीयास्तु मध्यमाः ।
साधारणास्तु प्रथिता बुधैरूह्या यथारसम् ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
शृङ्गारालम्बननायकनायिकादिस्वरूप-
निर्णयो नाम चतुर्थोऽधिकारः ॥

---

1 C omits this line. 2 C भोगोन्मत्तैः । 3 C या ।

॥ श्रीः ॥

## अथ पञ्चमोऽधिकारः ।

उक्ताश्च नायकाः सर्वे नायिकाश्च पृथक्पृथक् ।
अवस्था नायि[1]कादीनां सहायाश्च ततस्ततः ॥

इदानीं कथ्यतेऽस्माभिः सर्वासामेव योषिताम् ।
यौवनं तस्य भेदाश्च तदवस्था वि[2]चेष्टितम् ॥

नायकावान्तरभिदाः शृङ्गारैकरसाश्रयाः ।
नायिकावान्तरभिदास्तत्तत्सत्त्वगुणैर्युताः ॥

तासां विरक्ति रक्तिश्च गम्यागम्येषु भावतः ।
अन्येऽपि ये प्रवक्ष्यन्ते तत्तत्कार्योप[3]योगिनः ॥

तत्र तत्रैव विज्ञेयास्तत्तदर्थानुषङ्गिणः ।
स्त्रीणां प्रायेण सर्वासां यौवनं च चतुर्विधम् ॥

प्रतियौवनमेतासां भवेद्भिन्नं विचेष्टितम् ।
आरूढरागं नयनमसमग्रारुणोऽधरः ॥

स्मरस्मेरं च वदनं गण्डयोर्गर्वजं रजः ।
अङ्गमुद्भिन्नलावण्यमाविर्वदन[4]सौरभम् ॥

उद्भेदः स्तनयोः किञ्चिदविभक्ताङ्गसन्धिता ।
आभिरूप्यमकाठिन्यमङ्गानामतिमार्दवम् ॥

---

1 C य । 2 B पि । 3 A यैऽपि । 4 C दंशन ।

एवमादिगुणावस्था प्रथमे यौवने भवेत् ।
रतिक्लेशं न सहते मृदुस्पर्शाभिलाषिणी ॥

कृतादराऽङ्गसंस्कारे सखीकेलिषु लालसा ।
न हर्षश्च न शोक[1]श्च सपत्नीदर्शनादिषु ॥

सङ्गमे वल्लभस्यापि न विरज्यति रज्यति ।
यौवने प्रथमे स्त्रीणामेवमादिविचेष्टितम् ॥

पीनौ पयोधरौ गात्रं पूर्णावयवमन्थरम् ।
आयतं जघनं मध्यं कृशं श्रोणी समुन्नता ॥

रोमराजिः स्फुटा निम्ना नाभिर्व्यक्तं वलित्रयम् ।
ऊरू करिकराकारौ रक्तिमा पाणिपादयोः ॥

स्निग्धत्वमङ्गकेशेषु नयने दन्तपङ्क्तिषु ।
एवमादिगुणावस्था द्वितीये यौवने भवेत् ॥

अपराधं न सहते नानुनीता प्रसीदति ।
ईर्ष्यति प्रणयक्रुद्धा प्रतिपक्षाभ्यसूयिनी ॥

साभिप्रायाः सखीः स्निह्यत्याप्तान् क्रुध्य[2]ति बान्धवान् ।
गृह्णाति मानं सुदृढमिच्छत्यनुनयानपि ॥

रतिकेलिष्वनिभृता गर्विता चेष्टते रहः ।
द्वितीये यौवने प्रायः स्त्रीणामेतद्विचेष्टितम् ॥

अधरे रागमाल[3]ण्यमस्निग्धत्वं च चक्षुषि[4] ।
छायावैगु[5]ण्यमङ्गानां खरस्पर्शित्वमेव च ॥

[6]श्लथावयवता चापि कान्तिम्लानिः कपोलयोः ।
एवमादिगुणावस्था तृतीये यौवने भवेत् ॥

---

1 A कोप । 2 A न्ताश्च । 3 B न्तृ । 4 A षः । 5 B माद्य । 6 A य ।

कामतन्त्रेषु[1] वैदग्ध्यं कान्ता[2]भीष्टानुकूलता ।
अनादरोऽपराधेषु प्रतिपक्षेष्वमत्सरः ॥

कान्तस्य चापरित्यागस्तदाकर्षणकौशलम् ।
तृतीये यौवने स्त्रीणामेवमादिविचेष्टितम् ॥

श्रोण्योश्च स्तनयोरूर्वोः जघनेऽधरगण्डयोः ।
निर्मांसता जर्जरता विलम्बितकपोलता ॥

एवमादिगुणावस्था चतुर्थे यौवने भवेत् ।
अशक्तता चानुत्साहो रतिव्यायामकेलिषु ॥

प्रतिपक्षानुकूल्यश्च कान्तैरपि सहा[3]सनम् ।
चतुर्थे यौवने स्त्रीणामेवमादिविचेष्टितम् ॥

आरभ्य षोडशाद्वर्षाद्द्वात्रिंशद्वत्सरावधि ।
यौवनं पुरुषाणां तु तथा यौवनचेष्टितम् ॥

साधारण्येन सर्वेषामेकरूपमिति स्मृतम् ।
तदेव सम्पत्प्रकृतिगुणादिपरिवर्धितम् ॥

तत्तद्विशेषतस्ते[4]षु विशिष्टमिव दृश्यते ।
महोदयो[5] महाभागः कृतज्ञो रूपवान्युवा ॥

मानी सुशीलः सुभगो विदग्धो वंशवानभीः[6] ।
अल्पनि[7]द्रो मधुरवागभिगम्यो भवेत्स्त्रिया[8] ॥

विज्ञानरूपसम्पन्ना रूपयौवनशालिनी ।
देशकालविभागज्ञा कला[9]शिल्पविचक्षणा ॥

कार्याकार्यविशेषज्ञा भावज्ञा विनयान्विता ।
व्रीडावती क्षमायुक्ता लोकयात्रानुवर्तिनी ॥

---

1 A B ष्व । 2 B C मा । 3 A रविरहा । 4 B स्त्री । 5 A दारो । 6 A संभवः । B वानपि । 7 A अहर्नि । C आविनि । 8 A च्छ्रिया । 9 A कारु ।

एवमादिगुणैर्युक्ता पुंसां गम्यैव नायिका ।
शास्त्रविच्छीलसम्पन्नो रूपवान्प्रियदर्शनः ॥

विक्रान्तो धृतिमांश्चैव वयोवेषकु[1]लान्वितः ।
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ॥

अशङ्कितः प्रियाभाषी चतुरः सुभगश्शुचिः ।
कामोपचारकुशलो दक्षिणो देशकालवित् ॥

अदीनवाक्यः प्रिय[2]वाग्वाग्मी दक्षः प्रियंवदः ।
अलुब्धः सुखभोगी[3] च श्रद्दधानो दृढव्रतः ॥

गम्यासु चाप्यविस्रम्भी मानी चेति हि वैशिकः ।
विशेषयेत्कलाः सर्वाः यस्मात्तस्मात्तु वैशिकः ॥

वेश्योपचारतो वापि वैशिकः परिकीर्तितः ।
उत्तमो मध्यमश्चेति कनिष्ठश्चेति स त्रिधा ॥

अवशोऽपि हि कामस्य वशं यातीव दृश्यते ।
असङ्गोऽपि स्वभावेन सक्तवच्चेष्टते मुहुः ॥

त्यागी स्वभावमधुरः समदुःखसुखः शुचिः ।
कामतन्त्रेषु निपुणः क्रुद्धानुनयकोविदः ॥

स्फुरितेऽनादरे[4]किञ्चिद्दयिताया विरज्यति ।
उपचारपरोऽप्येष उत्तमः कथ्यते बुधैः ॥

व्यलीकमात्रे दृष्टेऽस्या न कुप्यति न रज्यति ।
ददाति काले काले च वसनादीनि[5] भावतः ॥

सर्वार्थैरपि मध्यस्थतयै[6]वोपचरन्पुनः ।
दृष्टे दोषे विरज्येत स भवेन्मध्यमः पुमान् ॥

---

1 A रूपवेषक । 2 A स्मित । 3 A संविभागी । 4 B धरे । 5 A भावं गृह्णाति ।
6 A स्तमे ।

कामतन्त्रेषु निर्लज्जः कर्कशो रतिकेलिषु ।
अविज्ञातभयामर्षः कृत्याकृत्यविमूढधीः ॥

मूर्खः प्रसक्तभावश्च विरक्तायामपि स्त्रियाम् ।
मित्रैर्निवार्यमाणोऽपि पारुष्यं प्रापितोऽपि च ॥

अन्यस्नेहपरावृत्तां संयुक्तरम[1]णामपि ।
स्त्रियं कामयते यस्तु सोऽधमः परिकीर्तितः ॥

प्रणयी दयितः कान्तो नाथः स्वामी प्रियः सुहृत् ।
नन्दनो जीवितेशश्च सुभगो रुचिरस्तथा ॥

इत्थं नायकसंज्ञाः स्युः स्त्रीभिः प्रीतिप्रयोजिताः ।
प्रसादयन्सखीमध्ये शैलोद्यानवनादिषु ॥

मिथ्यारुषा कलुषितां प्रणयी स निगद्यते ।
वासोऽङ्गरागमाल्याद्यैः हृद्यैर्यः[2] प्रेयसीं रहः ॥

प्रसादयन्प्रीणयति दयितः सोऽभिधीयते ।
कथाभिः कमनीयाभिः काम्यैर्भोगै[3]श्च सर्वदा ॥

उपचारैश्च रमयन्यः स कान्त इतीरितः ।
सामदानार्थसम्भोगैः[4] लालयन्प्रीणयन् सदा ॥

भजते रहसि प्रीतः स नाथ इति कथ्यते ।
निवारयन्नकृत्येभ्यः कर्तव्येभ्यः प्ररोचयन् ॥

स्वभावे स्थापयति यः स स्वामीति निगद्यते ।
सत्यवागार्जवरतिरुपकुर्वन्प्रियं वदन् ॥

भजते यः स्वयं प्रीतः प्रियः स भवति स्त्रियाः ।
दुःखे विपदि[5] सम्मोहे कार्यकालात्ययेऽपि च ॥

---

1 A संक्रान्तमर । 2 A कृत्यैर्यैः B हृद्यैर्याम् । 3 C न्तैर्भोग्यै । 4 A समभावार्थसम्भोगे । 5 A भवति ।

हितान्वेषी च हितकृच्चस्सुहृत्सोऽभिधीयते ।
श्लाघनीयः सखी[1]मध्ये गुणैः सौजन्यजन्मभिः ॥

श्लाघयन्नन्दयति यः प्रियां नन्दन ईरितः ।
[2]भजते यः प्रियामिष्टैः शयनासनभोजनैः ॥

अभीष्टाभिश्च लीलाभिर्जीवितेश इतीरितः ।
सपत्नीनखदन्तादिचिह्नं यस्य न दृश्यते ॥

विस्मर्यमाणमानेर्ष्यः सुभगः सोऽभिधीयते ।
भोग्येषु यत्राभिरुचिः तद्दानैरभिरोच[3]यन् ॥

रुच्या प्रियां रमयति रुचिरः सोऽभिधीयते ।
वामो विरूपो दुश्शीलो निर्लज्जो निष्ठुरः शठः ॥

धृ[4]ष्टो दुराचार इति व्याहाराः कोपसम्भवाः ।
वार्यते यत्र विषये यत्र चैव नियुज्यते ॥

तत्र तत्र विपर्येति स वामः[5] परिकीर्तितः ॥
नखदन्तव्रणैरङ्गैः सरसैः शिथिलीकृतः ।

विपरीतकथोऽमा[6]नी विरूप इति संज्ञितः ।
असहिष्णुतया क्रुद्धो वाच्यावाच्यं न वेत्ति यः ॥

न वेत्ति देशकालौ च स दुश्शील इति स्मृतः ।
परुषैरवमानैश्च वार्यमाणो मुहुर्मुहुः ॥

सापराधोऽपि यो गच्छेत्स निर्लज्ज इतीरितः ।
कृतापराधोऽपि मुहुः प्रसादनपराङ्मुखः ॥

रिरंसति बलात्कारैः स निष्ठुर इतीरितः ।
पुरः प्रियं वदन् सम्यगपरत्राप्रियं वदन् ॥

1 A सभा । 2 C omits four lines । 3 A चार । 4 B ढु । 5 B सोऽधमः । 6 B न्मा ।

अर्थान्विनाशयन् गूढं स शठः परिपठ्यते ।
दृष्टेऽपराधे शपथैः नास्तीति बहुशो वदन् ॥

सचिह्नः सन्निधत्ते यः स धृष्ट इति कथ्यते ।
दोषेत्व[1]विद्यमानेऽपि योऽविमृश्य समाचरन् ॥

ताडनं बन्धनं वापि दुराचार इतीरितः ।
इत्थं नायकभेदास्तु भरतेन प्रदर्शिताः ॥

नायिकानां च सर्वासां सत्त्वमत्राभिधीयते ।
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ॥

सुखस्य[2] मूलं प्रमदास्तासु सम्भोग इष्यते ।
नानाशीलाश्च ताः सर्वाः स्वं स्वं[3] सत्त्वं समाश्रिताः ॥

उपसृष्टा यथाशीलं तृप्ता विदधते रतिम् ।
देवदानवगन्धर्वयक्षरक्षःपतत्रिणाम् ॥

पिशाचनागव्यालानां नरवानरहस्तिनाम् ।
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ॥

महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ।
प्रत्यङ्गोपाङ्गयोरङ्गे स्नैग्ध्य[4]मारोग्यमार्जवम् ॥

चिरान्निमेषो[5] दानेच्छा सङ्गीताभिरतिर्मुहुः ॥
स्वेदाल्पत्वं रतेस्साम्यं भावज्ञानं कृतज्ञता ।

यस्याः स्थिराणि सा योषिद्देवशीलेति कथ्यते ॥
स्थिरक्रोधा शठाऽधर्मरता निष्ठुरभाषिणी ।

मद्यमांसप्रिया लुब्धा चपला[6] कलहप्रिया ।
ईर्ष्यावती चलस्नेहा दैत्यशीलेति कथ्यते ॥

---

1 A B षत्वे । 2 A काम । 3 A नाना । 4 B स्थैर्य । 5 A र निमेषो । 6 C क्रोधना ।

स्निग्धत्वक्केशनयना नखदन्तक्षतिप्रिया ।
आरामभोग्या मृद्वी च स्मितपूर्वाभिभाषिणी ॥

तन्वी सङ्गीतसंसृष्टा मन्दापत्या रतिप्रिया ।
गन्धर्वशीला विज्ञेया पुष्पशय्याभिलाषिणी ॥

स्वल्पविस्वेदकणिका मद्यगन्धामिषप्रिया ।
चिरविस्मृतदृष्टेषु कृतज्ञत्वात्प्रियंवदा ॥

अदीर्घशायिनी मेधाविनी यक्षाङ्गना स्मृता ।
बृहदायतसर्वाङ्गी रूक्ष[1]विस्तीर्णलोचना ॥

ख[2]ररोमा दिवास्वप्ननियताऽत्युच्चभाषिणी ।
नखदन्तक्षतकरी क्रोधेर्ष्याकलहप्रिया ॥

निशाविहारशीला च या सा राक्षसशीलिनी ।
व्यावृत्तास्या शीघ्रगतिः क्षीरोद्यानफलप्रिया ॥

नैकत्र नियता तीक्ष्णा[3] चपला बहुभाषिणी ।
पतत्रिशीला[4]विज्ञेया प्रतिपत्तिपराङ्मुखी ॥

न्यूनाधिकाक्षिदन्तोष्ठकर्ण[5]स्तननखाङ्गुलिः ।
रोमशाङ्गी महारावा सुरते कुत्सितक्रिया[6] ॥

बालोद्वेगकरी रात्रिचारिण्यनृतभाषिणी ।
पिशाच[7]शीला विज्ञेया मद्यमांसबलि[8]प्रिया ॥

मानावमानरहिता रूक्षत्वक्कटुक[9]स्वना ।
विशालाक्षी शठा धृष्टा व्यालशीलेति कथ्यते ॥

निद्रालुः कोपना तिर्यग्गतिस्ताम्रविलोचना ।
गन्धाभिलाषिणी तीक्ष्णनासोग्रदशना चला ॥

---

1 A रक्त । 2 A [illegible]व । 3 A चारा । 4 A व्रतशीला च । 5 A तुं । 6 C त्वात्सीत्क्रिया । 7 B पतत्रि । 8 C रति । 9 A छुप ।

नागशीलेति विज्ञेया सदा श्वसनशालिनी।
ऋज्वी सुहृत्प्रिया देवगुरुभक्ता क्षमान्विता॥

उपचार[1]परा नित्यमहङ्कारविवर्जिता।
सुशीला मर्त्यशीला स्याद्गन्धमाल्यरतिप्रिया॥

[2]अल्पगात्रा फलारामप्रिया पिङ्गलरोमदृक्।
प्रसह्य फलशीला च तीक्ष्णा च चपला तथा॥

शीघ्रकोपप्रसादा च कपिशीलेति कथ्यते।
मन्दायतगतिर्मन्दचेष्टाऽत्यशनलालसा॥

दीर्घरोषप्रसादा च हस्तिशीलेति कथ्यते।
शीघ्रगा चपला भीरुर्गीतवाद्यरतिप्रिया॥

चलविस्तीर्णनयना कोपना विरहासहा।
मृगशीलेति विज्ञेया वनशय्यासन[3]प्रिया॥

बहुभृत्यवती दूरगामिनी सलिलप्रिया।
दीर्घगात्री दुराचारा मत्स्यशी[4]लाऽनिमेषिणी॥

दीर्घोन्नततरग्रीवा लम्बोष्ठी निष्ठुरस्वना[5]।
[6]कट्वम्ललवणप्रीता भवेदुष्ट्री वनप्रिया॥

स्थूलशीर्षाञ्चितग्रीवा दारितास्या महास्वना।
ज्ञेया मकरसत्त्वेति सर्वैर्मत्स्यगुणैर्युता॥

स्थूलजिह्वोष्ठदशना रूक्षत्वक्कटुभाषिणी।
रतिप्रिया सदा हृष्टा खरशीलेति कथ्यते॥

सपत्नीद्वेषिणी रुष्टा बह्वपत्या दरी[7]रता।
दीर्घा[8]स्या पिङ्गदृग्रोमा सौकरं शीलमाश्रिता॥

---

1 A कार। 2 A B omit three lines। 3 B चर्याबहु। 4 B वशी। C त्स्यली। 5 B प्रियाः। 6 AB omit two lines। 7 B ढवी। 8 A रूक्षा।

विभ[1]क्तपार्श्वोरुकटीस्तनश्रोणिशिरोधरा ।
दानशीला ऋजुस्थूलकेशा मधुरभाषिणी ॥

कोपना रतिलोला च हयशीलेति कथ्यते ।
स्थूलदन्ता पृथुश्रोणिः खररोमारुणेक्षणा ॥

अभीरुरुन्नतास्या च लोकद्विष्टा[2]रतिप्रिया ।
सलिलारण्यरसिका माहिषं शीलमाश्रिता ॥

कृशा तरलदृक्सूक्ष्मरोमा तनुभुजान्तरा ।
शीतभीरुर्जलो[3]द्विग्ना बह्वपत्या वनप्रिया ॥

ऊष्मलाङ्गी सञ्चरिष्णुरजशीलेति कथ्यते ।
पृथुपीनोन्नतश्रोणिस्तनुजङ्घा सुहृत्प्रिया ॥

पितृदेवार्चनरता दृढारम्भा प्रजाहिता ।
स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता ॥

एवं प्रदर्शितं शीलं स्त्रीणां भरतवर्त्मना ।
विज्ञाय च यथासत्त्वमुपसर्पेत्ततो बुधः ॥

उपचारो यथासत्त्वं स्त्रीणा[4]मल्पोऽपि हर्षदः ।
महानप्यतथायुक्तो नैव तुष्टिकरो भवेत् ॥

वासोऽङ्गरागाभरणमालाशय्यासनादिषु ।
यत्र यत्र स्पृहा तत्तद्देशकालानुकूलतः ॥

अत्यादरेण सत्कार उपचार इतीरितः ।
अतो रतिविवृद्ध्यर्थं स्त्रीषु शीलानुकूलतः ॥

यथानुकूलं पुरुषैरुपचारो विधीयताम् ।
उपचारस्त्रिधा[5] वेश्याकुलजाऽन्याविभागतः ॥

1 A र  2 B लदृष्टिः । 3 A ज्वल । 4 B रःस्त्रिया वेश्याः कुल । 5 B या ।

नानाबीजोद्भवः कामो यूनोः सर्वत्र दृश्यते ।
तत्तदालम्बनगुणैरुत्तमो मध्यमोऽधमः ॥

वासोऽङ्गरागाभरणमालाशय्यासनादयः ।
साधारणाः कुलीनानां वेश्यादीनाञ्च योषिताम् ॥

कुलाङ्गनोपचारस्तु सत्यार्जवपुरस्सरः ।
अवस्थादेशकालादिप्रधानो[1]ऽन्यासु दृश्यते ॥

अर्थितानपराधादिप्रधानो गणिकाश्रयः ।
यत्र कामसमुत्पत्तिस्तत्र रक्तिं विरक्त[2]ताम् ॥

लक्षयेल्लक्षणैस्तैस्तैरन्योन्यं स्त्री पुमानपि ।
रक्ता चेत्प्रथमं योषिदनुरक्तो भवेत्पुमान् ॥

एष स्वभावसुभगः सम्भोगः स्यात्स उत्तमः ।
अथ चेदेककालीना यूनोरन्योन्यरक्तिमा ॥

एष सम्भोगलीला स्यात्स कामो मध्यमः स्मृतः ।
एकत्रैवानुर[3]क्तिश्चेद्यूनोर्ह्रास्यः स चाधमः ॥

रागापरागचिह्नानि योषितां लक्षयेदतः ।
स्त्रियो जातानुरागाया नायके लक्षणान्विते ॥

कुलीनायाः प्रथमतो दूरे रोमोद्गमो भवेत् ।
स्निग्धश्च मसृणं[4] चक्षुरधरः स्पन्दते स्फुटम् ॥

स्मितोत्तरञ्च वचनं स्वेदोदश्च कपोलयोः ।
ऊर्वोः सम्पीडनं चाङ्गे बाहुस्वस्तिकबन्धनम् ॥

आलिङ्गनं मुहुः सख्यास्तदङ्गेऽङ्गसमर्पणम् ।
नीवीं विस्रस्य नहनं वेपथुस्तत्पथस्थितिः ॥

---

1 C प्राधान्यो 2 B धीय। 3 A B पर। 4 B धुरं।

वचने वचनं तूष्णीं वीक्षणेष्वनवेक्षणम् ।
इत्यादिभावैर्भावज्ञो रक्तां विद्यात्कुलाङ्गनाम् ॥

कर्णकण्डूयनं नाभेरूर्वोः किञ्चित्प्रकाशनम् ।
विमर्दनञ्च स्तनयोर्नीवीविस्रंसनं मुहुः ॥

अन्यापदेशकथनमन्यैः सस्मितभाषणम् ।
विलोकनञ्च सव्रीलमङ्गुष्ठाग्रविलेखनम् ॥

नखनिस्तोदनं केलिः सखीनिर्भर्त्सनं मृषा ।
पदान्तरे स्थितिर्व्याजादञ्जलिर्दैवताच्छलात् ॥

भावैरित्यादिभिर्वेश्यामनुरक्तां विभावयेत्[1] ।
[2]दृष्टे दृशोर्विकासश्च माधुर्यं भाषणेऽन्यतः ॥

प्रसादो वदने हर्षः सम्भ्रमस्तस्य दर्शने ।
अदर्शने च मूर्च्छा च तत्सत्कारेषु कौतुकम् ॥

स्वभर्तुः प्रमुखे तस्य स्मरणं सुरतादिषु ।
प्रेषणं भोग्यवस्तूनां समाजे तस्य गर्हणम् ॥

सर्वत्र तस्य वाक्यस्य प्रीतिपूर्वं परिग्रहः ।
मदम्ब नाथ मन्नाथेत्येवं बालोपलालनम् ॥

भावैरेवंविधैरन्यां लक्षयेन्मदनातुराम् ।
ये भावा रागचिह्नानि[3] स्त्रीणामुक्ताः पृथक्पृथक् ॥

साधारणास्ते सर्वासां स्त्रीणामित्याह मारुतिः ।
एवं भावा[4]न्परीक्ष्यैव रक्ताश्चेदनुरञ्जयेत् ॥

नायकेष्वनुरक्तेषु रतिं पुष्यन्ति योषितः ।
आभ्यन्तरोपचारस्तु रक्तायाः कथ्यतेऽधुना ॥

---

1 C विनिर्दिशेत् । 2 C reads दृष्टेर्विकासो माधुर्यं भाषणेन तदन्यतः । 3 C नाम् । 4 C मुहुः ।

रक्ता विविक्तवसतिं प्रियेण सह वाञ्छति।
गुणान् सखीनामाख्याति स्वधनं प्रददाति च॥

सम्पूजयति मित्राणि द्वेष्टि शत्रुजनं तथा।
समागमं प्रार्थयते दृष्ट्वा हृष्यति चाधिकम्॥

तुष्यत्यस्य वचोभङ्ग्या सस्नेहञ्च निरीक्षते।
सुप्ते च पश्चात्स्वपिति चुम्बत्यनभिचुम्बिता॥

प्रियेणालिङ्गयत्यङ्गं गाढमालिङ्गति प्रियम्।
स्वयमारभते स्वैरं स्नानादिषु[1] च कर्मसु॥

प्रथमं चेष्टते स्वैरं बाह्ये चाभ्यन्तरे रते।
न विश्लेषयते गात्रमाश्लिष्टा च कदाचन॥

तेनैव भोग्यवस्तूनि भुङ्क्तेऽन्यत्राहृतान्यपि।
रतिकेलिष्वनिभृता स्वदते स्विद्यति क्षणम्॥

न दृष्टिमन्यतो धत्ते न शृणोति बहिः क्वचित्।
न चिन्तयत्यात्मनीनं किञ्चिदन्यत्प्रियं विना॥

रोमाञ्चति प्रिय[2]स्पर्शे मुह्यति स्विद्यति श्वसेत्।
एवं रक्तासमुत्थाः स्युरुपचाराः प्रियं प्रति॥

विरक्तानां तु लिङ्गानि कथ्य[3]न्ते यानि कानिचित्।
निष्ठीवनं दृष्टमात्रे सद्यो वक्त्रावकुण्ठनम्॥

गूढावस्थानमन्यार्थपारवश्यमनादरः।
अदे[4]शकालगमनमाह्वाने कालयापनम्॥

प्रे[5]षितस्याप्यनादानं गन्धमाल्यादिवस्तुनः।
आर्तस्यानादरः क्षेपो भूमौ वा दानमन्यतः॥

---

1 C पुंस्नानादिषु। 2 A स्वः प्रियसं। 3 A वक्ष्य। 4 A आदे। 5 A प्रो।

अङ्गसादप्रकथनं दूतादीनामनुत्तरम् ।
एवमादीनि चिह्ना[1]नि दूरस्थानां तु योषिताम् ॥

आसन्ना दूरमध्यास्ते कथामन्यां ब्रवीति च ।
पृष्टा यथायथं ब्रूते चुम्बिताऽऽस्यं[2] प्रमार्जति ॥

अनिष्टाश्च कथां ब्रूते प्रियमुक्ताऽपि कुप्यति ।
न च चक्षुर्ददात्यस्य न चैनमभिनन्दति ॥

शेते पुरः[3] शाययति पुन[4]र्निद्राति तत्क्षणम् ।
प्रबोधिता यापयति कालं रन्तुं न वाञ्छति ॥

स्पृष्टा सङ्कोचयत्यङ्गं निमीलयति लोचने ।
न स्नाति नालङ्कुरुते न भोगे कुरुते स्पृहाम् ॥

विमर्दयति हस्ताभ्यां नेत्रे व्याजृम्भते मुहुः ।
विजृम्भते परावृत्य निष्ठीवति मुहुस्सदा ॥

प्रद्वेष्टि तस्य मित्राणि ब्रवीति कृतशासना[5] ।
रुष्टा परिवदत्येनं स्वात्मन्यङ्गानि[6] गूहते ॥

कथाप्रसङ्गेनान्येन सुरते भावविस्मृतिः ।
गृहकृत्यापदेशेन कुरुते च गतागतम् ॥

नीवीस्पर्शे सहृल्लेखमप[7]क्षिपति तत्करम् ।
पराङ्मुखी वा शयिता[8] व्याध्यादिव्यपदेशतः ॥

एवं विरक्ताचिह्नानि दृष्ट्वा तां तत्क्षणात् त्यजेत् ।
विरक्तिचिह्नैनैकेन विरज्येतोत्तमः पुमान् ॥

रागापरागचिह्नानां सङ्करे तामु[9]पाचरेत् ।
चिह्नानि गन्तुकामानां कथ्यन्ते ह्या[10]नुषङ्गिकम् ॥

---

1 A भावा । 2 B स्या । 3 A नः । 4 C रो म्लापयति स्वयम् । 5 A नाशनम् ।
6 ABC स्वान्यङ्गानीह । 7 BC होल्लेखमलम् । 8 C वसेतस्य । 9 B तमु । 10 AB ऽस्या ।

अनासनञ्च प्रथमं चालनं चासनस्य च ।
अर्धासनेनावस्थानं पार्श्वात्पार्श्वेऽङ्गचालनम् ॥

विजृम्भणञ्च बहुशो मुहुर्द्वारनिरीक्षणम् ।
प्रसार्याकुञ्चनं पादबा[1]ह्वोरुत्कटिकासनम् ॥

गात्रभङ्गोऽङ्गुलिस्फोटो बहिर्वार्ताव[2]कर्णनम् ।
एतानि गन्तुकामानां चिह्नानीत्युपलक्षयेत् ॥

विरक्तिहेतवो यूनोर्बहवः स्युः परस्परम् ।
कार्श्यं व्याधिश्च शोकश्च पारुष्यं रूपसंक्ष[3]यः ॥

दोषापवादश्रवणान्म[4]तिलोपो व्यतिक्रमः ।
अदेशकालागमनमपकारो बहि[5]र्मुहुः ॥

इत्यादिभिर्विरक्तानां न कदा[6]चन सङ्गतिः ।
मानादिजा विरक्तिर्या ह्यपानुनयसंश्रया ॥

अन्योन्यरक्ततां भूयः पुष्यत्येव रतिं शुभाम् ।
उक्तानां रागचिह्नानां कथ्यन्तेऽत्र विभावनाः ॥

कर्ण[7]कण्डूयनव्याजाद्गुणद्धयस्य शुभाङ्गिरम् ।
केशसंयमनाद्भर्तुः शिरोलालनसूचनम् ॥

नाभिप्रदर्शनादात्मसौभाग्यप्रकटीक्रिया ।
स्तनसंमर्दनेनैव गाढालिङ्गनसूचनम् ॥

अधरस्पर्शनेनैव चुम्बनाद्यभिलाषितम् ।
कटाक्षैर्हा[8]सगर्भैश्च सम्भोगौत्सुक्यभावनम् ॥

नूपुरध्वननैः स्वस्य पुरुषायितसूचनम् ।
विजृम्भितेन सर्वाङ्गे[9] स्वसर्वाङ्गसमर्पणम् ॥

---

1 A बाह्वोर्वा । 2 A र्व्यावर्त । 3 A दुःखसंभ्र । 4 A दोषोऽपराधश्रवणंम । 5 A मुहुः ।
6 B चका । 7 C गण्ड । 8 A B मकुटाहैः । 9 C तस्याङ्गैः ।

अन्यापदेशकथनैस्तस्य भावपरीक्षणम् ।
अन्यैः स[1]स्मितजल्पेन तद्भाषामेलनादरः ॥

[2]सव्रीलं लोकनेनैव स्वानुकूल्यप्रकाशनम् ।
अनुत्तरप्रदानेन स्वस्वातन्त्र्यप्रकाशनम् ॥

सखीनिर्भर्त्सनेनैव शीघ्रसङ्गमनादरः ।
ऊरुसम्पीडनादेव ह्यङ्गस्पन्दसूचनम् ॥

पदान्तरे स्थितेर्व्याजान्मनोविनिमयार्थिता ।
साचीकृतेनेक्षणेन सङ्केतगमनार्थिता ॥

तद्गाढालिङ्गनाच्चैव बाहुस्वस्तिकबन्धनात् ।
विस्रस्य नीवीनहनाद्वास[3]ःश्लथनसूचनम् ॥

एवमाद्यासु चेष्टासु भावा ग्राह्या मनीषिभिः ।
दृशोर्विकारा बहवः शृङ्गारस्योपयोगिनः ॥

भावाश्रयाः कदाचित्स्युः कदाचिद्रससंश्रयाः ।
विकूणि[4]तं विहसितं कुञ्चितं न्यञ्चिताञ्चिते ॥

स्निग्धं मुग्धञ्च निष्पन्दं विस्तारि च विकासि च ।
स्तिमितं मसृणं वक्रं[5] मधुरं चाभिलाषि च ॥

स्थिरं प्रसन्नमलसं वलितं मदमन्थरम् ।
स्मेरमानन्दि साकूतं विदग्धं विह्वलं तथा ॥

निहञ्चितञ्च निभृतमुत्कण्ठितमुदञ्चितम् ।
सोत्सुकं सोत्कमुत्कम्पमुल्लासि च समन्मथम् ॥

मदि व्याक्षेपि विक्षेपि त्रिभङ्गि त्र्यश्रमेव च ।
विकृष्टं विनतं स्फीतं व्यासङ्गि च विसंस्थु[6]लम् ॥

1 B न्येन । 2 A omits three lines । 3 B ह्रासः । C नं वासः । 4 A कुण्ठि । 5 A वक्त्रम् । 6 A B स्फु ।

विस्फारितं विलुलितं ललितञ्च तरङ्गितम् ।
कठोरं कलुषं रूक्षं कातरं चकितं चलम् ॥

कोमलं तरलं तानि प्रणयि प्रेमगर्भि च ।
सोत्प्रासं सस्पृहं ह्लादि प्रेङ्खोलं लोलमेव च ॥

एवमुक्ताश्चतुष्षष्टिर्विकारा दृष्टिसंश्रयाः ।
उद्वर्तितमथोद्वृत्तं विवृत्तं[1] च विवर्तितम् ॥

स्तब्धमुत्फुल्लमुल्लोलमुध्दुरं विधुरं तथा ।
विश्लिष्टं निष्ठुरं शुष्कं[2] कुटिलं चटुलं तथा ॥

एते प्रायेण कथिता रौद्रस्यैवोपयोगिनः ।
ससम्भ्रमं जडञ्चैव सव्यग्रं सव्यथं तथा ॥

ता[3]न्तमार्तं परिम्लानं तप्तं मलिनमेव च ।
एते प्रायेण शोकस्य विकारा दृष्टिसंश्रयाः ॥

मन्थरं बन्धुरं धीरमविक्रियमकृत्रिमम् ।
अनुल्बणमसम्भ्रान्तमव्याजमनुपस्कृति ॥

सहर्षञ्च सगर्वञ्च वीरस्यैते प्रकीर्तिताः ।
अरोचकमनुत्सेकमाविद्धं विद्धमेव च ॥

विकृष्टञ्च विनिष्क्रान्तं विनिगी[4]र्णं विलोहि[5]तम् ।
एते प्रायेण कथिता बीभत्से च भयानके ॥

केचित्साधारणास्तेषु भवन्त्यद्भुतहास्ययोः ।
एते शतं समाख्याताश्चत्वारश्च ततोऽधिकम् ॥

भागत्रयस्य सङ्कोचो विकासश्चरमस्य च ।
यस्या दृष्टेर्विलक्षेण तद्विकू[6]णितमुच्यते ॥

---

1 C तम् । 2 C रूक्षम् । 3 B का । 4 A B की । 5 A कि । B मि । 6 B क्री ।

अनिमेषस्फुरत्तारं समं विहसितं विदुः ।
पुरस्त्रिभागसङ्कोचे प्रेम्णा तत्कुञ्चितं भवेत् ॥

पर्यायेण चलत्तारं मन्दं मन्दमथाञ्चितम् ।
स्निग्धं तद्यस्य विषयस्तत्प्रभामिलितो भवेत् ॥

स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात् ।
निष्पन्दं तद्यदन्यत्र दृष्टिर्न[1]स्पन्दते क्वचित् ॥

अश्लिष्टो येन विषयस्तद्विस्तारीति कथ्यते ।
विकासि तद्यद्विषयविशेषमवगाहते ॥

स्वगोचरान्नचात्येति[2] यत्तस्तिमितमुच्यते ।
मसृणं तदिति ख्यातमनुरागकषायितम् ॥

ऊर्ध्वाधोऽपाङ्गसञ्चारो यत्र तद्वक्रमुच्यते ।
शीतलीक्रियते येन तापस्तन्मधुरं स्मृतः ॥

अभिलाषि तदेव स्याद्याचमानमिवेक्षते ।
तत्स्थिरं यत्तु विषये दूरेऽप्यन्तर्हिते स्थिरम्[3] ॥

तत्प्रसन्नं भवेत्सभ्रूविलासं सस्मितञ्च यत् ।
अलसं[4] तदभीष्टार्थाद्व्रीलादेर्यन्निवर्तनम् ॥

वलितं तन्निवृत्तस्य भूयस्त्र्यश्रा[5]वलोकनम् ।
व्याघूर्णमानमरुणं मुहुरामीलदन्तरा[6] ॥

अपरिच्छिन्नविषयं मदमन्थरमीरितम् ।
स्फुरद्भ्रूपक्ष्मतारं यत्तस्मेर[7]मिति कथ्यते ॥

तदानन्दि सुखोन्मीलदामीलत्तारमुच्यते ।
[8]साकूतं तद्यत्र भावः कोऽप्यभीष्टो विभाव्यते ॥

1 AB ध्रान्त । 2 B त्येत । C चलति । 3 C सति । 4 A आलस्यम् । 5 A स्यग्रा 6 C रम् । 7 A सस्नेह । 8 B अक्रु ।

विदग्धं तद्यदालोके विवशाः सर्वजन्तवः ।
अनवस्थिततारं यत्तद्विह्वलमुदाहृतम् ॥

नासापुटस्फुरत्तारं निहञ्चितमुदाहृतम् ।
निभृतं तद्यदाश्लिष्यत्पुटमन्तरधोमुखम् ॥

रागारुणं स्फुरद्बाष्पापाङ्गमुत्कण्ठितं विदुः ।
अपाङ्गयोरूर्ध्वभावादालोकनमुदञ्चितम् ॥

सोत्सुकं तद्यदालोक्य भूयो भूयोऽवलोकयेत्[1] ।
दूरं धावति यत्प्रेम्णा तत्सोत्कमिति कथ्यते ॥

उत्कम्पं तद्यदुल्लोलं ताराभ्रूपक्ष्म सर्वतः ।
यत्रोल्लसत्यभिप्रायस्तदुल्लासीति कथ्यते ॥

यद्दर्शने विरक्तोऽपि क्षुभ्यते तत्समन्मथम् ।
यद्दर्शनान्महो जन्तोः सर्वस्य महि[2] तद्भवेत् ॥

पश्चा[3]दाक्षिप्यते दूरं यदपाङ्गस्य सञ्चरः ।
तद्व्याक्षेपि स पार्श्वे स्याद्विक्षेपीति विभाव्यते ॥

मूलमध्याग्रभागेषु भङ्ग्या[4] यद्विषयग्रहः ।
तत्त्रिभङ्गीति कथितं त्र्यश्रं तिर्यगुदञ्चितम् ॥

विकृष्टं तदधो वक्रापाङ्गभागापसर्पणम् ।
विनतं[5] तदिति ख्यातमृज्वायतमधोगतम् ॥

उल्ल[6]सत्पक्ष्मताराभ्रु स्फीतमित्यभिधीयते ।
अन्यत्र सोत्कमन्यत्र स्थितं व्यासङ्गि कथ्यते ॥

विक्षेपणं यद्भ्रूतारापक्ष्मणां तद्विसंस्थुलम् ।
आयतं विस्फुरत्तारं विस्फारितमुदाहृतम् ॥

---

1 A B क्य यः। 2 A B तम्। 3 B क्षा। 4 A B C संज्ञा। 5 शदम्। 6 C ल्लृ।

परिक्लिष्टपुटं म्लायत्तारं विलुलितं भवेत् ।
प्रेमार्द्रं मन्दविकसत्तारं ललितमीरितम् ॥

कल्लोल इव यत्कान्तिविच्छेदस्तत्तरङ्गितम् ।
कठोरं तद्यदुद्बाष्पमपि निर्बाष्प[1]वद्दृढम् ॥

वर्णाविभागो निद्रादेर्यस्य तत्कलुषं विदुः ।
तत्तद्वर्णप्रभाहीनं यत्तद्रूक्षमिति स्मृतम् ॥

सहायान्वेषणपरं यत्तत्कातरमुच्यते ।
मीलनोन्मीलना वृत्तिर्यत्र तच्चकितं भवेत् ॥

वीक्षितं सर्वतोदिक्कं द्रुतं यत्तच्चलं भवेत् ।
कोमलन्तु यदव्याजस्निग्धमुग्धावलोकितम् ॥

तरलं तदिति प्राहुर्लोलत्ताराकनीनिकम् ।
यद्विशेषानभिज्ञत्वं दृष्टे वस्तुनि तानि[2]तत् ॥

यत्प्रीणयति दृष्टस्य मनस्तत्प्रणयि स्मृतम् ।
द्रवीभूतं मनो यस्य दर्शने प्रेमगर्भि तत् ॥

परौत्सुक्यं विभाव्येत यत्र सोत्प्रासमेव तत् ।
भूयोभूयः स्पृहा यत्र दृष्टे तत्सस्पृहं भवेत् ॥

ह्लादि तद्दृष्टमात्रे यत् शोकादिव्यपनोदनम् ।
गतप्रत्यागतं यत्र प्रेङ्खोलं तत्प्रचक्षते ॥

धारावाहिकसञ्चारो यस्य तल्लोलमुच्यते ।
एते विकाराः शृङ्गाररसस्यैवोपयोगिनः ॥

एतेषु केचिद्दृश्यन्ते प्रायेणाद्भुतहास्ययोः ।
उद्वर्तितं तद्विज्ञेयं भ्रुवोरूर्ध्वं प्रकल्पनम्[3] ॥

---

1 B C यद्वा । D निष्पिष्ट । 2 C मानि । 3 B र्ध्वप्रकम्पनम् ।

विवृतोर्ध्वपुटान्तस्थतारमुद्वृत्तमुच्यते ।
उद्वृत्तान्तःपुटाक्षिप्ततारं यत्तद्विवर्तित[1]म् ॥

निष्पन्दमानपक्ष्माग्रताराश्रु स्तब्ध[2]मुच्यते ।
स्फुरद्भिश्लिष्टपक्ष्माग्रतारमुत्फुल्लमुच्यते ॥

ऊर्ध्वीकृतोल्लसत्तारमुल्लोलमिति कथ्यते ।
उध्दुरं विषयग्रासबद्धस्पृहमुदाहृतम् ॥

विश्लिष्टं शून्यविषयप्रवृत्तं क्रोधवेगतः ।
निष्ठुरं पुटयोरन्तस्तारयोर्लुठनं मुहुः ॥

अन्तःप्रौढाग्निसंशुष्यत्प्रभं[3]शुष्कमुदाहृतम् ।
प्रकटभ्रुकुटीदृष्टिर्यत्र तत्कुटिलं भवेत् ॥

चटुलं तद्यदन्यत्र दुष्प्रे[4]क्षं रूक्षभावतः ।
अनवस्थितिरेकत्र यत्र तत्स्यात् ससम्भ्रमम् ॥

सञ्चारशून्यं दौर्बल्याद्यत्तज्जडमितीरितम् ।
विषयालोकनव्यग्रं सव्यग्रमिति कीर्तितम् ॥

व्यथते विषयं द्रष्टुं यत्तत्सव्यथमुच्यते ।
शुष्यद्भ्रूपुटपक्ष्माग्रं यत्तान्तं तत्समीरितम् ॥

शून्यालोकनमार्तं स्यान्म्लानं म्लाय[5]त्कनीनिकम् ।
निपतद्भ्रूपुटं शुष्यत्प्रभं तप्तमुदाहृतम् ॥

यदश्रुलुलितालोकं मलिनं तदुदाहृतम् ।
मन्थरं तत्समाख्यातं यावच्छ्रुति विकस्वरम् ॥

तदेव बन्धुरं ख्यातं किञ्चिदुत्फुल्लतारकम् ।
स्फुरत्प्रभावं गम्भीरं धीरमित्युच्यते बुधैः ॥

---

1 A B र्तन । 2 B स्कन्ध । 3 A क्लवं । 4 A B न्यं तदुत्प्रेक्षम् । 5 A दानमय । B न्मानम्लायि ।

अनिश्चलं यच्छस्तास्त्वधा[1]तेऽपि तद[2]विक्रियम् ।
स्वभावालोकितं यत्र तदकृत्रिममुच्यते ॥

अविकारि विकार[3]स्य हेतौ यत्तदनुल्बणम् ।
गृह्यते येन सूक्ष्मार्थस्तदसम्भ्रान्तमुच्यते ॥

अव्याजं तदिति प्राहुर्यदच्छल[4]विलोकनम् ।
प्रौढरागारुणापाङ्गं यत्स्यात्तदनुपस्कृति ॥

भाषमाणमिवाभाति यत्सहर्षं तदुच्यते ।
सगर्वं तद्यदुत्फुल्लतारं स्थिरकनीनिकम् ॥

अपाङ्गकूणनं यत्र तदरोचकमुच्यते ।
यद्वि[5]नम्रपुटापाङ्गं तदनुत्सेकमुच्यते ॥

ऊर्ध्वाधःक्षिप्त[6]सञ्चारो व्याविद्धमिति कथ्यते ।
अपाङ्गयोरधस्ताराविक्षेपो विद्धमुच्यते ॥

विकृष्टं तच्छून्यमेव यदाकाशावलोकनम् ।
अन्तर्बाष्पस्फुरत्तारं विनिर्गीर्णमुदाहृतम् ॥

बहिस्ताराविनिष्क्रान्तैर्विनिष्क्रान्तमुदाहृतम् ।
अतस्मिस्तद्ग्रहो यस्य लोहितं तद्विलोभितम् ॥

एते दृष्टिविकारास्तु सम्यग्लक्षणलक्षिताः ।
महाकविप्रबन्धेषु दृश्यन्ते तद्विलोक्यताम् ॥

भावजा रसजाश्चापि तथा सञ्चारिभावजाः ।
षट्त्रिंशद्भरतेनोक्तास्ताः कथ्यन्तेऽत्र दृष्टयः ॥

स्निग्धा हृष्टा च दृप्ता च विस्मिता क्रोधिताऽपि च ।
दीना जुगुप्सिता चैव सभया भावदृष्टयः ॥

---

1 C पा । 2 B गत । 3 D स । 4 A च्छम । 5 B द्वि । 6 C प्र । 7 A वाह ।
8 A हते । 9 B हृष्टा । C तृप्ता ।

कान्ता सहास्या वीरा च साद्भुता रौद्रिका पुनः।
करुणासहिता दृष्टिर्बीभत्सा सभयानका ॥

दृष्टयो रसजा ह्येताः कथिता भरतादिभिः।
दीना[1] च मलिना चैव श्रान्ता लज्जा[2]न्विता तथा ॥

ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा।
कुञ्चिता चाभित[3]प्ता च जिह्मा च ललिताऽपि च ॥

वितर्किताऽर्धमुकुला विभ्रान्ता[4] विप्लुताऽपि च।
आकेकरा विशोका च त्रस्ता च मदिरा तथा ॥

इति विंशतिरुद्दिष्टा दृशः सञ्चारिभावजाः।
हर्षप्रसादललिता कान्ता मन्मथशालिनी ॥

विलस[5]द्भ्रूकटाक्षा च शृङ्गारे दृष्टिरुच्यते।
आकुञ्चितपुटापाङ्गा विभ्रान्तस्वल्पतारका ॥

अव्यक्तसञ्चारवती दृष्टिर्हास्ये प्रकीर्तिता।
तप्ता[6] विकसिता क्षुब्धा[7] गम्भीरा समतारका ॥

उत्फुल्लमध्या दृष्टिस्तु[8] धीरा वीररसाश्रया।
रोषरक्तान्तनयना स्फुरत्तारा विकस्वरा ॥

अक्षुब्धा स्यादचकि[9]ता वीरा युद्धप्रहर्षणी।
कुञ्चिताञ्चितपक्ष्माग्रा किञ्चिदुद्वृत्ततारका ॥

सद्यो विकस्वरान्ता च साऽद्भुता दृष्टिरुच्यते।
क्रूरा रूक्षारुणोद्वृत्ता निष्टब्धपुटतारका ॥

भ्रुकुटीकुटिला दृष्टी रौद्रा रौद्ररसे स्मृता।
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारका ॥

---

1 A शून्या। 2 B स्या। 3 A तृ। 4 B भ्रान्ता। 5 B C चल। 6 A स्तब्धा।
7 B ण्णा। 8 C या दृष्टिः। 9 C स्यादविक्षु।

नासाग्रानुगता दृष्टिः करुणा करुणे रसे ।
निकुञ्चितपुटापाङ्गा घृणोपप्लुततारका ॥

संश्लिष्टस्थिर[1]पक्ष्मा च बीभत्सा दृष्टिरुच्यते ।
प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका ॥

दृष्टिर्भयानकाऽत्यन्तभी[2]ता ज्ञेया भयानके ।
विशेषणाश्रया व्याख्या[3]दृष्टीनां कथ्यते पुरः ॥

हर्षे निश्चलतारत्वं प्रसादे स्निग्धतारका ।
व्यक्तप्रसक्तिः कान्ता[4]स्याल्ललिता सा च मन्थरा ॥

सन्न[5]तापाङ्गसञ्चारवती दृष्टिः समन्मथा ।
अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते ॥

अव्यक्तविकृतिर्दृष्टिर्गम्भीरेति प्रकीर्तिता ।
पक्ष्मणोरन्यसंश्लेषः[6]कुञ्चितं विनते[7]ऽञ्चितम् ॥

ऊर्ध्वप्रवृत्ततारं यत्सौम्यं समविलोकने[8] ।
दुरा[9]लोका भवेत्क्रूरा रूक्षा स्नेहविवर्जिता ॥

निश्चलायत[10]निष्टब्धा कुटिला सो[11]ग्रतारका ।
मन्थरा मन्दसञ्चारा कुञ्चिता त्र्यश्र[12]वीक्षणा ॥

बलात्कारेण विषयान् गृह्णती[13]स्यादुपप्लुता ।
व्याकोशमध्या[14]मधुरा स्थिरताराभिलाषिणी ॥

सानन्दाश्रुकृता दृष्टिः स्निग्धेयं रसभावजा ।
चला हसितगर्भा च विशत्ताराऽनिमेषिणी ॥

किञ्चिदाकुञ्चिता हृष्टा दृष्टिर्हासे प्रकीर्तिता ।
अपाङ्गे शौक्ल्यभूयिष्ठा हासगर्भेति कथ्यते ॥

---

1 B संश्लिष्टस्थित । 2 A B थैहि । 3 B यो यासाम् । 4 B C न्तिः । 5 A स्नि । 6 B रप्यसङ्कोचः । 7 A B ता । 8 C किते । 9 B दूना । 10 A B पद । 11 A लोर्ध्वा । 12 B स्पष्ट । 13 A ण्हाति । 14 B मथा । C शान्मध्य ।

सस्मिते तारके यस्याः स्मिता[1] विकसिता[2]न्तरा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा ॥

अवज्ञागर्भिणी दृष्टिर्दृप्तेति परिभाष्यते ।
अनभिव्यक्तविकृतिः विषये सत्त्वभूयसी ॥

यन्नापह्रियते दृष्टिर्विषयैरपहारिभिः ।
तदेव स्थैर्यमित्युक्तं दृष्टेः सर्वत्र कोविदैः ॥

विस्मयोत्फुल्लतारा च हृष्टोभयपुटाञ्चिता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥

रूक्षा[3] स्थिरोद्वृत्तपुटा विष्टब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटीदृष्टिः क्रुद्धा क्रोधेऽभिधीयते ॥

उत्तब्धपक्ष्मरुद्धा या स्रस्तारा च जलाविला ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥

रुच्येऽपि विषये दृष्टेरौदासीन्यं ह्यदीनता ।
सङ्कोचि[4]तपुटा श्यामा दृष्टिर्मीलिततारका ॥

पक्ष्मोन्मेषात्समुद्विग्ना[5] जुगुप्सायां जुगुप्सिता ।
विस्तारः स्यात्ततो ह्रासः[6] सङ्कोच इति कथ्यते ॥

छायावैगुण्यमेव स्याद्दृष्टेः श्यामत्वमुच्यते ।
तारापुटभ्रुवां[7] कम्पादुद्विग्नेति विभाव्यते ॥

जुगुप्सिता च विज्ञेया विषयादपरागिणी ।
विस्फारितोभयपुटा भयकम्पिततारका ॥

निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ।
इति स्वरूपतः प्रोक्ता दृष्टयो रसभावजाः ॥

---

1 A स्य स्फीता । B त्स्यात् स्थिरा । 2 A सद । 3 C क्रूरा । 4 A एकाञ्चि । 5 A ढ्विन्ना । 6 B ह्रासं । 7 B भ्रुवां ।

तारा समपुटा स्निग्धा निष्कम्पा शून्यदर्शना ।
बाह्यार्थाग्राहिणी श्यामा शून्या दृष्टिः प्रकीर्तिता ॥

प्रस्पन्दमानपक्ष्माग्रा नात्यन्तमुकुलैः पुटैः ।
मलिनान्ता च मलिना दृष्टिः पिहिततारका ॥

मलिना कथ्यते दृष्टिः क्षरदुष्णाश्रुदूषिता ।
[1]श्रमप्रम्लापितपुटा क्षामान्ताञ्चितलोचना ॥

सन्ना पतिततारा च दृष्टिः श्रान्तेति कथ्यते[2] ।
प्रम्लापनं भवेच्छोषः क्षामत्वमविकासिता ॥

निश्चेष्टता तारकाभ्रूपुटानां साद उच्यते ।
किञ्चिदञ्चितपक्ष्मा या पतितोर्ध्वपुटा ह्रिया ॥

त्रपाऽधोगततारा च दृष्टिर्लज्जावती भवेत् ।
म्लानभ्रूपुटपक्ष्मा च शिथिला मन्दचारिणी ॥

क्लमप्रविष्टतारा च ग्लाना दृष्टिरुदाहृता ।
अस्पष्टतारासञ्चारो दृष्टेः शैथिल्यमुच्यते ॥

किञ्चिच्चला स्थिरा किञ्चिदुन्नता तिर्यगायता ।
गूढा चकिततारा च शङ्किता[3] दृष्टिरुच्यते ॥

विषादविस्तीर्णपुटा पर्यस्तान्ताऽनिमेषिणी ।
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥

स्फुरिताश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटान्विता ।
सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते ॥

अनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
सन्ना पतिततारा च कुञ्चिता दृष्टिरिष्यते ॥

---

1 C omits two lines । 2 A दृष्टिः श्रान्ता प्रकीर्तिता । 3 A. मुकुला ।

मन्दायमानतारा या पुटैः प्रशिथिलैस्तथा ।
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥

लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी ।
गूढोद्वर्तिततारा च जिह्मा दृष्टिरुदाहृता ॥

मधुरा कुञ्चितान्ता च सस्मिताऽन्तर्विकासिनी ।
समन्मथविकारा च दृष्टिः सा ललि[1]ता भवेत् ॥

वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविकारा च दृष्टिरिष्टा वितर्किता ॥

अर्धव्याकोशतारा च ह्लादार्धमुकुलैः पुटैः ।
स्मृताऽर्धमुकुला दृष्टिः किञ्चिल्ललिततारका ॥

अनवस्थिततारा च विस्तीर्णोत्फुल्लमध्यमा ।
विभ्रान्ततारका दृष्टिर्विभ्रान्तेति हि कथ्यते ॥

पुटौ प्रस्फुरितौ यस्या निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरिष्टा तु विप्लुता ॥

आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥

विकोशि[2]तोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थिततारा च विकोशा दृष्टिरिष्यते ॥

त्रासादुद्वर्तितपुटा मुहुः कम्पिततारका ।
त्रासादुत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ॥

भयचिन्ताश्रुशून्या स्याद्वैवर्ण्ये मलिना भवेत् ।
निर्वेदे च श्रमे श्रान्ता स्वेदे लज्जासु लज्जिता ॥

---

1 A पति । 2 B कासि ।

ग्लाना दृष्टिरपस्मारव्याधि[1]ग्लानिषु वर्तते ।
शङ्काविषादयोर्ज्ञेया शङ्किता च विषादिनी ॥

दृष्टिर्मुकुलिता स्वप्नसुखनिद्रासु वर्तते ।
कुञ्चिता सूचितानिष्टा दुष्प्रेक्षाऽक्षिव्यथासु च ॥

अभितप्ता च निर्वेदे त्वभिघाताभितापयोः ।
जिह्मा दृष्टिरसूयायां जडतालस्ययोर्भवेत् ॥

ललिता हर्षधृत्योः स्यात्स्मृता तर्के वितर्किता ।
आह्लादेष्वर्धमुकुला गन्धस्पर्शसुखादिषु ॥

विभ्रान्तदृष्टिरावेगे सम्भ्रमे विभ्रमेऽपि च ।
विप्लुता[2] चापलोन्मादुःखार्तिमरणादिषु ॥

आकेकरा दुरालोके विच्छेदप्रेक्षितेषु च ।
विबोधामर्षगर्वौग्र्यमतिषु स्याद्विकासिता[3] ॥

त्रस्ता त्रासे भवेद्दृष्टिर्म[4]देषु मदिरा भवेत् ।
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥

त[5]था भावरसोपेतं मुखरागं प्रयोजयेत् ।
स्वरूपं विनियोगश्च दृष्टीनां प्रतिपादितः ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
नायकनायिकाभेदतत्तदवस्थातदाश्रय-
रसभावदृष्टिविकारादिवर्णनं
नाम पञ्चमोऽधिकारः ॥

---

1 C मोह । 2 B सिप्लता । 3 B कोशि । 4 B र्मा । 5 B य ।

॥ श्रीः ॥

# अथ षष्ठोऽधिकारः ।

---

अनुभूतिप्रकाराश्च रसानां गतयोऽपि च ।
आभासाश्च रसानाञ्च तेषामन्योन्यमेलनम् ॥

तद्विकल्पादयोऽन्येऽपि भावा वाक्यार्थताऽपि च ।
अत्राभिधीयतेऽस्माभिः कल्पवल्ल्यनुसारतः ॥

उत्पन्ना रतिरेकत्र प्रथमं दर्शनादिभिः ।
दीप्यमाना विभावैः स्वैस्तत्सान्निध्यादिकल्पितैः ॥

कटाक्षवीक्षणोद्यानगमनाद्यनुबन्धिनी ।
तद्दर्शनोपजनितैः स्मृतिहर्षमदादिभिः ॥

वागारम्भानुभावेन दीप्यमानाऽनुवर्धते[1] ।
तद्दर्शनाद्दीप्यमानकम्परोमोद्गमादिभिः ॥

हृदारम्भानुभावेन शृङ्गारं विशिनष्टि सा ।
त्रिधाऽनुभावानुबन्धा रसोत्कर्षं यथारति ॥

पुष्यन्त्यन्यत्र विद्वद्भिरेवमेव विलोक्यताम् ।
अष्टधा गतिरेतेषां रसानां कथ्यते बुधैः ॥

आश्लेषलीनविच्छेद[2]सूक्ष्मव्यतिकरस्थिराः ।
शोभनश्च समश्चे[3]ति सर्वत्राभिनयाश्रयाः ॥

---

1 B नोऽनुबध्यते । 2 B द्दा । 3 B श्चे ।

रसस्य वर्तमानस्य स्वसामग्रीसमेन च ।
अन्येन सङ्गतिः स्याचेदयमाश्लेष उच्यते ॥

रसोऽनुभूयमानश्चेद्रसान्तरतिरस्कृतः ।
अन्यरागान्निवृत्तो वा स लीन[1] इति संज्ञितः ॥

विच्छिन्नमध्यः प्रबलैर्विरुद्धैर्हेतुभिः क्वचित् ।
पुनश्चेन्नानुवृत्तः[2] स्यात्स विच्छेद इतीरितः ॥

आलम्बनगुणस्थैर्यात्संस्कारस्यानुवर्तनात् ।
योऽनुयाति विलीनो यः स सूक्ष्म इति कथ्यते ॥

समकालसमुत्पन्नैस्त्रिभिर्द्वाभ्यामथापि वा ।
रसश्चेद्व्यतिकीर्येत[3] स तु व्यतिकरः स्मृतः ॥

आविर्भूय तिरोभूय रसमध्ये क्वचिद्रसाः[4] ।
आपादयन्ति प्रथमे स्थैर्यं चेत्स स्थिरः स्मृतः[5] ॥

समकालसमुत्पत्तेः समकालानुभूतिभिः[6] ।
स्थायिनोः सात्त्विकादीनां साम्याच्च सम ईरितः ॥

विरोधिमित्रशत्रूणां रसानां सङ्करेऽपि च ।
महिम्ना शोभते स्वेन यः स शोभन ईरितः ॥

हास्याभिभूतः शृङ्गारस्तदाभासो भविष्यति ।
हास्यो बीभत्समिलितो हास्याभास उदाहृतः ॥

वीरो भयानकाविष्टो वीराभास इतीरितः ।
बीभत्सकरुणाश्लेषादद्भुताभास उच्यते ॥

रौद्रः शोकभयाविष्टो रौद्राभास इतीरितः ।
हास्यशृङ्गारखचितः करुणाभास उच्यते ॥

---

1 A B लील । 2 A रक्तः । 3 B त्यैत । 4 B सम् । 5 A चेति स्थिराः स्मृताः । 6 B तः ।

बीभत्सोऽद्भुतशृङ्गारी बीभत्साभास उच्यते ।
रौद्र[1]वीरानुषक्तश्चेदाभासः स्याद्भयानके[2] ॥

रक्ता[3]परक्तयोश्चेष्टा यतो[4] हासकरी नृणाम् ।
दृ[5]ष्टा श्रुता सूचिताऽपि शृङ्गाराभासकारि[6]का ॥

पूयशोणितमांसादिविष्ठालेपादयोऽपि च ।
हास्यं भिन्दन्ति यत्रैते स हास्याभास ईरितः ॥

सभासु योषितां मध्ये शूरमानस्य कस्यचित् ।
भयात्पलायनं युद्धाद्वीराभास उदीरितः ॥

दिव्यादिदर्शनेऽस्रा[7]दिलेपोरस्ताडनादयः[8] ।
अद्भुतं घ्नन्ति यत्तस्मादद्भुताभास इष्यते ॥

अवज्ञाक्षेपवाक्या[9]दिरौद्रकर्मकृतोद्यमः ।
बिभेति शोचति यदि स रौद्राभास उच्यते ॥

शोचतो हास्यशृङ्गारभूयिष्ठं चेष्टितं यदि ।
स एव करुणाभासस्तद्भावश्चेत्स्वभावजः ॥

यत्तु बीभत्सरूपस्य सम्भोगो वनिताजनैः ।
रूपयौवनसम्पन्नैर्बीभत्साभास उच्यते ॥

बिभ्यतो[10] यत्र दृश्येत वीररौद्रादिभाषितम्[11] ।
भयानकाभास इति कविभिः प्रविविच्यते ॥

भागद्वयं प्रविष्टस्य प्रधानस्यैकभागता[12] ।
रसानां दृश्यते यत्र तत्स्यादाभासलक्षणम् ॥

प्रथमं दृश्यते यत्तु श्रूयते सूच्यतेऽपि वा ।
तत्प्रधानमिति प्राहू रसप्राधान्यवेदिनः ॥

---

1 B C द्रो । 2 A B कः । 3 A राज्ञा । 4 B रतौ । 5 B C पू । 6 B तारि । 7 C भ्रा । 8 C दि यत्र । 9 A हास्या । 10 A विशुतो । 11 B वितः । 12 A तः ।

समम्नन्तरितो भावैरपि वाद्यन्त[1]गैर्यदि ।
एकरूपप्रवृत्तो यः स प्रधानो भविष्यति ॥

आद्यन्तयोर्द्विगुणितः स्वेतरैः स्वयमादिमः ।
मध्यगो वा भवेत्सम्यक्स रसाभासतामियात् ॥

पौर्वापर्येण भावाः स्युः समा यदि मिथो द्वयोः ।
तदेव रसविद्वद्भीरसमेलनमुच्यते ॥

शृङ्गारवीरयोः सम्यग्भवेदन्योन्यमेलनम् ।
रौद्रबीभत्सयोस्तद्वत्तथैवाद्भुतहास्ययोः ॥

भयानकस्य करुणस्य स्यादन्योन्यमेलनम् ।
रसाः कार्यवशात्सर्वे मिलन्त्येव परस्परम् ॥

प्रथमं यो रसः ख्यातः स प्रधानो भविष्यति ।
द्वयोः प्रवेशो[2] संसर्गो भावो यदि समो भवेत् ॥

[3]द्वित्राणामपि संसर्गसाम्ये सङ्कर उच्यते ।
तेषामेकत्र[4] बाहुल्यं प्रधाने[5] यत्र दृश्यते ॥

आद्यन्तयोः प्र[6]गुणितः स प्रधानो भविष्यति ।
इत्थं स्वतन्त्रैराभासैर्मिलितैः सङ्करै रसैः ॥

तारतम्यं विजानीयात्सम्यग्रागापरागयोः ।
एवं विभाव्य कविभिः काव्यबन्धो विरच्यताम् ॥

विलोकिताः[7] काव्यबन्धा रसभावविवेचकैः ।
कवेः प्रयत्नसाफल्यं कीर्तिं पुष्ण[8]न्ति शाश्वतीम् ॥

एवंरूपं प्रकारञ्च देशं कालमृतुं वयः ।
प्रकृतिं भावलिङ्गे च ज्ञात्वा विद्या[9]द्रसस्थितिम् ॥

---

1 A न्तर । C रति चाद्यन्त । 2 B शः । 3 C omits three lines । 4 B स्य । 5 B नो । 6 B षि C द्विं । 7 A B क्यताम् । 8 C ष्य । 9 C कुर्या ।

एवंप्रकारानालोक्य समाकर्ण्यानुभूय च।
परेभ्यो दर्शयन्नेवं श्रावयन्ननुभावयन्॥

सर्वप्रकारैः सम्पूर्णकामः सन्तुष्टमानसः।
प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन सः॥

शान्तो विषयहेयत्वदर्शनश्रवणादिभिः।
धर्माख्यानपुराणैश्च पुण्यतीर्थावगाहनैः॥

पुण्याश्रमनिवासैश्च योगिभिर्नित्यसङ्गमैः।
जडान्धबधिरादीनां तारतम्यावलोकनैः॥

व्याधिदारिद्र्यमरणैर्नारक्यायातनाश्रुतैः।
पुण्यक्षयप्रपतनकुयो[1]निश्रयणादिभिः[2]॥

क्लेशप्रयत्नवैफल्याद्दुःखत्रितयघा[3]तनैः।
इत्यादिभिर्विभावैः स्याच्छमात्मा कस्यचिद्रसः॥

यथाशक्ति परित्राणं दुःखिनामविशेषतः।
विना रागेण सर्वत्र सुखिनामनुमोदनम्॥

शाकमूलफलैरन्यैः शरीरस्थितिसाधनम्।
व्रतोपवासनियमो वल्कलाजिनधारणम्॥

अहिंसा सर्वभूतानामविशेषादनुग्रहः।
अङ्गेषु कार्श्यं कार्कश्यं स्नानं त्रिषवणोचितम्॥

ऋज्वायतासनं ध्यानं नासाग्राहित[4]लोचनम्।
विषयेभ्यो नियमनमिन्द्रियाणां निवृत्तये॥

इत्यादयो विशेषाः स्युः प्रायः शान्ते[5]षु योगिषु।
मानापमानयोः शोकहर्षयोः सुखदुःखयोः॥

---

1 B कायो। 2 A द्विवः। 3 BC या। 4 C न्यस्त। 5 B यशस्ते।

समवृत्तितया प्रायो नानुभावा भवन्ति हि ।
आनन्दबाष्परोमाञ्चस्वेदस्तम्भाः स्युरेकदा ॥

शान्तानुभावो रोमाञ्च एक एवेति केचन ।
नो[1]पकुर्वन्ति शान्तस्य भावाः सञ्चारिणो यतः ॥

तस्माच्छान्तरसस्यैवं विकलाङ्गत्वमुच्यते ।
निवृत्ते विषयासङ्गे स्वान्ते शान्तिमुपेयुषि ॥

निर्वेदादेरनुदयादनुभावो न दृश्यते ।
अतो हर्षाद्यनुभवराहित्याद्वि[2]कलाङ्गता ॥

अस्तीति सत्तामात्रेण प्रायः शान्तो विभाव्यते ।
यतो न भावोऽभिनयो न शक्यो नाट्यकर्मणि ॥

शमे स्थायिनि तत्र स्युर्भावा हर्षादयः कथम् ।
अतोऽयं विकलप्रायस्तथापि श्रेष्ठ उच्यते[3] ॥

प्रकृष्टस्योपयोगित्वात्पुरुषार्थस्य[4] देहिनाम् ।
यथाविभव[5]माख्याता रसा भावास्तदुद्भवाः ॥

अथैषां देशकालादिदर्शनश्रवणादिभिः ।
अनुभावाः स्वसंवेद्यास्तान्स[6]म्यगभिजानते ॥

देशादयो विभावास्तु हर्षादीन्व्यभिचारिणः ।
आलम्बनविभावेषु जनयन्ति यथाबलम्[7] ॥

जनयन्ति हि ते तत्तच्चेष्टां तेषु परस्परम् ।
चेष्टाभिरनुमीयन्ते ह्यनुभावा विशारदैः ॥

भावा विनैव चेष्टाभिर्न दृश्यन्ते कदाचन ।
तस्माच्चेष्टाविशेषज्ञो भावुको रसिको भवेत् ॥

---

1 A ना । 2 B त्यं वि । 3 B इशमो विद्वद्भिरीरितः । 4 B षस्य च । 5 B हित । 6 A स्तास्स । B स्तत्स । 7 B विधम् ।

कृत्रिमोऽकृत्रिमश्चेति द्विधा देशो विभाव्यते।
कृत्रिमा नगरग्रामपल्लीजनपदादयः॥

अकृत्रिमाः सरिच्छैलवेलाऽरण्यादयस्तथा।
[1]अकृत्रिमास्तु शिल्पज्ञैः क्रियन्ते कृत्रिमाः क्वचित्॥

कृत्रिमा अपि तद्वत्तैर्विरच्यन्तेऽप्यकृत्रिमाः।
कालो वसन्तवर्षादिर्बहुभेदः प्रकल्प्यते॥

लवा[2]दिभेदादेतेषु विनोदाः स्युर्महोदयाः।
विनोदा बहवः सन्ति शृङ्गारे हास्यवीरयोः॥

रौद्रेऽपि क्रमशोऽन्यूना भवन्ति सुखिनां नृणाम्।
बीभत्से नायकाभासविनोदः शस्यते क्वचित्॥

भयानके च शान्ते[3] च विनोदो नैव दृश्यते।
एतौ विनोदनीयौ स्तः सुहृदादिभिरेकदा॥

अष्टमीचन्द्रशक्रार्चा[4]वसन्तमदनोत्सवाः।
बकुलाशोकविहृतिः[5] शाल्मलीमूलखेलनम्॥

एते वासन्तिकाः प्रायो विनोदा रसिकोचिताः।
उद्यानयात्रा सलिलक्रीडा पुष्पापचायिका॥

नवाम्रखादिका[6] चूतमाधवीनवसङ्गमः।
एते प्रायो विनोदाः स्युर्निदाघे सुखभोगिनाम्॥

क्रीडाशिखण्डिलास्यश्च कादम्बकलहो मिथः।
नवाम्बुदाभ्युद्गमनं नवोढा[7]भ्युद्गमोत्सवः॥

कालागरुद्रुमोल्लासिनवपल्लवभञ्जनम्।
एते विनोदाः कथिताः प्रावृषि प्रीतिमेयुषाम्॥

---

1 C omits two lines। 2 A देवा। B C देशा। 3 A शोके च। 4 B वक्राच्च।
5 B बृहती। 6 B वातिका। C दिरा। 7 A B C वोढा।

चतुर्थीकन्दुकक्रीडा चन्द्रिकालालनोद्यमः[1] ।
मृणालवारिकङ्केलि[2]हंसलीलावलोकनम् ॥

यक्षरात्रिबलिक्रीडासरित्पुलिनकेलयः ।
एते विनोदाः कविभिः प्रायः शरदि कल्पिताः ॥

प्रावोधिका देवतानां दोलालीलावलोकनम् ।
मातुलुङ्गफलैस्तत्तत्पानकासवकौशलम् ॥

क्रीडाशकुन्त[3]सङ्घातबालातपविनोदनम् ।
एते विनोदाः कथिता हेमन्ते काव्यवेदिभिः ॥

आलापाभ्यसनक्रीडा शुकशारिकयोर्मिथः ।
बाल[4]कुक्कुटमेषादियुद्धनैपुणदर्शनम् ॥

पुराणशीधुपानादिनवान्नोत्सवकल्पना[5] ।
इत्यादयो विनोदाः स्युः शिशिरे रागदीपनाः ॥

स्थिरानुरागयोर्यूनोर्विनोदैरेवमादिभिः ।
परस्परोपचारैश्च सम्भोगः पुष्टिमश्नुते ॥

स सम्भोगश्चतुर्धा स्याद्भुजिधात्वर्थयोगतः ।
भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु ॥

नवरागानन्तरजः पाल्योऽभीष्टोपचारतः ।
मानानन्तरसम्भोगः कौटिल्यं न[6]त्यजेत्क्वचित् ॥

हृद्यः प्रवासानन्तर्यो हृद्यान्नाभ्यवहारवत् ।
करुणानन्तरभवः सविस्र[7]म्भानुभूतिकृत् ॥

स मितः सङ्करश्चैव सम्पन्नश्च समृद्धिमान् ।
इत्याद्याः कवयः प्रायः[8] चतुर्णां च प्रयुञ्जते ॥

1 A लाल्लोद्गुमः । 2 A खादिका केचित् । C वेदिका केलि । 3 B नि । 4 AB लाव । 5 A म्पना । 6 C त्यामि । 7 A वांर । 8 A काव्ये ।

नवानुरागे युवभिरुपचारः ससाध्वसैः ।
मितं प्रयुज्यते यस्मात्ततस्स मित उच्यते ॥

मानानन्तरसम्भोगो व्यलीकादिस्मृतेः पुनः ।
सङ्कीर्यते यतस्तस्मात्स सङ्कर इतीरितः ॥

सम्पन्नकामैरायातैः प्रोषितैरुपभुज्यते ।
सम्पन्न एव यत्तस्मात्सम्पन्न इति कथ्यते ॥

प्रत्युज्जीवनहर्षादेः प्रवृद्धो मृतजीवतोः ।
दीपनातिशयैर्दीप्तः सम्भोगः स्यात्समृद्धिमान् ॥

स्नेहो यत्र भयन्तत्र यत्रेर्ष्या मदनस्ततः ।
वैमनस्यं व्यलीकञ्च स्नेहतो भयतो भवेत् ॥

ईर्ष्या[1]या मदनाच्चापि विप्रियं मन्युरुद्भवेत् ।
यन्म्लायति मनस्तापादातपम्लानसस्यवत् ॥

तद्वैमनस्यं स्नेहेऽपि स्नेहालम्बनदोषतः ।
सरसव्रण[2]सम्भिन्नं रात्रिजागरणालसम् ॥

प्रियं प्रभाते पश्यन्त्या वैमनस्यं प्रजायते ।
रोषः स्वेदश्च कम्पश्च मुखे वैवर्ण्यमेव च ॥

मा स्प्राक्षीः शोभनं साधु गच्छेति वचनं भवेत् ।
अभीप्सितार्थानुत्पत्तिर्व्यलीकमिति कथ्यते ॥

निवार्यमाणोऽपि पुनः[3] पुनरायाति यो बलात् ।
सङ्घर्षान्मत्सरात्तस्या व्यलीकमुपजायते ॥

निधाय वामं हृदये करमन्यं विधून्वती ।
त्वमिहास्स्व वयं याम इति रोषाद्ब्रवीति च ॥

---

1 B हर्षो । 2 A रससव्रण । 3 A गुणः ।

प्रति[1]श्रुतार्थानिर्वहणं यत्तद्विप्रियमुच्यते ।
यावज्जीवमहं दासस्त्वमेव च मम प्रिया ॥

इत्युक्त्वा योऽन्यथा कुर्याद्विप्रियं तत्र जायते ।
रुदितं क्रोधहसितं दूतादिप्रेषणं मुहुः ॥

सबाष्पं सशिरःकम्पं कृतं साध्विति वक्ति च ।
मान्यावमानिता मन्युरवबोधनिरोधकृत् ॥

सपत्नीरतिसम्भोगे सौभाग्यं बहुशो वदन् ।
दृश्यते च पतिर्यस्यास्तत्र मन्युः प्रजायते ॥

शङ्कते बाष्पपूर्णाक्षी रशनादि क्षिपत्यधः ।
वलयादि मुहुर्बाह्वोः परिवर्तयति द्रुतम् ॥

अभाषमाणा शयने तूष्णीं शेतेऽवकुण्ठिता ।
एवं प्रवृद्धमन्यूनां स्त्रीणां भवति विक्रिया ॥

सापराधे प्रिये दृष्टे सलज्जे च सशङ्किते ।
सोपालम्भैर्वचोभिस्तमीर्ष्यार्थैः खेद[2]येन्मृदु ॥

न निष्ठुरं वचो ब्रूयान्नातिक्रुध्येत्कदाचन ।
न चातिपरिहासः स्यात्सखीभिस्तेन वा क्वचित् ॥

बाष्पोन्मिश्रैर्वचोभिस्तमात्मनिक्षेपमन्थरैः ।
प्रतिब्रूयादुरस्थेन पाणिना स्निग्धवीक्षितैः ॥

निश्वासैः सशिरःकम्पैः कटीहस्ततयाऽपि च ।
अपराधैर्महीलेखागणितै[3]स्तर्जनैरपि ॥

एभिरेव रतिर्यूनोर्भूयः स्याद्भूयसी मिथः ।
एवं प्रणयरोषैश्च भूयोभूयः समागमैः ॥

1 A B परि । 2 A दृश । 3 D जितै ।

प्रवृद्धो दीपनैर्दीप्तः शृङ्गारः पुष्टिमश्नुते ।
वैमनस्यादयो भावाः शृङ्गारस्योपयोगिनः ॥

प्रयुञ्जते चेदन्यत्र गौण्या लक्षणयाऽथ वा ।
यदैकत्रानुभूयन्ते युगपत्तत्तदिन्द्रियैः ॥

विषयाः सुखरूपेण पुष्यन्ति हि तदा रतिम् ।
शिरः पार्श्वोन्नतं[1] दृष्टिः किञ्चित्साचीकृता भवेत् ॥

तर्जनी कर्णदेशस्था शब्दस्य श्रवणे नृणाम् ।
हस्तो गण्डाश्रितो नेत्रे किञ्चिदाकुञ्चिताञ्चिते ॥

उत्क्षेपश्च भ्रुवोः कम्पः स्पर्शे रोमाञ्चविक्रिया ।
त्रिपताकः करो मूर्ध्नि चलनं किञ्चिदानने ॥

आकेकरा भवेद्दृष्टी रूपालोकनकर्मणि ।
उत्फुल्ला नासिका किञ्चित् नेत्रे किमपि कुञ्चिते ॥

एकोच्छ्वासश्च भवति रसगन्धसमागमे ।
इन्द्रियार्थैश्च मनसा भाव्यतेत्वनुभावितः ॥

मनसस्त्रिविधो भावः कथ्यते सर्वसूरिभिः ।
इष्टोऽनिष्टश्च मध्यश्चेत्येवं त्रेधा विभिद्यते ॥

इष्टे तु विषये गात्राह्लादनैः पुलकोद्गमैः ।
मनोहराभिश्चेष्टाभिरिष्टं भावं विनिर्दिशेत् ॥

अनिष्टे विषये तत्र नासाग्राश्रित[2]कूणनम् ।
शिरसश्च परावृत्तिरप्रदानश्च चक्षुषः[3] ॥

गात्रस्तम्भो जुगुप्सा च भावेऽनिष्टे भवन्ति हि ।
न सौमुख्यं न वैमुख्यं[4] नातिहर्षो न कुत्सनम् ॥

---

1 A B भ्रमात्पार्श्वोन्नता । 2 A प्रस्थित । 3 A षा । 4 A न सौख्यं न च वैषम्यं ।

माध्यस्थ्यं मनसो ह्येवं मध्यस्थे विषये भवेत् ।
कथिता ये त्वभिनया विषयानुभवात्मकाः ॥

तेऽपि[1] दूरसमीपस्थसूक्ष्मव्यवहितात्मना ।
पृथक्स्थितास्त्वेकदा[2] स्युः कदाचित्स्युः समुच्चिताः ॥

प्रियापराधे याः[3] काश्चिदवस्थाः कथिता अपि ।
विशेषः कथ्यते तासां कल्पवल्ल्यनुसारतः ॥

यूनोस्तु रक्तयोर्मानविरहे गोत्रवैकृते ।
विवेष्टनं प्रियस्पर्शे निर्भर्त्सनमभाषणम् ॥

शय्यान्ते च पराक्शय्या स्वेदो गद्गद[4]भाषणम् ।
एते प्रायेण भावाः स्युर्भोगाङ्के श्रेष्ठ[5]योषिताम् ॥

अवाङ्मुखमवस्थानं निश्श्वासो बाष्पमोचनम् ।
विलोकनञ्च सख्यादेः[6] साधु साध्विति भाषणम् ॥

एते भावाः स्युरुत्स्वप्नापराधे गो[7]त्रवैकृते ।
उत्थानं शयनाद्दूरशयनञ्च विवेष्टनम् ॥

अपाङ्गविगलद्बाष्पमन्तस्स्तम्भितरोदनम् ।
एते विशेषतः स्वप्नापराधे स्युर्मनोहराः ॥

एवं मानवियोगे स्युः प्रवासविरहे पुनः ।
आकस्मिके तु हृत्कम्पो मूर्च्छा संज्ञा भ्रमः स्मृतिः ॥

तदन्वेषणचिन्ता च तत्पथाशाविलोकनम् ।
विरहे सम्भ्रमोत्थे तु विषयापरिनिश्चयः ॥

दैविके कार्श्यसन्तापदेवतार्चनजागराः ।
वैवर्ण्यमङ्गदाहश्च प्रलापो[8]ऽश्रुविनिर्गमः ॥

---

1 B वि । 2 C स्सूचकाः । 3 B धजाः । 4 A द्रुमम । 5 A चेष्ट । 6 A सङ्ख्यातो । 7 B गे । 8 A तापो ।

आकस्मिकवियोगे स्युर्विकाराश्चैवमादयः ।
विरहे बुद्धिपूर्वे तु जाड्यनिर्वेददीनताः ॥

वैवर्ण्यकार्श्यमालिन्यसन्तापज्वरमूर्च्छनाः ।
व्याध्युन्मादविषादाश्च शापेऽप्येते च कीर्तिताः ॥

मध्यमानान्तु नारीणामीर्ष्यारोषोत्तरं वचः ।
सोपालम्भश्च परुषं मानादिषु विभाव्यते ॥

अधमानां तु नारीणां केशाकर्षणताडनम् ।
बन्धनं परुषं वाक्यं प्रायः सर्वत्र दृश्यते ॥

आस्व[1]वस्थासु कथिता ये ये भावाः पृथक्पृथक् ।
अयोगविरहस्यैते कथ्यन्ते भावकोविदैः ॥

एवं विभाव्य बध्नन्तु[2] प्रबन्धान्कविपुङ्गवाः ।
अन्यथा यदि वैरस्यं जनयन्ति मनीषिणाम्[3] ॥

एवमुक्तस्वरूपाणां रसानामर्थतत्त्वतः ।
वाक्यार्थता व्यङ्ग्यता च[4] कथ्यते शास्त्रवर्त्मना ॥

रसवन्ति हि काव्यानि सालङ्काराणि कानिचित् ।
एकेनैव प्रयोगेण निर्वर्त्यन्ते महाकवेः ॥

यथा गङ्गादिसलिलं नानारूपरसात्मकम् ।
आत्मभावं नयेदन्तः प्रविष्टं लवणाकरः ॥

भावो भावान्तराण्यात्मभावं स्थायी तथा नयेत् ।
वेधकैः स्वेतरेषाञ्च भावैः स्वैरतिरस्कृतः[5] ॥

यावत्प्रबन्धानुवृत्तः स्थायी रत्यादिरुच्यते ।
एकस्मिन्नसयोर्वाक्ये मुक्तके कुलकादिषु ॥

1 C कांमा । 2 B न्ति । 3 A B णः । 4 A दिः । 5 B तम् ।

द्वयोरुपनिपातेऽन्यः प्रधानमितरो गुणः ।
द्वयोस्तुल्यवदुत्पत्तौ संसर्गोलङ्कृतिस्तु सा ॥

काका विशेषणेनाथ विभावादिबलेन वा ।
प्राबल्यं यस्य दृश्येत तस्य प्राधान्यमिष्यते ॥

यत्र काकुविशेषोऽपि न स्यात्तद्दुष्टमेव हि ।
तुल्यवद्भावयुगल[1]प्रतीतिर्यत्र दृश्यते ॥

श्लेषरूपेण तद्वाक्ये वाक्यद्वित्वस्य दर्शनात् ।
रसभेदप्रतीतिस्तु यदि स्याद्गुण एव सः ॥

निर्वेदादेरताद्रूप्यादस्थायी स्वदते कथम्[2] ।
वैरस्यायैव तत्पोषः तेनाष्टौ स्थायिनो मताः ॥

प्रकाशानन्दचिद्रूपां रसतां प्रतिपद्यते ।
प्रकृष्यमाणो यो भावः स स्थायीति निगद्यते ॥

काव्योपात्तैर्विभावादिभावैः समुपबृंहितः ।
स्थायी रसात्मतां यातस्तत्र वाक्यार्थतामियात् ॥

वाच्या[3] प्रकरणादिभ्यो बुद्धिस्था वा क्रि[4]या यथा ।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः ॥

शब्दोपात्तक्रिया ज्ञाताऽथवा प्रकरणादिभिः ।
कारकादिविशिष्टैव यथा वाक्यार्थतामियात् ॥

तथा विभावानुभावसात्त्विकव्यभिचारिभिः ।
स्थायी विशिष्टः काव्यादिवाक्यार्थो भवति स्फुटम् ॥

तेन रत्यादिशब्दानामप्रयोगेऽपि[5] कुत्रचित् ।
रसभावप्रतीतिस्तु तत्तद्वाक्येषु सेत्स्यति ॥

---

1 B ली। 2 D तथा। 3 AB चा। 4 A क्कि। 5 B नां प्रयोगेऽपि च।

सम्बन्धो रसकाव्यादेस्तद्वाक्यार्थतया भवेत् ।
काव्यं सामाजिकोद्देशप्रवृत्तमिति यत्ततः ॥

तत्रत्यरसमेवास्य वाक्यार्थमिव मन्यते ।
काव्यादिबन्धबद्धस्य रसस्य स्थायिनोऽपि च ॥

वाक्यार्थत्वञ्च शब्दार्थसम्बन्धादवगम्यते ।
सम्बन्धो द्वादशविधः स्मृतः शब्दार्थयोर्बुधैः ॥

द्वादशधा सम्बन्धः शब्दस्यार्थस्य यः स साहित्यम् ।
त्रिस्कन्धः स चतुर्भिस्तनुभिः स्याच्चतुश्चतुर्भिश्च[1] ॥

वृत्तिर्विवक्षा तात्पर्यप्रविभागाविहोदितौ ।
ततो व्यपेक्षासामर्थ्यान्वयाश्चैकार्थभावना ॥

दोषहानं गुणादानं तथाऽलङ्कारयोगिता ।
रसावियोग इत्येते सम्बन्धाः कथिता बुधैः ॥

वृत्तिस्त्रिधा पदार्थेषु पदानामुच्यते बुधैः ।
अभिधा लक्षणा गौणीत्येतासां रूपमुच्यते ॥

शब्दशक्तिपरामर्शात्तद्व्यापारात्मिका बुधैः ।
अभिधेये प्रवृत्तिर्या सा वृत्तिरभिधोच्यते ॥

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते ॥

क्रोशन्ति मञ्चा इत्यादौ सा वृत्तिरवगम्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

सा[2] सिंहो देवदत्तोऽयमित्यादाववगम्यते ।
रूढ्या यत्र[3]सदर्थोऽपि लोके शब्दो निवेशितः ॥

1 A reads त्रिस्कन्धः स चतुर्भिः स्याच्चतुर्भिश्च । 2 B स । 3 B त्र ।

स मुख्यस्तत्र तत्साम्याद्गौणो[1]ऽन्यत्र स्खलद्गतिः ।
आसां स्वरूपं वक्ष्यामः परस्ताच्च सविस्तरम् ॥

शब्दार्थयोः समन्यूनाधिकताभेदतस्त्रिधा[2] ।
विवक्षा सा तु सन्दर्भे कविभिस्तु नियम्यते ॥

क्वचिदर्थस्य विस्तारः क्वचिच्छब्दस्य विस्तरः ।
तुलाधृतमिवैकत्र साम्यं शब्दार्थयोः क्वचित् ॥

क्वचित्स्वल्पेऽप्यर्थे[3] प्रचुरवचनैरेव रचना
क्वचिद्वस्तु स्फारं कतिपयपदैरर्पितरसम् ।
यथावाच्यं शब्दाः क्वचिदपि तुलायामिव धृताः
त्रिभिः कल्पैरेवं कविवृषभसन्दर्भनियमः ॥

असावुन्नीयते सद्भिः त्रिप्रकारैश्च हेतुभिः ।
एकः स्यात्काकु[4]विच्छेदादिना प्रक[5]रणादिना ॥

कश्चि[6]त्तथैवाभिनयादिना कोऽपि यथाक्रमम् ।
भिन्नकण्ठो ध्वनिर्धीरैः काकुरित्यभिधीयते ॥

प्रश्नगर्भाभ्युपगमोपहासाक्षेपकादिकाः[7] ।
बहुधा काकवः प्रोक्तास्तत्तदर्थानुसारतः ॥

गतः स काल इत्यादौ प्रश्नगर्भोऽभिधीयते ।
युष्मच्छासनलङ्घादौ ज्ञेयाऽभ्युपगमात्मिका ॥

मथ्नामि कौरवेत्यादावुपहासात्मिका भवेत् ।
लाक्षागृहानले[8]त्यादौ विवादाक्षेपकात्मिका ॥

वितर्कगर्भा काकुः स्याद्यथोन्मत्तपुरूरवाः[9] ।
वाक्यान्यथात्वादेकः स्यादेको वाक्यासमासिकः[10] ॥

1 A णे। 2 A धिकारता भवेत्। 3 A र्तें व्य। 4 A त्ताम्र। 5 C दनाना प्रक।
6 BC क्वचि। 7 A reads प्राणगर्भाभ्युपगमापहासाकम्पनादिकाः। 8 C न्दहे। 9 C पुरं नरम्।
10 A सता।

वाक्यसम्भेदरूपोऽन्यो वाक्यानुच्चारणादपि ।
इत्यादिभेदा बहुधा विच्छेदस्येरिता बुधैः ॥

सहभृत्यगणेत्यादौ ज्ञेयो वाक्यान्यथात्मकः ।
वत्से त्वं[1] जीवितेत्यादौ ज्ञेयो वाक्यासमासिकः[2] ॥

दिङ्मातङ्गघटेत्यादौ वाक्यसंभेदरूपकः ।

अत्र वदन्त[3] एवेत्यादिवाक्यसम्भेदो रोमाञ्चेन वक्तुर्गुणविशेषज्ञानं प्रकाशयति ।

प्रत्यग्रारिकृतेत्यादौ वाक्यानुचा[4]रणात्मकः ॥

तत्र हा वत्सेति वाक्यानुचारणं कृ[5]तप्रक्रियस्यानुचितं परिदेवितमिति सूचयति ॥

विवक्षा सा बहुविधा व्यङ्ग्या प्रकरणादिना ।
तथा बहुप्रकारैव व्यङ्ग्यात्वभिनयादिना ॥

हठाच्चुम्बति मानिन्या यन्निषेधपरं वचः ।
तदेव मानश्लथनाच्चुम्बनादिविधायकम् ॥

एवं विलोक्यतां व्यङ्ग्यो[6] बुधैः प्रकरणादिना ।
एवं मद्देहमेते[7]ति वाक्यादावभिधी[नी]यते ॥

वाक्यार्थं प्रति शेषत्वं यत्स्यादुच्चारणस्य तु ।
तत्तात्पर्यं त्रिधा तत्स्याद्वाक्यार्थत्रिविधत्वतः[8] ॥

स चाभिधेयः प्रत्याय्यो ध्वनिरूप इति त्रिधा ।
कारकादिविशिष्टो यः सोऽभिधेयः क्रियादिकः ॥

यथाऽभिधीयमानार्थादन्यथाऽनुपपत्तितः ।
प्रतीयमानो वाक्यार्थो यः स प्रत्याय्य ईरितः ॥

---

1 C विधे त्वं । 2 A तः । C का । 3 All Mss read प्रदत्त । 4 A क्यक्ष । 5 A B प्रक्र । 6 A यङ्ग । 7 A हि मे... । 8 A र्थे त्रिविधं यतः ।

विषं भुङ्क्ष्वेति वाक्यादावेष तादृक्प्रतीयते ।
ध्वनिर्द्विधा स चैकः स्यादर्थतः शब्दतोऽपरः ॥

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥

शब्दे द्विविधो ध्वनिरयमनुनादरूप एकः स्यात् ।
प्रतिशब्दरूप एकस्तयोर्विशेषो विविच्यतेऽस्मा[1]भिः ॥

तत्र कोणाहतिस्फूर्ज[2]त्कांस्यकेङ्कारनादवत्[3] ।
अर्थान्तरं प्रतीतानुस्यूत[4]मेव व्यनक्ति यत् ॥

सोऽनुनादध्वनिरिति कथ्यते ध्वनिकोविदैः ।
प्रतीतार्थं त्यजन्यत्र गुहादिप्रतिशब्दवत् ॥

पृथगेवोपलभते स एव स्यात्प्रतिध्वनिः ।
प्रत्याययस्तंत्तदर्थं तत्र तत्र ध्वनिं[5] ध्वनिः ॥

शान्त्यै वोऽस्तु कपालेति वाक्यादावादिमो[6] ध्वनिः ।
कपाल[7]दामलिखितां स्रक्ष्यत्यादिपदात्मिकाम् ॥

लिपिं गणाः[8] पठन्तीति वाक्यार्थो योऽभिधीयते ।
तेन सृष्ट्यादिकर्तृणां देवानां दा[9]म गम्यते ॥

प्रतीतेन प्रतीता स्याच्छम्भोर्देवादिसंसृतिः[10] ।
तयाऽस्य[11]नित्यतैकत्वस्वातन्त्र्यादिः प्रतीयते ॥

तत्तत्रानुस्यूतमेव ध्वनन्यत्रावसीयते ।
सोऽनुनादध्वनिर्नाम तस्योदाहृतिरीदृशी[12] ॥

भम धम्मिअ वीसत्थो इत्यादिर्वाऽनुनादभाक् ।
भ्रमेति विधिरूपो यो वाक्यार्थोऽभि[13]हितः पुरः ॥

1 A कवि । 2 C तेः शिञ्ज । 3 A केङ्कारणा भवेत् । C कोणनिनादवत् । 4 A न्यून । 5 A ध्वानिर्व्व । 6 A बन्तिमो । 7 A ला । 8 A गणं । 9 A धां । 10 A दं सति । 11 A B स्या । 12 A B हृतमीदृशम् । 13 A प ।

न गन्तव्या च गोदे[1]ति निषेधोऽनेन गम्यते।
तेन सङ्केतभूमिस्त[2]दनुस्यूतं प्रतीयते॥

लावण्यसिन्धुरित्यादि प्रतिशब्दनिदर्शनम्।
यतः सिन्धूत्पलाद्यर्थाननुस्यूतः स्वनन्नपि॥

तत्तत्समानावयवान्रूपातिशयबोधकान्।
पृथगेवोपलभते स एव स्यात्प्रतिध्वनिः॥

भक्तिप्रह्व[3]यदेत्यादावनुनादः प्रतीयते।
विशेषणानां तुल्यत्वात्सामर्थ्यात्कर[त्कुरु]शब्दजात्॥

क्रियासुरिति वाक्यार्थो हस्तानुस्यूतमेव यत्।
अनुनादं प्रजनयन्नृपैः [नेते]पुरुषरूपताम्॥

तेजस्विताश्च ध्वनयत्यनुनादोऽत्र[4] दृश्यते।
दत्तानन्देतिवाक्यादौ प्रतिनादध्वनिर्यथा॥

विशेषणानां तुल्यत्वात्सामर्थ्यादपि यो गिरः[5]।
प्रतिशब्दं प्रजनयन्धेनुषु स्वविशेषणैः॥

माहात्म्यं ध्वनयत्यासां प्रतिनादो भवेत्ततः।
शब्दध्वनिर्द्विधाभूतः शब्दादेवावगम्यते॥

ध्वनितात्पर्ययोः कैश्चित्पृथक्त्वं कथ्यते बुधैः।
"अप्रतिष्ठमविश्रान्तं स्वार्थे यत्परतामिदम्[6]॥

वाक्यं विगाह[7]ते तत्र न्याय्या तत्परताऽस्य सा।
यत्र तु स्वार्थविश्रान्तं प्रतिष्ठां तावदागतम्॥

तत्प्रसर्पति तत्तस्मात्सर्वत्र ध्वनिना स्थितिः।"
ध्वनितात्पर्ययोर्भेदं केचिन्नेच्छन्ति तन्मते॥

---

1 कुड्डङ्गे। 2 C स्तत्त। 3 A ह्वोत्यदा। B ह्वाय दात्वा। 4 A दः प्र। 5 A गोचरः। B गोगिरः। D नोगिरः। 6 B यम्। 7 A क्यलिङ्गास।

समान[1]लक्षणत्वाच्च तयोर्न च पृथक्स्थितिः ।
उक्तश्च टीकाकारैश्च तयोरैक्यं प्रति क्वचित् ॥

"एतावतैव विश्रान्तिस्तात्पर्यस्येति किं कृतम् ।
यावत्कार्यप्रसारित्वात्तात्पर्यं[न]तुलया[ला]धृतम् ॥" इति ।

ध्वनितात्पर्ययोर्भेदो ब्राह्मणब्रह्मचारिवत् ।
तदवान्तरभेदो हि प्रायेण पृथगुच्यते ॥

तात्पर्यमेव वचसि ध्वनिरेव काव्ये
सौभाग्यमेव गुणसम्पदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः
शृङ्गार एव हृदि मानवतो जनस्य ॥

अतो ध्वन्याख्यतात्पर्यगम्यमानत्वतः स्वतः ।
काव्ये र[2]सालङ्कारादिर्वाक्यार्थो भवति ध्रुवम् ॥

एवं त्रिरूपं तात्पर्यं तत्तत्तात्पर्यवेदिभिः ।
वक्तृद्वारा वाक्यधर्म एवेति परिकीर्त्यते ॥

अर्थस्यैतावतः शब्द एतावानलमित्ययम् ।
प्रविभागोऽर्थ[3]भागेषु शब्दभागविभागता ॥

महावाक्यार्थदेहस्य य ए[4]वावयवाः स्मृताः ।
ते चावान्तरवाक्यार्था[5]स्तत्र तत्र यथाक्रमम् ॥

महावाक्यस्यावयवभूतावान्तरवाक्यभाक् ।
विभागः प्रविभागः स्यात्पदानामप्यवान्तरे ॥

वाक्ये पदार्थेषु[6] पदे प्रकृतिः प्रत्ययस्ततः ।
तदर्थेषु विभागो यः प्रविभाग इतीरितः ॥

1 A सामान्य । 2 C छु । 3 B गोत्थ । C गोत्र । 4 थै । 5 B कार्यार्थां । 6 B वार्थेषु च ।

अपि यद्व्यतिरेकेण निष्कृष्टं[1] प्रविभागतः ।
प्रत्यायनं पदार्थानां पदे न प्रथमं ततः ॥

विवक्षा चैव तात्पर्यं प्रविभाग इति क्रमात् ।
एवं शब्दे चानुरूप्यं वक्तृद्वारा निरूप्यते ॥

सा व्यपेक्षा पदार्थानामाकाङ्क्षा या परस्परम् ।
या च क्रियाकारकादिभावेनान्वययोग्यता ॥

वाक्ये पदपदार्थानां तत्सामर्थ्यमितीरितम्[2] ।
परस्परस्य ग्रथनं पदानामन्वयः स्मृतः ॥

स नीरक्षीरवत्क्वापि तिलतण्डुलवत्क्वचित् ।
पांसूदकवदन्यत्र दृश्यते बहुधाऽन्वयः ॥

अविभागेन[3] भवनमेकार्थीभाव इष्यते[4] ।
अनेनैव प्रकारेण व्याख्याता मुक्तकादयः ॥

द्वाभ्यां चतुष्पदीभ्यान्तु युगलं तिसृभिः पुनः ।
सन्दानितं चतसृभिः कथितञ्च कलापकम् ॥

एकप्रघट्टकेनैव निबद्धो[5] वाक्यविस्तरः ।
स सङ्घातो भवेत्कोशो नानावाक्योपसङ्ग्रहः ॥

नानाप्रघट्टकैर्बन्धः कोश इत्युच्यते बुधैः ।
स एवोद्यानसलिलक्रीडादिभिरनेकधा ॥

प्रबन्धमध्ये नद्धश्चेदेतत्प्रकरणं भवेत् ।
तत्समूहः प्रबन्धः स्यात्त[6]त्र रामादिवद्भवेत् ॥

न रावणवदित्यत्र विधितश्च निषेधतः ।
सिद्धो महावाक्यार्थो यः स चतुर्वर्गसाधनः ॥

---

1 A अतोऽवयवव्यतिरेको निष्कर्षः । 2 A स्मात्सामान्यमी । 3 B C एकीभावेन ।
4 A कीभाव इति स्मृतः । 5 B बन्धो । 6 A द्य ।

अतः स्कन्धो[1] व्यपेक्षादिः वाक्यवाक्यार्थयोरपि ।
स्मृतोऽन्तरङ्गभूतश्चेत्येवं निर्णीयते बुधैः ॥

एवंविधस्य वाक्यस्य सुप्रयोगार्हतोच्यते[2] ।
निर्गुणत्वं सदोषत्वं रसालङ्कारशून्यता ॥

एतानि घ्नन्ति वाक्यस्य सुप्रयोगार्हतां ध्रुवम् ।
प्रयोगयोग्यतां कुर्युः ये चत्वारो गुणादयः ॥

उक्तञ्च--

"सगुणं सरसं काव्यं सालङ्कारञ्च यद्भवेत् ।
तन्निर्दोषं सदोषन्तु तद्विपर्ययतो भवेत् ॥"

दोषास्त्रिधा पदे वाक्ये वाक्यार्थे च यथाक्रमम् ।
तत्र तत्रैव भिन्नाः स्युस्तेऽपि षोडशधा पुनः ॥

भोजादिभिरलङ्कारा गुणा दोषाश्च दर्शिताः ।
अतो विरम्यते तेषां रूपं कथयितुं मया ॥

रसस्य वाक्यतात्पर्यगोचरत्वाद्यथार्थतः ।
अतोऽनेन प्रकारेण वाक्यार्थत्वञ्च सिध्यति ॥

रसाश्रये वि[3]गायन्ति केचित्तेषां निराक्रिया ।
भरतादिमतेनैव क्रियते सोपपत्तिका ॥

प्रोक्तः सदाशिवेनास्य स्वरूपाश्रयनिर्णयः ।
"रसः स एव स्वाद्यत्वाद्रसिकस्यैव वर्तनात् ॥

ना[4]नुकार्यस्य वृत्तत्वात्काव्यस्यातत्परत्वतः ।
द्रष्टुः प्रमोदव्रीडेर्ष्यारागद्वेषप्रसङ्गतः ॥

लौकिकस्य स्वरमणीसंयुक्तस्यैव दर्शनात् ।"
रत्यादिरेव स्थाय्याख्यः तत्तदालम्बनाश्रयः ॥

1 A स्तब्धो । 2 A योग्यता । 3 A ऽपि । 4 B अ ।

स्वविभावादिसंसृष्टरूपेणैव रसो भवेत् ।
व्यापारेण च काव्यस्य तदीयाभिनयेन च ॥

रसात्मकत्वनियमात्स्थायी स्वाद्यत्वमेष्यति ।
सामाजिकादिरेवास्य रसस्याश्रय उच्यते ॥

रसस्य वर्तमानत्वान्ना[1]नुकार्यस्य सम्भवः ।
अनुकार्यस्य रामादेः कालातिक्रमदर्शनात् ॥

नातिक्रान्तानुकार्यस्य रसभाव[2]नया कविः ।
करोति काव्यं[3] रसिकान्रञ्जयेयमितीच्छया ॥

बध्नाति काव्यं यत्तस्माद्रसः सामाजिकाश्रयः ।
अतः सामाजिकोद्देशप्रवृत्तत्वाद्यथार्थतः ॥

काव्यस्या[4]तत्परत्वेन तात्पर्यं तद्रसे भवेत् ।
अतो रसस्य तात्पर्यगम्यत्वं सम्यगीरितम् ॥

अतोऽस्तु जन्यजनकसम्बन्धो रसकाव्ययोः ।
अतः सामाजिकस्यैव रसस्याश्रयता स्थिता ॥

ननु स्वदयितासक्तं[5] पश्यतो न रसोदयः ।
तर्हि रामादिरसिकान् शृण्वतो जायते कथम्[6] ॥

रामादिरर्थो न भवेद्विभावोऽस्य रसस्य तु ।
अविद्यमानत्वादेव रामादेर्न रसोद्भवः ॥

अत्राऽविवक्षित[7]स्वार्थविशेषोऽ[8]तत्परत्वतः ।
धीरोदात्ताद्यवस्थानां[9] प्रतिपादनवर्त्मना ॥

रामादिशब्दो रत्यादेः विभावो भवति स्फुटम् ।
इममेवार्थमुद्दिश्य कथितं भरतादिभिः ॥

---

1 A त्सा । 2 A र्यः स्याद्रसोद्भाव B सोत्पाद । 3 B C व्य । 4 B स्य । 5 B क्तः । 6 A रसः 7 B प्रि वाक्यतः । 8 A षे । 9 B द्यु or दि ।

शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्ष इव रामादीन्कारणत्वेन मन्यते ॥

रामादिगतभोगादिप्रतिपादनवर्त्मना ।
सुदृढाहितसंस्कारातिशयास्ते सभासदः ॥

शश्वद्विधूतस्वपर[1]विवेकाश्च विशेषतः ।
सम्भोगाद्यनुसन्धानप्रवणाहङ्कृतित्वतः ॥

निर्विकल्पं निरुपमं स्वादं तलो[2]पभुञ्जते ।

एवमुक्तं भवति—स्वतोऽविद्यमानैरपि रामादिभिः कविसन्दर्भकौशलेन प्रत्यक्षवच्छब्दोपनीतैः तद्यथापारानुसन्धानैकचित्ततया श्रोतृभिः स्वपरविवेकविधूननेन प्रतिपन्नो रसो जायते ॥

काव्यानुसन्धानवशाच्छ्रोतृसामाजिकौ रसे ॥

रसिकौ तद्वदेव स्यान्नटोऽपि च[3] रसाश्रयः ।
इति प्रष्टुः[4] प्रतिवचः पुरस्तादेव दर्शितम् ॥

अतः सामाजिकस्यापि काव्यस्य च रसस्य च ।
भाव्यभावकरूपोऽपि सम्बन्धोऽस्तीति दर्शितः

प्रतिपाद्यप्रतिपादकसम्बन्धः पूर्वमेवोक्तः ।
तत्रैव जन्यजनकसम्बन्धोऽपि प्रकाशितप्रायः ॥

नटाभिनयचातुर्यात्प्रबन्धे कविकल्पिते ।
प्रयोगानुभवो ज्ञेयः श्रोतुः सामाजिकस्य च ॥

तत्तच्छब्दार्थसम्बन्धनिर्णीतिद्वारपूर्वकः ।
स्वस्वशब्दार्थसम्बन्धवित्ति[5]र्निर्णीतिरुच्यते ॥

1 B वर । 2 A मं स्वातन्त्र्येणो । 3 B दोषैश्च । 4 B पृष्टं । 5 A रक्ति D. शक्ति ।

सर्वस्यैव हि शब्दस्य स्वार्थे[1]वृत्तिविभागतः ।
षोढा विभागो भवति तत्तदर्थवशादपि ॥

स वाचको लाक्षणिको व्यञ्जको गमकोऽपि च ।
प्रत्यायकद्योतकाख्याविति षोढा विभिद्यते ॥

तत्तच्छब्दोपाधितया षोढा सोऽर्थो विभज्यते ।
अर्थज्ञापक[2]सामर्थ्यसम्बन्धः सोऽपि षड्विधः ॥

एतेभ्यो भिन्न एतेभ्यस्तात्पर्यार्थोऽपि दृश्यते[3] ।
अर्थे[4] गृहीतसम्बन्धः शब्दो वाचकसंज्ञकः ॥

यद्गुणाद्यविशेषेण वस्तुमात्रं प्रतीयते ।
तद्वस्तु वाच्यसंज्ञो[5]ऽर्थ इति विद्वद्भिरीरितः ॥

सा श[6]ब्दस्याभिधा वृत्तिः वस्त्वेकज्ञापकक्रिया ।
स्वार्थे स्ववृत्त्ययोगेन तत्सम्बन्धिनि वस्तुनि ॥

तद्रूपेण तु बोद्धव्यः शब्दो लाक्षणिको भवेत् ।
तादृगर्थो भवेल्लक्ष्यो लक्षणावृत्तिसंश्रयः ॥

स्वाभिधेयाविनाभूतप्रतीते वस्तुनि क्वचित् ।
शब्दव्यापारविश्रान्तिहेतुता[7] लक्षणोच्यते ॥

सम्बन्धमत्यजन्वाच्यलक्ष्यतद्धर्मतद्गुणैः ।
तत्तद्विशिष्टातिशयं व्यञ्जयन्व्यञ्जको भवेत् ॥

रसालङ्कारवशतो गुणधर्मवशात्तु वा ।
वाच्यादतिशयो वाऽपि लक्ष्यादतिशयोऽपि वा ॥

दृश्यते यत्र तद्रूपमर्थं व्यङ्ग्यं विवृण्वते ॥
स्वपदार्थधर्मगुणगतरसादिसहकारिकर्मसामर्थ्यात् ।
अतिशयवदर्थकल्पितविश्रान्तिर्व्यक्तिरित्युक्ता ॥

1 AB र्थां । 2 C ज्ञापकत्वादि । 3 C विभिद्यते । 4 B र्थों । 5 A ज्ञो ।
6 A स्याच्छ । 7 A त्वे ।

विशिष्टे वाच्यलक्ष्यार्थे त[1]द्विशेष्यैकदेशतः ।
विवक्षितार्थं क्रमशो गमयन् गमको भवेत् ॥

विशिष्टवाच्यलक्ष्यार्थविशेषणसमा[2]श्रितम् ।
गुणभावरसादीनां [ गमनं ] ग[3]म्य ईरितः ॥

विशिष्टे वाच्यलक्ष्येऽर्थे विशेषणविशेष्ययोः ।
यावदर्थं विवृण्वन्ती या[4] वृत्तिर्गतिरीरिता ॥

[5]गम्ये गमकशब्दस्य वृत्तिर्गतिरिति स्मृता ।
स्ववृत्तिद्वार[6]तः स्वार्थविशेषणगुणादितः ॥

अर्थान्तरमनुस्यूतं द्योतयन्द्योतको भवेत् ।
गुणधर्मरसादिभ्यः प्रतीतेभ्यः पृथक्पृथक् ॥

तत्तद्विशेषसामर्थ्यकल्प्योऽर्थो द्योत्य ई[7]रितः ।
वाक्यार्थावयवीभूतपदा[8]र्थान् जिघ्रती क्रमात् ॥

विवक्षिते द्योतमाना या वृत्तिर्द्युति[9]रुच्यते ।
द्योत्ये द्योतकशब्दस्य व्यापृतिर्द्युतिरीरिता ॥

प्रतीतो[10]ऽतिशयो यत्र वाच्यलक्ष्यादिवस्तुषु ।
प्रत्याययंस्तमेवार्थं शब्दः प्रत्यायको भवेत् ॥

गुणे रसे वाऽलङ्कारे पदवाक्यार्थसंश्रये ।
प्रतीयमानोऽतिशयः प्रत्याय्यो[11]लक्ष्यवाच्ययोः ॥

अविश्रमेण व्यापारो रसाद्यतिशयावधिः ।
प्रत्यायकस्य प्रत्याय्ये प्रतीतिरिति कथ्यते ॥

देशकालक्रियाजाति[12]रूपवाच्यादिवस्तुषु ।
षट्पदार्थविचाराय गुणा[13] धर्माश्च कल्पिताः ॥

1 A ष्टवाप्यलक्ष्यार्थे त्व । 2 A तया । 3 A गौरवे ग B गौरवं र । C गौरव्यो D गौरसो । 4 A चिन्वन्ती व्या । 5 C omits this line । 6 A स्ववृद्धयादिग । 7 A मर्थो द्योत्य इती । B कल्प्यो द्योत्य । 8 B रा । 9 B वृत्तिर्ध्वनि । 10 BC त्य । 11 B C त्ययो । 12 B धीतम् । 13 B C ण ।

कविभिः स्वीक्रियन्ते ते तज्ज्ञैः काव्यादिसम्पदे ।
अत्रैवा[1]ऽप्यभिधीयन्ते वाच्या[2]द्यर्थोपलब्धये ॥

देशो निम्नोन्नतत्वादिराकारो धर्म ईरितः ।
तस्मिन्मृदुत्वकाठिन्यकार्ष्ण्यशौक्ल्या[3]दयो गुणाः ॥

नक्तंदिवविभागेन द्विधा कालः प्रकीर्तितः ।
तमस्तेजश्च तद्धर्मौ गुणास्तत्रार्तवादयः ॥

यः संयोगविभागादिः क्रियाधर्मः स कथ्यते ।
तत्र वैफल्यसाफल्यसुसाधुत्वादयो गुणाः ॥

निवृत्तिश्च प्रवृत्तिश्च जातिधर्मावितीरितौ ।
धैर्यादयो गुणास्तत्र सहजाहार्यरूपतः ॥

ते भवेयुस्त्रिधा तत्र वाङ्मनःकायरूपतः ।
शोभनाशोभनत्वेन ते भवेयुर्द्विधा पुनः ॥

धैर्यादयोऽत्र सहजा आहार्योऽभ्याससम्भृतः ।
माधुर्यनिष्ठुरत्वादिगुणो वाचि प्रकल्पितः ॥

क्रूरत्वशान्तिमत्त्वादिगुणाः स्युर्मानसा गुणाः ।
लावण्यसौकुमार्यादिः शारीरः कल्पितो गुणः ॥

गुणत्रयोपाधिभिन्ना त्रिधा प्रकृतिरुच्यते ।
[4]अर्भकत्वाद्यवस्थैव तासु धर्मितयोच्यते ॥

जात्याश्रया गुणा एव तासु प्रकृतिषु स्वतः ।
आकारवत्त्वादिरेव द्रव्यधर्म इतीर्यते[5] ॥

गुणः शोभाऽऽभिरूप्यादिः द्रव्ये कविभिरुच्यते ।
व्यक्तताऽव्यक्ततादिस्तु गुणे धर्म इतीर्यते ॥

---

1 A तत्र ते । 2 A काव्या । 3 B शुक्लत्वौष्ण्या । C शौक्ल्य कृष्णा । 4 A omits three lines । 5 C reads after this आकारत्वादिके धर्मे द्रव्यधर्म इतीरिते ।

वस्तुशोभाकरत्वं[1] यत्स गुणः कल्पितो गुणे ।
धर्मो गुणो यः क्रियायास्स स एवेह कर्मणि ॥

धर्मः स एव कविभिः सामान्ये परिकल्पितः ।
यदवान्तरसामान्यभेदाश्रयसहिष्णुता ॥

व्यक्तिषु व्याप्यवृत्तित्वं सामान्ये कल्पितो गुणः ।
स्वाश्रयाभिन्नरूपत्वं धर्मः स्यात्समवायभाक् ॥

गुणद्रव्यैकघटनासामर्थ्यं गुण ईरितः ।
मुग्ध[2]त्वादिविशिष्टत्वं यत्स धर्मो विशेषभाक् ॥

विनियोगार्हता तेषां गुण एवेति कल्प्यते ।
ये धर्मा ये गुणाः क्लृप्ता वाच्यलक्ष्यादिवस्तुषु ॥

तैस्तैस्तदर्था[3]तिशयो ग्राह्यः काव्यादिसम्पदे ।
वर्णेन च पदेनापि पदाभ्याञ्च पदैरपि ॥

वाक्येन वाक्यार्थेनैते ह्यर्थाः षोढा वि[4]कल्पिताः ।
विवक्षितार्थसम्पत्तिहेतवः स्युर्यथोचितम् ॥

कारकेण कदाचित्स्यादभिधायाः कदाचन[5] ।
तद्धितेन समासेन सर्वनाम्ना कदाचन ॥

प्रकृत्या प्रत्ययेनापि धातुकाकूपसर्गतः ।
वक्तु[6]र्विवक्षाऽलङ्काररसादिभ्यः कदाचन ॥

वाच्यो लक्ष्यत्वमायाति लक्ष्यो वाच्यत्वमेति च ।
एवं विनिमयश्चापि व्यत्ययश्च परस्परम् ॥

वाच्यादयोऽर्था यास्यन्ति स्वोचितातिशयाप्तये ।
एतद्रूपेण[7] बोद्धव्यं तत्तद[8]र्थविवेक्तृभिः ॥

---

1 A स्यावत् । 2 A ण्ड । 3 B रथैस्या । 4 BC इश । 5 A B क्रिययाऽपि कदापि च ।
6 C र्विभि । 7 A B तद्रूदेव हि । 8 A स्तरपदार्थं ।

विवक्षितमभिप्रायः फलं भावः प्रयोजनम् ।
तात्पर्यमिति पर्यायशब्दा वाक्यार्थगोचराः ॥

प्रयुज्यमानोऽभीष्टार्थः कारकादिसमन्वितः ।
नीयते यत्प्रबोधाय तत्प्रयोजनमुच्यते ॥

योऽर्थो बुद्धिस्थितोऽभीष्टो वक्तृवाक्येन गम्यते ।
तद्विवक्षितमित्युक्तं दर्पणादौ मुखादिवत् ॥

यदर्थस्या[1]भिमुख्येन पदार्था ह्युपकुर्वते ।
सोऽभिप्रायस्तदुत्कर्षः प्रायशब्देन कथ्यते ॥

प्रधानमुपकार्योऽर्थः पदार्था ह्युपकारकाः ।
तत्परत्वं प[2]दार्थानां तात्पर्यं तदितीरितम् ॥

अभीष्टार्थपरीपाको नेत्रादेरथवा कवेः ।
द्रुमादिफलवद्यत्र स्वाद्यते तत्फलं भवेत् ॥

व्यापारो यत्र नेत्रादेः शृङ्गारादिर्विभाव्यते ।
अर्थसन्दर्भचातुर्यात्स भाव इति कथ्यते ॥

भाट्टैः प्राभाकरैरेष वाक्यार्थः कथ्यते द्विधा ।
पदार्थान्योन्यसंसर्गो वाक्यार्थ इति भट्टवाक् ॥

पदार्थ एव[3] वाक्यार्थ इति प्राभाकरा विदुः ।
कवेर्विवक्षया यस्य प्राधान्यं परिकल्प्यते ॥

भवेत्स एव वाक्यार्थ इति निर्णीयते बुधैः ।
अर्थाः पदै[4]रभिहिताः स्वातन्त्र्येण पृथक्पृथक् ॥

अन्योन्ययोग्यसंसर्गमाकाङ्क्षन्ते परस्परम् ।
संसर्गयोग्यैः कथितैः[5] संसृष्टास्ते विमृश्य च ॥

---

1 A र्थे स्वा । 2 A B त्वात्प । 3 B धर्मो । D इति । 4 A B र्थवादै । 5 B सहितैः ।

कस्योपकुर्म इति च प्रधानस्योपकुर्वते ।
प्रधानं यत्परं तेऽपि पदार्थास्तत्परा यतः ॥

भवन्ति तस्मात्तात्पर्यमित्यर्थान्त[1]रमुच्यते ।
[2]वक्तृद्वारा वाक्यधर्मस्यैव वाक्यार्थकल्पनम् ॥

विशेषणानि सर्वत्र विशिंषन्त्यपि सर्वतः ।
विशेष्यस्य प्रधानत्वं स्वाश्रयत्वं विवृण्वते ॥

अतो रसालङ्कारादेः प्राधान्यं यत्र दृश्यते ।
तत्तदन्यतमस्तत्र वाक्यार्थत्वं प्रयास्यति ॥

इति शब्दार्थयो रूपं सिद्धं शब्दार्थनिर्णये[3] ।
भट्टाभिनवगुप्तार्यपादैरेवं प्रदर्शितम् ॥

एवं विभाव्य कविभिस्तत्तदर्थो निबध्यताम् ।
अपरैः कैश्चिदाचार्यैः प्रकारान्तरकल्पितम् ॥

शब्दार्थयोः स्वरूपन्तु तद्विविच्याभिधीयते ।
शब्दस्त्रिधा वाचकश्च तथा लाक्षणिकोऽपि च ॥

व्यञ्जकश्च तदर्थश्च त्रिधा वाच्यादिभेदतः ।
तात्पर्यार्थः पदार्थेभ्यो वाक्यार्थोऽस्तीति केचन ॥

वाच्यादिरर्थो वाक्यार्थ इति प्राभाकारादयः ।
यस्य यत्राव्यवहितसङ्केतो गृह्यते स्फुटम् ॥

स तस्य वाचकः शब्द इति शब्दानुशासनम् ।
जातिक्रियागुणद्रव्यभेदात्सङ्केतितः पुनः ॥

चतुर्धा भिद्यते तेषु जातिरेकेति केचन ।
गौरित्येव हि शब्दस्य प्रवृत्तिर्जातिगा स्मृता ॥

---

1 A थंद्वा । 2 A reads वक्तृद्वारा । वाक्यसान्निहितस्यैव तात्पर्यपरिकल्पना । 3 A B यैः ।

गच्छतीत्यस्य शब्दस्य प्रवृत्तिः स्यात्क्रियागता ।
शुक्ल इत्यस्य शब्दस्य प्रवृत्तिर्गुणगामिनी ॥

डित्था[1]दिसंज्ञाशब्दस्य प्रवृत्तिर्द्रव्यगामिनी ।
प्रवृत्तेश्च निवृत्तेश्च व्यक्ति[2]र्योग्या स्वभावतः ॥

अर्थक्रियाकारितया वृत्तिस्तस्यामवस्यति ।
आनन्त्याद्व्यभिचाराच्च व्यक्तीनां तत्र तत्र तु ॥

सङ्केतकरणाशक्तेः सङ्केतस्स्यादुपाधितः ।
गौः शुक्लश्चलतीत्यादिशब्दानां नैव संभवेत् ॥

क्वचित्कदाऽपि विषयविभाग इति यत्ततः ।
उपाधावेव सङ्केतः स्वतः शब्दस्य गृह्यते ॥

उपाधिर्वस्तुधर्मस्स[3] सिद्धः साध्य इति द्विधा ।
सिद्धोऽपि स्यात्पदार्थस्य प्राणदो वा विशेषकृत् ॥

उपाधिः सिद्धरूपो यः सा जातिरिति कथ्यते ।
उक्तो वाक्यपदीयेऽपि जात्युपाधिः स तद्यथा ॥

स्वरूपतो गौर्न गौः[4] स्यान्नागौरपि च तत्त्वतः ।
तत्र गोत्वाभिसंबन्धाद्गौरित्येवाभिधीयते ॥

यतः शुक्लादिना वस्तु लब्धसत्त्वं विशि[5]ष्यते ।
स सिद्धो वस्तुधर्मोऽत्र गुणोपाधिरितीरितः ॥

साध्यः पूर्वापरीभूतावयवादिक्रियात्मकः ।
गच्छतीत्यत्र विद्वद्भिः क्रियोपाधितयोच्यते ॥

यत्संहृतक्रमं वक्त्रा संज्ञारूपो यदृच्छया ।
उपाधित्वेन डित्थादिष्वर्थे[6]षूपनिवेशितः ॥

---

1 B तीर्थां । 2 B वृत्ति । 3 C स्सतु तद्धर्मः । 4 A रपि । 5 A शे । 6 B शब्दे ।

स शब्दः सिद्धसाध्यान्यो[1] द्रव्योपाधिरिति स्मृतः ।
शुक्लश्चलति गौर्डित्थ इत्यादौ तु चतुष्टयी ॥

प्रवृत्तिरिति शब्दानां महाभाष्यकृदभ्यधात् ।
गुणत्वं यदणुत्वादेः[2] पाठाच्च गुणमध्यतः ॥

पारिभाषिकमेवेति कणादमतिकल्पितम् ।
गुणक्रियायदृच्छादेरैकरूप्येऽपि तत्त्वतः ॥

तत्तदाश्रयभेदेन भेदः प्रायेण लक्ष्यते ।
एकं मुखं[3] यथाऽऽदर्शाद्यालम्बनविभेदतः ॥

भिन्नं भिन्नमिवाभाति तथैव स्युर्गुणादयः ।
भिन्ने हिमपयश्शङ्खाद्याश्रये परमार्थतः ॥

अभिन्न इव शुक्लादौ यद्वशादुपजायते ।
शुक्लः शुक्लोऽयमित्यादिरभिन्नप्रत्ययक्रमः ॥

तद्धि शुक्लत्वसामान्यं[4] तत्प्रवृत्तिनिमित्तकम् ।
यथा डित्थादिशब्देषु बालवृद्धशुकादिभिः ॥

उदीरितेषु प्रत्येकं भिद्यमानेषु तत्त्वतः ।
डित्थादित्वं तत्तदर्थे डित्थादावनुवर्तते ॥

अतश्च सर्वशब्दानां जातिरेकैव तत्त्वतः ।
स्वप्रवृत्तिनिमित्तं तन्न व्यक्तिरिति निश्चिता ॥

तद्वानपोहः शब्दार्थ इति कैश्चन कथ्यते ।
प्रकृतानुपयोगित्वादत्रास्माभिर्न कथ्यते ॥

अतः सर्वस्य शब्दस्य मुख्योऽर्थो जातिरेव सा ।
व्यापारस्तत्र शब्दस्य मुख्यो यः साऽभिधा भवेत्[5] ॥

1 A ध्याख्यो । B ध्याख्ये । 2 B ह्रुत्पादे । 3 A B भेदमुख्यं । 4 B न्यात् ।
5 B यस्माद्विधा नयेत् ।

शब्दस्य मुख्येऽर्थे वृत्तिस्तत्तद्व्यक्तिष्ववस्यति ।
लक्षणेत्यत्र शब्दस्य व्यापारान्तरमुच्यते ॥

मुख्यार्थबाधे तद्योगे रूढितोऽथ[1] प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥

कुशलः कर्मणीत्यत्र कुशलावाद्ययोगतः ।
रूढितो लक्षयत्येव शब्दः कर्मणि कौशलम् ॥

घोषाधिकरणत्वस्य गङ्गादीनामसम्भवात् ।
मुख्यार्थबाधे त[2]त्तीरे रूढितः सुप्रसिद्धितः ॥

यतो घोषस्य वसतिर्लक्ष्यते सापि लक्षणा ।
गङ्गातटे घोष इति शब्दो मुख्यार्थभागपि ॥

पावनत्वं लक्षयति धर्मस्या[ज्ञा]तिप्रयोजनात् ।
प्रयोजनादमुख्योऽर्थो मुख्येनार्थेन लक्ष्यते ॥

यस्मिन्नारोपितः शब्दव्यापारः सान्तरार्थभाक् ।
शुद्धेयं लक्षणा सैव भवेदर्थवशाद्विधा ॥

उपादानाभिधा काचिदन्या लक्षणलक्षणा ।
आरोपिता क्रिया यत्र सोपादानार्थलक्षणा ॥

कुन्तः प्रविशतीत्युक्ते स्वसंयोगिनमेव सः ।
स्वस्य प्रवेशसिद्ध्यर्थं यदाक्षिपति पूरुषम् ॥

कुन्तप्रवेशो मुख्यार्थः कुन्तस्य तदसम्भवात् ।
स्वक्रियाऽऽरोपिताऽन्यस्मिन्युक्ते सारोपिता क्रिया ॥

सान्तरार्थोऽत्र शब्दस्य व्यापारोऽर्थान्तराश्रयः ।
गौरनूबन्ध्य इत्यत्र स्वानुबन्धनसिद्धये ॥

---

1 B यः । 2 C धात्त ।

व्यक्तिराक्षिप्यते जात्या न शब्देनाभिधीयते ।
' विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ॥'

इतिन्यायादुपादानलक्षणा नात्र शङ्क्यताम् ।
रूढि[1]प्रयोजनाभावाज्ज्ञातिव्यक्त्योरभेदतः ॥

क्रियादीनामभावाच्च नैवोपादानलक्षणा ।
अकारि कारय कुरु क्रियतामिति यद्वचः ॥

भावः कारयिता कर्म कर्ता चाक्षिप्यते यतः ।
इत्यादावप्युपादानलक्षणा नैव शङ्क्यताम् ॥

तत्तदर्थस्वरूपाप्तेरन्यथानुपपत्तितः ।
अर्थापत्तिप्रमाधीना[2] क्रियाकर्त्रादिकल्पना ॥

यत्र स्यादर्थसामर्थ्यं तत्रार्थापत्तिरुच्यते ।
श्रुत[3]सामर्थ्ययोगेन श्रुतार्थापत्तिरुच्यते ॥

देवदत्तादिपुरुषपीनत्वानुपपत्तितः ।
भोजनस्य निषिद्धस्य दिवा रात्रौ प्रकल्प्यते ॥

अर्थापत्तिर्भवेद्यद्वा श्रुतार्थापत्तिरेव वा[4] ।
गौरनूबन्ध्य इत्यत्र श्रुतार्थापत्तिरेव सा ॥

घोषाधिकरणत्वस्य सिद्ध्ये स्वतटोपरि ।
स्वार्थं समर्पयत्येव गङ्गाशब्दो यतस्ततः ॥

इत्यादिलक्षणेनैव शुद्धेयमुभयात्मिका ।
आरोप्यारोपविषयौ सिद्धभेदौ परस्परम् ॥

सामानाधिकरण्येन निर्दि[5]श्येते यदि क्वचित् ।
सारोपाऽन्या विषयिणाऽऽरोप्यमाणेन कुत्रचित् ॥

1 A शुद्धि । 2 A दीनां । 3 B ति । 4 A B रन्यगा । 5 A विं ।

अन्तःकृते निगीर्णेऽस्मिन्नारोपविषये सति ।
एषा साध्यवसानात्मा लक्षणेति विभाव्यते ॥

इमौ भेदौ च सादृश्यात्सम्बन्धान्तरतोऽपि च ।
गौणौ शुद्धौ च विज्ञेयौ लक्षणाभेदवेदिभिः ॥

सादृश्यहेतू भेदौ स्तः सारोपाध्यवसानिकौ ।
गौर्वाहिको गौरयं चेत्युक्तोदाहृतिरेतयोः ॥

लक्ष्यमाणा अपि स्वार्थ[1]सहचारिगुणा यतः[2] ।
गोशब्दस्य परार्थाभिधाने यान्ति निमित्तताम् ॥

गवि स्वार्थे सहचरा गुणा जाड्या[3]दयश्च ये ।
गुणास्तेषामभेदेन लक्ष्यन्तेऽत्र परार्थगाः ॥

न परार्थोऽभिधीयेतेत्येवं केच[4]न जानते ।
लक्ष्यमाणा अपि स्वार्थे जाड्यमान्द्यादयो गवि ॥

वाहिकाख्यापरार्थाभिधाने वृत्तिनिमित्तताम् ।
गोशब्दस्य प्रयान्तीति केचिदूचुर्विचक्षणाः[5] ॥

द्वयोः साधारणीभूतगुणादेराश्रयत्वतः ।
परार्थो वाहिको लक्ष्यः स्वार्थेनेत्यपरे विदुः ॥

अपि चेदविनाभावे सति क्रोशतिमञ्चयोः ।
आक्षेपेणैव मत्या[6]दिसिद्धेर्नैवात्र[7] लक्षणा ॥

यदा[8]युर्घृतमित्यादौ सादृश्यादन्यदेव हि ।
कार्यकारणभावादि सम्बन्धान्तरमुच्यते ॥

भेदे सत्यपि ताद्रूप्यप्रतीतिर्गौणभेदयोः ।
तद्भे[अभे]दावगतिः क्वापि प्रयोजनवती भवेत् ॥

---

1 A र्थे । 2 B स्वतः । 3 A B त्या । 4 B चा न । 5 All Mss read these three lines. 6 C सत्या । 7 C स्ति । 8 C था ।

शुद्धयोर्भेदयोरन्यवैलक्षण्येन यद्भवेत् ।
अर्थक्रियाकारितादि तत्प्रयोजनवद्भवेत् ॥

तादर्थ्यादुपचाराख्या लक्षणा क्वापि दृश्यते ।
[1]इन्द्रार्थे स्थूण इन्द्रोऽयमित्यादौ सा विलोक्यते ॥

[2]क्वचित्स्वस्वामिभावेन लक्षणाऽपि भवेद्यथा ।
राजकीयः स पुरुषः इत्यादौ दृश्यते स्फुटम् ॥

हस्त इत्यपि यथैव कराग्रं लक्षयत्यथ न वक्ति करं तम् ।
अवयवावयविभावनिबन्धा लक्षणाऽपि च तथैव सुधीभिः ॥

स[अ]तक्षाऽतक्षदित्यत्र तात्कर्म्यात्क्वापि लक्षणा ।
एवं षोढा समुद्दिष्टा लक्षणा लक्ष्यवेदिभिः ॥

लक्षणायां गौणवृत्तिर्नान्तर्भवति कर्हिचित् ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

अग्निर्माणवकेत्यादौ गुणवृत्तिं प्रचक्षते ।
अग्निशब्दः स्वमुख्यार्थबाधान्माणवके स्वतः ॥

तद्गुणे पिङ्गलत्वादौ यां वृत्तिं प्रतिपद्यते ।
तां गौणीवृत्तिरित्याहुः शब्दवृत्तिविचक्षणाः ॥

भेदः साध्यवसानात्मा सारोपात्मा च यो[3]भवेत् ।
तयोरन्यतरैवेयं वृत्तिर्गौणीति केचन ॥

तत्तादृग्लक्षणोपेतलक्षणाविषये क्वचित् ।
प्रयोजने सति व्यङ्ग्यं भवेद्रूढौ न संभवेत् ॥

यत्र रूढिः प्रसिद्धा स्यात्तत्र व्यङ्ग्यं न सेत्स्यति ।
यत्र प्रयोजनं नास्ति तत्र व्यङ्ग्यं न दृश्यते ॥

---

1 A B omit this line । 2 A omits two lines. 3 B यद्भ ।

ध्वनिव्यापारहेतुर्यस्तद्व्यङ्ग्यश्च प्रयोजनम्।
प्रयोजनं विना क्वापि न व्यङ्ग्यं व्यज्यते स्फुटम्॥

अभिधालक्षणामूलं व्यङ्ग्यं सिध्येत्प्रयोजनात्।
अगूढं गूढमित्येतद्व्यङ्ग्यं द्वेधा विभिद्यते॥

अगूढं तत्स्फुटं यस्य प्रतीतिरभिधेयवत्।
अनुस्यूता यदव्यक्ता प्रतीतिर्गूढमुच्यते॥

गूढागूढात्मकं व्यङ्ग्यमेकमस्तीति केचन।
व्यक्ताव्यक्तप्रतीतिर्यत्तद्गूढागूढमुच्यते॥

भाविकात्मनि (?) पद्ये तु[1] तत्तद्व्यङ्ग्यं विलोक्यते।
व्यङ्ग्ये लाक्षणिकस्यात्र व्यापारो व्यञ्जनात्मकः॥

लक्षणा तादृशी गूढव्यङ्ग्याव्यङ्ग्यार्थयोगतः।
पश्चादगूढव्यङ्ग्येति त्रेधा व्यङ्ग्यप्रतीतितः॥

तद्भू[2]र्लाक्षणिकः शब्दस्तद्व्यापारोऽ[3]ञ्जनात्मकः।
यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते॥

फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया॥
यत्र प्रत्याययितुं प्रयोजनं लक्षणाशब्दः।
वाक्ये प्रयुज्यतेऽ[4]स्मान्नान्यो हेतुः प्रयोजनावाप्तेः॥

तस्मादेव च शब्दात्तद्व्यापारस्तथाञ्जनात्मैव[5]।
तेन व्यापारेण व्यङ्ग्यं तत्र प्रयोजनं भवति॥

गङ्गायां घोष इत्यादिवाक्ये तत्तीरसङ्ग[6]तः।
पावनत्वादिधर्मो यः प्रतीतो व्यङ्ग्यमेव तत॥

पावनत्वादिधर्मस्य गङ्गाशब्दस्य च क्वचित्।
गृह्यते नच सङ्केतस्तस्मान्नात्राभिधा भवेत्॥

1 AB चेद्रूल। 2 A दा। B द्भूत्। 3 A ञ्द्व्यापारोव्य। 4 A त।
5 C स्तयोर्व्यंञ्जनावर्त्मा। 6 A म्भु।

मुख्यार्थबाधादिहेतोरभावान्नैव लक्षणा ।
अतस्तल्लक्षणाशब्दव्यापाराद्व्यञ्जनात्मकात् ॥

ऋते[1] न पावनत्वादिधर्मः क्वापि प्रतीयते ॥
उक्तश्च[2]----

" नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।
लक्ष्यं न मुख्यं नाप्यत्र बाधा[3]योगः फलेन नो ॥

न प्रयोजनमेतस्मिन्न च शब्दः स्ख[4]लद्गतिः । "
गङ्गाशब्दो यथा स्रोतोबाधात्तत्तीरलक्षकः ॥

तद्वत्तटे सबाधश्चेल्लक्षयेत्तत्प्रयोजनम् ।
मुख्योऽर्थो न तटं तत्र स्वार्थबाधो न दृश्यते ॥

गङ्गाशब्दार्थतीरस्य पावनत्वादिभिः क्वचित् ।
लक्षणीयैर्न[5]संबन्धो[6] नापि लक्ष्यं[7]प्रयोजनम् ॥

तस्मिन्प्रयोजने लक्ष्ये तेन लक्ष्यं प्रयोजनम् ।
इत्येवमनवस्था स्यात्सा मूलक्षतिकारिणी ॥

पावनत्वादिभिस्तीरं युक्तमेव हि लक्ष्यते ।
गङ्गाशब्देनाधिकार्थप्रतिपत्तिः प्रयोजनम् ॥

विशिष्टलक्षणैषा स्याद्व्यज्यते नात्र किञ्चन ।
इति वादिनमुद्दिश्य प्रत्युत्तरमुदीर्यते ॥

"प्रयोजनेन सहितं लक्षणीयं न युज्य[8]ते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ॥"

प्रत्यक्षादेर्हि नीलादिर्विषयो हि स्वभावतः ।
प्राकट्यं वाऽथ संवि[9]त्तिः फलत्वे[10]नोपयुज्यते ॥

अतो विशिष्टे कस्मिंश्चिल्लक्षणा नोपयुज्यते ।
अतो गङ्गादिशब्देन तत्तटे लक्षिते पुनः ॥

1 A C जले । 2 C omits this line । 3 A B घा । 4 A शास्नास्ख । 5 C येन । 6 B न्धात् । 7 A क्ष्य । 8 A विय । 9 B प । 10 लं ते ।

पावनत्वादयो धर्मविशेषास्तत्र संभवाः ।
प्रतीयन्तेऽभिधाद्यन्य[1]व्यापाराद्व्यञ्जनात्मकात् ॥

अभिधालक्षणारूपात्तथा तात्पर्यरूपतः ।
एभ्यो भिन्नो भवेदत्र व्यापारो व्यञ्जनात्मकः ॥

ध्वननव्यञ्जनेत्यादिशब्दवाच्यो भवत्यसौ[2] ।
एवं हि लक्षणामूलं व्यञ्जकत्वमुदाहृतम् ॥

अभिधामूलमप्यत्र व्यञ्जकत्वं प्रचक्षते[3] ।
बहुधा चाभिधामूलं व्यञ्जकं कथ्यते बुधैः ॥

"अनेका[4]र्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्[5] ॥"

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

हरिशब्दोऽपि सिंहादेरनेकार्थस्य वाचकः ।
शङ्खचक्रादिसंयोगाद्विष्णुमेव व्यनक्ति च ॥

रामं विहायार्जुनं च रामार्जुनपदं यथा ।
विरोधं कार्तवीर्यस्य भार्गवस्य व्यनक्ति च[6] ॥

शङ्खाद्ययोगः शक्रादौ हरिशब्देन गम्यते ।
रामलक्ष्मणशब्देन साहचर्याभिधायिना ॥

पुमन्तरे गौरवादि विनयादि व्यनक्ति च ।
भवच्छिदं भज[7] स्थाणुमित्यर्थाद्व्यज्यते शिवः ॥

---

1 B C दि भ्यो । 2 AB न्ति ते । 3 A क्ष्महे । 4 A ना । 5 A B ना । 6 A तम् ।
7 A व ।

सर्वं जानाति देवोऽयं युष्मदर्थ इतीरिते[1] ।
भृत्येष्टकारिता भर्तुर्व्यङ्ग्या प्रकरणादिह[2] ॥

मकरध्वज इत्युक्ते तल्लिङ्गाद्व्यज्यते स्मरः ।
देवः पुरजिदित्युक्ते देवशब्दस्य सन्निधेः ॥

पुरजित्त्वं शिवस्येति व्यज्यते शिव एव हि ।
मधुमत्तः पिक इति वसन्तो व्यज्यते स्फुटम् ॥

भात्यत्र देव इत्युक्ते राजधानी प्रतीयते ।
मित्रं भातीति सुहृदि मित्रो भातीति भास्करे ॥

स्वाहेन्द्रशत्रुरित्यत्र स्वरेणार्थान्तरध्वनिः ।
एवमादिप्रयोगेषु तत्तदर्थो विलोक्यताम् ॥

संयोगादिभिरेतैस्तु वाचकत्वे निवा[3]रिते
अनेकार्थस्य शब्दस्य यद[4]र्थान्तरदर्शनम् ॥

अभिधा नात्र वर्तेत तस्याः[5] स्वार्थे नियामनात् ।
मुख्यार्थबाधा[6]द्यभावाल्लक्षणा नात्र वर्तते ॥

अतोऽत्र शब्दव्यापारः पारिशेष्यात्तदञ्जनम्[7] ।
तद्व्यञ्जनयुतः शब्दो यः सोऽर्थान्तरयुक्तथा ॥

अर्थोऽपि व्यञ्जकस्तद्वत्सहकारितया मतः ।
वाच्यलक्ष्यव्यङ्ग्यभूता येऽर्थाः पूर्वमुदाहृताः ॥

तेषां तद्वाचकादीनामर्थव्यञ्जकतोच्यते ।
वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥

प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥

1 A र्थते । 2 A ना । 3 A B C विचा । 4 B था । 5 A B त्र । 6 A भावा ।
7 A B दात्मनाम् ।

बोद्धव्यः प्रतिपाद्यः स्यात्काकुः स्याद्विकृतिर्ध्वनेः ।
प्रस्तावः स्यात्प्रकरणमर्था वाच्यादयस्तथा[1] ॥

इङ्गिताकारचेष्टादि[2]रादिशब्देन चोदितः ।
क्रमाद्वाच्यस्य लक्ष्यस्य व्यङ्ग्यस्योदाहृतिः कृता ॥

[3]अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम् ।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥

अत्र चौर्यरतस्यैव गोपनं गम्यते स्फुटम् ।
खेदो मयि न योग्यः स्यात्कर्तुं योग्यः कुरुष्विति ॥

तथाभूतादिवाक्यादा स्वरकाकुः प्रकाश्यते ।
वाच्यसिद्ध्यङ्गमत्रोक्तः स्वरः काकुर्भवेदिति ॥

नैवं शङ्क्यं गुणीभूतव्यङ्ग्यत्वं काकुवेदिभिः ।
प्रश्नमात्रेणापि काकोर्विश्रान्तेरत्र दर्शनात् ॥

[4]तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥

अत्र प्रच्छन्नकामित्वं कान्तया व्यज्यते प्रिये ।
मलयानिलसम्फुल्लकुसुमामोदमेदुरम् ॥

आरामं पश्य सुमुखि मनोभवनिकेतनम् ।
कामिनि प्रविशात्रेति व्यज्यते सुरतार्थिता ॥

[5]णोल्लेइ अणद्दमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संज्झाए होइ ण व होइ वीसामो ॥

सङ्केतकालः सन्ध्येति व्यज्यतेऽत्र कयाचन ।
[6]सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥

1 A स्तय: । 2 B भि । 3 अतिपृथुलं जलकुंभं गृहीत्वा समागताऽस्मि सखि त्वरितम् । श्रमस्वेदसलिलनिश्श्वासनिस्सहा विश्राम्यामि क्षणम् ॥ 4 तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र । इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥ 5 नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले । क्षणमात्रं यदि संध्यायां भवति नवा भवति विश्रामः ॥ 6 श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण । एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥

कस्याश्चिच्छृङ्गारसम्भोगे निषेधोऽत्र प्रतीयते ॥

निमील्य लोचने काचित्प्रिये गुरुजनावृता ।
पश्यति स्वस्तिकाकारकरेणालिङ्गति स्तनौ ॥

निमीलनादीङ्गितेन[1] यामिनीति प्रतीयते ।
चेष्टया स्वस्तिकाकृत्या गाढाश्लेषः प्रतीयते ॥

द्वित्रादिभेदे वक्रादिमिथोयोगे सति क्वचित् ।
क्रमाद्व्यङ्ग्यस्य लक्ष्यस्य व्यञ्जकत्वं निदर्श्यताम् ॥

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥

शब्दैनैव निवेद्योऽयं न प्रमाणान्तरेण च ।
एवंप्रकारैर्बहुभिः कृते शब्दार्थनिर्णये ॥

स्वरूपं दोषगुणयो रसालङ्कारयोरपि ।
अवश्यमभिधातव्यमपि तत्रापि धर्मिणि ॥

प्रदर्शिते तद्धर्माणां हेयोपादेयतास्थितिः ।
ज्ञायते यत्ततः काव्यभेदान्प्रागभिदध्महे ॥

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥

प्रधाने लक्षणामूलगूढव्यङ्ग्ये सति क्वचित् ।
यत्राविवक्षितं वाच्यं तत्र ध्वनिरिति ध्वनौ[2] ॥

तदेवानुपयुक्त्या[3]देर्वाच्यमर्थान्तरे यदि ।
नमितं तद्भवेदर्थान्तरसङ्क्रमिताख्यया ॥

यथा त्वां वच्मि विदुषां समुदायोऽत्र तिष्ठति ।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ॥

---

1 C. ख्येङ्गितया । 2 A निः । 3 A D पत्या ।

उपदेशादिरूपेण गम्यते वचनादि यत् ।
तदेवानुपपत्त्यादेः क्वाप्य[1]त्यन्ततिरस्कृतम् ॥

मयि चोपकृतं सुभ्रु सौजन्यं प्रथितं त्वया ।
कुर्वीदृशं परमपि सुखमास्स्व शरच्छतम् ॥

अत्रापकारिणीं चेटीं विपरीतलक्षणया कथयति ॥

विवक्षितं व्यङ्ग्यनिष्ठं वाच्यं यत्र[2] प्रकाशते ।
तत्रालक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥

रसस्तु न विभावादिस्तैरेवासाविति क्रमः ।
स चेन्न लक्ष्यः सोऽलक्ष्यक्रमव्यङ्ग्य उदाहृतः ॥

रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥

आभास[3]भावशान्त्यादेः क्रमो नैवात्र लक्ष्यते ।
तेषां व्यङ्ग्यक्रमे[4] लक्ष्ये लक्ष्यव्यङ्ग्यक्रमो भवेत् ॥

भावोदयादिः प्राधान्यादलङ्कार्यतया स्थितः ।
रसादिर्यत्र तत्रैष व्यङ्ग्य एव भविष्यति ॥

प्राधान्याद्यत्र वाक्यार्थस्याङ्गभूतो रसादिकः ।
काव्यभेदो गुणीभूतव्यङ्ग्य इत्यभिधीयते ॥

भावशान्त्यादयोऽङ्गित्वं रसे मुख्ये प्रयान्ति च ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥

इति द्वयं गुणीभूतव्यङ्ग्येऽङ्गाङ्गित्वमेष्यतः ।
यत्रातिशायी व्यङ्ग्यो[6]ऽर्थो वाच्यात्काव्यं ध्वनिर्भवेत् ॥

---

1 A B काव्य । 2 A B मत्र । 3 B अभाव । 4 B मो । 5 B दियोगित्वं । 6 C यिनि व्यङ्ग्ये ।

प्रधानभूतस्फोटाख्यव्यङ्ग्यस्य व्यञ्जकस्तु यः ।
शब्दस्तत्र ध्वनिरिति व्यवहारः कृतो बुधैः ॥

यन्यग्भा[1]वितवाच्यस्य व्यङ्ग्यस्य व्यञ्जनक्षमम् ।
शब्दार्थयुगलं तच्च ध्वनिरित्यभिधीयते ॥

ध्वनिः स्यादुत्तमं काव्यं स प्रबन्धः सुदुर्लभः[2] ।
वाच्यादनतिशायी च व्यङ्ग्योऽर्थो यत्र दृश्यते ।

तत्काव्यं तु गुणीभूतव्यङ्ग्यं तन्मध्यमं भवेत् ।
यत्र शब्दस्य वैचित्र्यं यत्रार्थस्य विचित्रता ॥

यत्र व्यङ्ग्यं न[3] प्रतीतं तत्काव्यमधमं[4] स्मृतम् ।
अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥

शब्दार्थोभयशक्त्युत्थ[5]स्त्रिधा स कथितो बुधैः ।
यः शब्दशक्तिमूलानुरणनात्मा स च ध्वनिः ॥

तथा[6]ऽर्थशक्तिमूलानुरणनात्मापि च ध्वनिः ।
शब्दार्थशक्तिमूलानुरणनात्मापि च ध्वनिः[7] ॥

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ।
परस्परस्य प्राधान्यात्प्रधानेतरकल्पना ॥

व्यङ्ग्ये रसालङ्कारादौ ध्वनिकाव्यं तदुत्तमम् ।
स चेल्लक्ष्यो भवेन्मध्यस्तस्मिन्वाच्यै तथाऽधमः ॥

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काकाक्षिसमसुन्दरम् ॥

व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।
उदाहरणमेतेषां काव्यबन्धेषु दृश्यते ॥

---

1 ABC स्माङ्का । 2 A समुद्भवः । 3 B तत् । 4 A वरं । 5 A B कस्यर्थः ।
6 तदा । 7 B C omit this line,

एवं ध्वनिकृदाचार्यैर्व्यङ्ग्यभेदाः समीरिताः ।
स्वरूपमुक्तं वाच्यादेस्तत्तद्भेदाश्च दर्शिताः ॥

एतेभ्योऽन्यत्तु तापर्यं वाक्यार्थोऽस्तीति जानते[1] ।
एतेभ्योऽन्यस्तु कथितस्तात्पर्यार्थोऽपि केषुचित् ॥

समन्वये पदार्थानां पदार्थोऽपि च तत्त्वतः ।
विशेषरूपो वाक्यार्थस्तात्पर्यमिति मन्वते ॥

पदार्था ये पदानां स्युरन्वितानां परस्परम् ।
त एव वाक्यार्थात्मानो नान्योऽर्थोऽस्तीति केचन ॥

सर्वस्यैव च शब्दस्य स्वार्थवृत्तिविभागतः ।
तात्पर्यार्थो भवेच्छ्रोतुः विवेक्तुः प्रीतिकारकः ॥

श्रोतृत्वं तदिति प्राहुः शब्दतात्पर्यवेदिनः ।
शब्दशक्तिमहिम्ना यद्वयङ्ग्याद्यर्थविवेचनम् ॥

तदेव च[2]विवेक्तृत्वमाहुरर्थविवेचकाः ।
व्यङ्ग्यतात्पर्यतद्भेद[3]शब्दशक्तिनिरूपणम् ॥

कवेर्विवक्षितार्थो यः तत्तात्पर्यमुदाहृतम् ।
तात्पर्यस्य स्वरूपं यत्तद्विशेषश्च तद्विदा ॥

यथाऽवगतमस्माभिः परस्तात्कथयिष्यते ।
इत्थं कल्पलतायां[4] तु वाच्याद्यर्थचतुष्टयम् ॥

निर्णीतं वाचकादेश्च शब्दस्यापि चतुष्टयम् ।
तच्च काव्यप्रकाशेन मयाऽप्यत्र प्रदर्शितम् ॥

दोषा गुणाश्चालङ्काराः शब्दार्थोभयरूपतः ।
कचिद्रसाश्च तद्योग्या[5] योग्यताऽत्र विचार्यते ॥

---

1 All mss read these two lines । 2 A हि । 3 A दे । 4 A BC प्रकल्पनायां ।
5 C गा ।

आक्षेपतः समाधानादर्थेष्वतिशयो भवेत् ।
आक्षेपश्च च समाधानमतोऽर्थस्याभिधीयते ॥

स्वतः शुद्धस्य वर्णस्य को दोषः को गुणो भवेत् ।
रसादेराश्रयत्वं तदमूर्तस्य कथं भवेत् ॥

विभुत्वात्तस्य वर्णस्य क्वाचित्कत्वं कथं भवेत् ।
अलङ्कारोऽपि नैव स्यादलङ्कार्या[1]विनिश्चयात् ॥

दोषादेराश्रयो वर्णः पदं वाऽथ[2] किमुच्यते ।
वाक्यं वा किमलङ्कारो नैव वर्णस्य युज्यते ॥

पदे चेत्तत्पदं कीदृक्तत्स्व[3]रूपं निरूप्यताम् ।
वर्णः पदं किं वर्णौ वा वर्णा वा पदमुच्यते ॥

अव्याप्तेरप्यतिव्याप्तेः पदं दुष्यति लक्षणे ।
सुप्तिङन्तं पदमिति यदि स्यात्पदलक्षणम् ॥

सुबन्तं पदमस्तीस्ति तिङन्तमपि चापरम् ।
समुच्चयेन न[4] पदं सुप्तिङन्तात्मकं भवेत् ॥

लक्षणं व्यभिचारि स्यादतिव्याप्त्यादिदोषतः ।
पदे वाक्ये च वाक्यार्थे दोषः कीदृक्स्वरूपवान् ॥

स्थाने[5] पदादौ स[6] गुणः कीदृगात्मा च वर्तते ।
वाक्यस्य लक्षणं कीदृक्तस्य दोषादयो यदि ॥

समूहो यः पदानान्तु तद्वाक्यमिति लक्षणम् ।
वाक्यं द्वाभ्यां त्रिचतुरैः पञ्च षट्सप्तभिश्च वा ॥

अष्टभिर्वा भवेत्तस्माल्लक्षणं व्यभिचारि तत् ।
एक[7]प्रयोजनाभावादन्यथा वाक्यलक्षणम् ॥

---

1 B रा। 2 AB धि। 3 AB किंचित्तस्व। 4 D हि। 5 A स्थिते। 6 A स्व।
7 B तत्।

दोषो गुणो वाऽलङ्कारो रसो वाऽथ कदाचन ।
पदे वाक्ये च वाक्यार्थे नहि शब्दात्मको भवेत् ॥

आश्रयाश्रयिसम्बन्धो न भवेच्छब्दयोः क्वचित् ।
अथ तद्व्यतिरेकश्चेद्दोषादिरिह कथ्यते ॥

भिन्नाधिकरणत्वेन सम्बन्धो[1]न घटिष्यते ।
अतो दोषादयः शब्दे व्यर्थाः स्युः कल्पिता अपि ॥

इति ब्रुवन्तमुद्दिश्य तत्सम्बन्धोऽभिधीयते ।
वक्तृसम्बन्ध[2]वशतः शब्दे दोषादिकल्पना ॥

दोषादिर्वक्तृधर्मः स्याद्वक्रधीनत[3]थाऽस्य हि ।
स्वार्थे स्ववृत्त्ययोग्य[4]त्वं येन शब्दस्य दृश्यते ॥

स दोषः कथ्यते वक्तृप्रयोगाधीन एव सः ।
स्वार्थे स्ववृत्तियोग्यत्वद्वा[5]रा शब्दस्य यद्भवेत् ॥

प्रत्यायकत्वसामर्थ्यसौलभ्यं[6]स गुणो भवेत् ।
वाच्याद्यतिशयो येन दृश्यते शब्दहेतुकः ॥

स एवार्थगुणो ज्ञेयः तत्तदर्थेषु दृश्यते ।
येऽर्था इ[7]वादिशब्दानान्तेऽलङ्कारा इति स्मृताः ॥

प्रयुञ्जते तान्कवयः शब्दार्थोभयरूपतः ।
कविप्रयोगचातुर्यात्स नीरक्षीरवद्रसः ॥

शब्दार्थेषूपयुज्येत प्रायो व्यङ्ग्यः स सर्वदा ।
वर्णे गुणो न दोषो वा तौ स्यातां पदवाक्ययोः ॥

रसादयोऽपि वाक्यादिप्रबन्धेषूपयोगिनः ।
कविसन्दर्भवशतो दृश्यन्ते यत्ततस्ततः ॥

---

1 A न्धे । 2 B न्दर्भ । 3 A B क्तृहीनस्त । 4 B स्य वृत्तियोग । 5 B त्वयोगात्तद ।
6 A भ्या । 7 C दि ।

तस्मादमी वक्तृधर्मा नैते स्युः शब्दगोचराः ।
वक्तुर्विवक्षाधीनं यच्छब्दे दोषाधिरोपणम् ॥

तस्माद्दोषादयो वक्तृपराधीना न शब्दगाः ।
तस्मादलङ्कृतिगुणरसवत्काव्यनिर्मितिः ॥

ध्वनिरूपैव कर्तव्या निर्दोषा कीर्तिसम्पदे ।
ध्वनिर्निरूप्यतेऽत्रै[1]व व्यञ्जकत्वेन चोदितः ॥

क्रमेणोच्चार्यमाणेषु वर्णेष्वर्थस्य[2] वाचकः ।
आदिमः किं द्वितीयः किं तृतीयः किं तथाऽन्तिमः ॥

प्रत्यायकत्वशक्तिस्तु कस्मिन्नेतेषु दृश्यते ।
क्रमेण श्रूयमाणत्वाद्वर्णानां नश्वरत्वतः ॥

समुच्चयेन वर्णानां वाचकत्वं न युज्यते ।
सापेक्ष[3]त्वादादिमस्य स्वार्थे वृत्तिर्न जायते ॥

मध्यमानामपि स्वार्थप्रतीतौ स्यादनिश्चयः ।
अन्तिमश्चेदथैकस्य सम्बन्धोऽनर्थको भवेत् ॥

अर्थासंस्पर्शितैवास्माद्धेतोः[4] शब्दस्य निश्चिता ।
मैवं मन्यस्व शब्दस्य स्वार्थस्पर्शित्वमुच्यते ॥

अर्थप्रतीतिः श्रोतॄणां शब्दोच्चारादनन्तरम् ।
जायते तस्य हेतुर्यः सोऽर्थापत्तिप्रमाणकः ॥

स वर्णव्यतिरेकात्मा कोऽपि स्यात्सोऽपि च ध्वनिः ।
ध्वनिः[5] सामान्यरूपस्या[6]द्वर्णास्तद्व्यक्तयः स्मृताः ॥

स वर्णव्यञ्जनद्वारा तमर्थं व्यञ्जयेत्स्फुटम् ।
स ध्वनिः स्फोट इत्यत्र शाब्दिकैः परिभाष्यते ॥

---

1 A नै । 2 A र्थेषु । 3 B सङ्क्षेप । 4 B द्धातोः । 5 A नेः । 6 A स्या ।

इत्थं शब्दार्थसम्बन्धो ध्वनिकृद्भिर्निरूपितः ।
तदुक्तेन प्रकारेण संक्षेपादत्र दर्शितः ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
शब्दार्थसम्बन्धतद्भेदप्रकारनिर्णयो
नाम षष्ठोऽधिकारः समाप्तः ।

---

॥ श्रीः ॥

# अथ सप्तमोऽधिकारः ।

उक्ता रसा रसव्यक्तिर्नाट्येनैवेत्युदीरिता ।
अवस्थानुकृतिर्नाट्यमिति सामान्यलक्षणम् ॥

रामादितादात्म्यापत्तिर्नटे या नाट्यमुच्यते ।
रूपकं तद्भवेद्रूपं दृश्यत्वात्प्रेक्षकैरिदम् ॥

रूपकत्वं तदारोपात्कमलारोपवन्मुखे ।
दशधैवेति मुनिना तद्भेदनियमः कृतः ॥

रसाश्रयत्वमप्युक्तं रसादेराश्रयत्वतः ।
तदेवं दशधा भिन्नं वाक्यार्थाभिनयात्मकम् ॥

रसाश्रया यद्यपि स्युर्नाटिकातोटकादयः ।
नाटकादिष्वथैतेषामन्तर्भावान्न ते पृथक् ॥

नाटके च[1] प्रकरणे नाटिकायाः[2] पुरातनैः ।
अन्तर्भावः कृतस्तस्यां तोट[3]कस्यापि दर्शितः ॥

नाटिकाया नाटकस्या[4]भेदः प्रकरणस्य वा ।
सट्ट[5]कस्तोटकस्यैव भेद इत्यभिधीयते ॥

तोटकस्योच्यते सद्भिरन्तर्भावोऽपि नाटके ।
नाटकादेरयं भेदो नाटिका रूपकं भवेत् ॥

---

1 B थ । 2 B केयं । 3 B स्याः सट्ट । 4 A B स्य । 5 A नाड ।

नाटिकाप्रतिमत्वाच्च सट्टको[1]पि तथाविधः ।
नाटके तोटकस्यान्तर्भावाद्रूपकमेव सः ॥

दिव्यमानुषसंयोगस्तोटकं नाटकानुगम् ।
नवाष्टसप्तपञ्चाङ्कं[2] दिव्यमानुषसङ्गमम् ॥

तोटकं नाम तत्प्राहुर्भेदो नाटकसम्भवः ।
नृत्यभेदा भवेयुस्ते डोम्बीश्रीगदितादयः[3] ॥

यद्यद्रसात्मकं तत्तद्वाक्यार्थाभिनयात्मकम् ।
यद्यद्भावाश्रयं तत्तत्पदार्थाभिनयात्मकम् ॥

नृत्यं भावाश्रयं नृत्तं रसाश्रयमुदाहृतम् ।
नृत्यनृत्तविभागश्च बहुभिर्बहुधोदितः ॥

तद्द्वयं नाटकादीनां भूयसा ह्युपकारकम् ।
नृत्यनृत्तविभागस्तु परस्तात्कथयिष्यते ॥

पूर्वरङ्गे नाटकादावुपयोगोऽत्र दृश्यते ।
नाटकाद्यु[4]पयोगोऽत्र गा[5]यकानां प्रदर्श्यते[6] ॥

नृत्तं गीतञ्च वाद्यञ्च नाटकाद्युपकारकम् ।
गेयं प्राणाः प्रयोगस्य सर्वं वा गे[7]यमुच्यते ॥

गेयसाध्यं हि धर्मार्थकाममोक्षचतुष्टयम् ।
तस्माद्गेयसमुत्पत्तिः संक्षेपेणात्र कथ्यते ॥

इह[8] तत्त्वानि षट्त्रिंशच्छिवः शक्तिः सदाशिवः ।
ईश्वरः शुद्धविद्येति शुद्धान्येतानि पञ्च च ॥

माया कालोऽथ नियतिः कला विद्या ततः परम् ।
रागः पुरुष एतानि शुद्धाशुद्धानि सप्त वै ॥

---

1 B नाटके । 2 A B ङ्कं । 3 B श्च ये । 4 A गानस्याप्यु । 5 A B ना । 6 A येषतः ।
7 B गे । 8 A शिव ।

ततः प्रकृ[1]तिरेतस्याः प्रकृतेस्तु गुणत्रयम् ।
गुणत्रयेऽपि भिद्यन्ते[2] रूपनामक्रियाः सदा ॥

ईदृग्विलक्षणां शक्तिं यदा सङ्क्रमते पुमान् ।
प्राज्ञतैजसविश्वत्वभेदत्रय[3]मथान्वगात् ॥

प्रधानमनयोर्व्यासं प्राज्ञ ए[4]कोऽन्यवस्तुनि[5] ।
शिष्टस्त्व[6]स्मिंस्त्वसंपूर्ण इत्थमेषां प्रवर्तनम् ॥

तैजसः सप्तधा भिन्नो बुद्धिगर्वख[7]वायुभिः ।
वह्न्यम्भःक्षितिभिश्चैते कार्यकारणमूर्तयः ॥

एतेषां समवायात्तु विश्व आसीच्च तन्मयः ।
सोऽपि त्रैविध्यमन्विच्छन्विराट्पुरुष ईश्वरः ॥

बीजत्रयेण भिन्नः स्यात्सोमसूर्याग्निरूपिणा ।
स रुद्रोपेन्द्रपद्मोत्थगुणत्रयविभेदिना ॥

विश्वाख्ये पार्थिवे चाण्डे प्राणिनो भूतमूर्तयः ।
चतुष्प्रकारसम्भिन्ना नश्वरास्तु प्रजज्ञिरे ॥

जीवत्वमेषामपरं प्रतिभेदमियात्प्र[8]भुः ।
कालप्रेरितयोर्वायुर्दम्पत्योः सङ्गमान्मिथः ॥

पौरुषीं प्राकृतीं शक्तिं शुक्लशोणितरूपिणीम् ।
वायुद्वयेन सहितं गर्भाशयमुपा[9]नयेत् ॥

अनाद[10]यश्च क्षेत्रज्ञा बहवः कर्मभाविताः ।
सन्ति कालार्थिनः शेषाः कश्चित्कालेन चोदितः ॥

गर्भाशयं स्वयं पित्रोर्मला[11]भ्यां सह संविशेत् ।
तत्र नित्यो भवेद्वायुः प्राणापानात्मकः स्वयम् ॥

---

1 A B C आकृ । 2 A यद्भिमियेते । 3 A तोऽय । 4 B तथै । 5 B हि । 6 B स्त्व । 7 A गगन । 8 A शुर्वि । 9 C मथा । 10 B C नाद । 11 A बेला । B मैर्म ।

गुणभूतात्मके[1] बीजे कारणार्थसमन्विते ।
सर्वव्याप्ता पराशक्तिरस्मिन् क्षेत्रज्ञतामियात् ॥

द्वाभ्यां त्रयाणां व्यक्तिः स्यात्त्रिभ्यो भवति पञ्चकम् ।
पञ्चभ्यः पञ्चकानान्तु चतुष्कं प्रतिपद्यते ॥

शुक्लार्तवौ द्वयं तत्र[2] त्रितयन्तु गुणत्रयम् ।
भूतानि श्रवणादीनि शब्दवागादिपञ्चकम् ॥

भाषणादीनि वाक्यादिचतुष्टयमुदाहृतम् ।
तत्संशयप्रमातृत्वनिश्चयानुभवार्थ[3]कृत् ॥

ईदृग्विलक्षणो जन्तुः जरायुग्रस्तदेहवान् ।
कालपाकेन पूर्णाङ्गो जायतेऽयमना[4]ङ्मुखः ॥

षण्णवत्यङ्गुलायामं सर्वेषाञ्च शरीरिणाम् ।
शरीरं तस्य मध्यः स्यादाधारः कन्दसंज्ञितः ॥

वलयत्रितयाकारः सोमसूर्याग्निमण्डलैः ।
वह्नेः शिखा तस्य मध्ये नीपा[5]न्तःकेसराकृतिः ॥

परा प्रकृतिरेषा स्यादम्बिकेत्यपरे विदुः ।
बहिस्तिर्यक्चरन्वायुः[6] शरीरान्तः शिवाज्ञया ॥

प्राणादिभेदात्पञ्चात्मा शरीरं व्याप्य तिष्ठति ।
येन प्राणिति सर्वश्च स प्राणो मूर्धनि स्थितः ॥

उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ।
ष्ठीवनक्षवथूद्गारनिश्वासान्तः[7]प्रवेशकृत् ॥

उरः स्थानमुदानस्य नासानाभिगलां[8]श्चरेत् ।
वाक्प्रवृत्तिप्रयत्नो[9]र्जोबलवर्णस्मृतिप्रदः ॥

---

1 C कौं । 2 A B द्वि । 3 A दि । 4 A B यः परा । 5 D बिसा । 6 A न्त्यन्याः ।
7 A न्न । 8 A गुदां । 9 C जो । B त्थो ।

व्यानो[1] बहिः स्थितः[2] कृत्स्नदेहचारी महाजवः ।
गत्यवक्षेपणोत्क्षेपनिमेषोन्मेषणादिकृत् ॥

प्रायः सर्वाः क्रियास्तस्मिन्प्रतिबद्धाः शरीरिणाम् ।
समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वदा ॥

अन्नं गृह्णाति पचति विवेचयति मुञ्चति ।
अपानोऽपानगःश्रोणिबस्तिमेढ्रोरुगोचरः ॥

शुक्लार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः ।
दश जीवनधामानि शिरोरसनबन्धनम् ॥

कण्ठोष्ठ[3]हृदयं नाभिः बस्तिः शुक्लो गुदौजसी ।
दश स्थूल[4]शिरा हृत्स्थास्ताः सर्वाः सर्वतो वपुः ॥

रसात्मकं वहन्त्यो[5]जस्तन्निबद्धं हि चेष्टितम् ।
भिद्यन्ते तास्ततः सप्त शतान्यासां भवन्ति तु ॥

सिराजालधरा नाम तिस्रश्चाभ्यन्तराश्रयाः ।
इडा च पिङ्गला चेति सुषुम्ना चेति नामतः ॥

सुषुम्ना मध्यमा नाडी शिखां[6] वह्नेः समाश्रिता ।
शिखा प्राणेन संसृष्टा नादाख्यां लभते स्फुटम् ॥

सुषुम्नावर्त्मनैवोर्ध्वं याति व्योमाम्बुजावधि ।
योगिनां नाद[7]रूपेण स्वानुभूतिविधायिनी ॥

इतरेषां कलारूपान् वर्णान्विसृजति क्रमात् ।
नादः श्रु[8]तिसमुत्पत्तिः श्रुतिभ्यः स्वरसम्भवः ॥

नाडीभ्यः श्रुतिसम्भूतिर्नाडीनां स्थानमुच्यते ।
स्थानानि सर्ववर्णानां सप्त व्यक्तिकराणि तु ॥

---

1 B प्राणो। 2 A हृदिस्थः। 3 A ऽसं। 4 A मूल। 5 C भवत्यो। 6 B खा। 7 A म। 8 B दाच्छु।

कण्ठताल्वोष्ठमूर्धानो दन्ताश्चेति पृथक्पृथक् ।
एकं स्यात्कण्ठतालुभ्यां कण्ठोष्ठाभ्यामथापरम् ॥

दन्तोष्ठजिह्वास्थानानां सम्भवाः[1] स्युः पृथक्पृथक् ।
चतस्रो जत्रुबन्धि[2]न्यो नाड्यः कण्ठमुपाश्रिताः ॥

तालुमूलस्य बन्धिन्यस्तिस्रस्तत्रैव च स्थिताः ।
ओष्ठयोरुभयोर्नाड्यौ बन्धिन्यौ द्वे व्यवस्थिते ॥

चतस्रो मूर्धबन्धिन्यो नाड्यो ब्रह्मपदा[3]श्रयाः ।
नाड्यश्चतस्रस्तिष्ठन्ति दन्तानाबध्य सर्वतः ॥

कण्ठताल्वोरन्तरा स्युर्नाड्यस्तिस्रः सुसङ्गताः ।
कण्ठोष्ठयोर्द्वे बन्धिन्यौ नाड्यौ तत्रैव तिष्ठतः ॥

एवं द्वाविंशतिर्नाड्यो मध्यनाड्यां हृदि स्थिताः ।
युगपन्मरुदाहत्या नादस्तासु प्रवेक्ष्यति ॥

त्रुटि[4]कालमिताः स्युस्तु श्रुतयः श्रुतिगोचराः ।
यदूर्ध्वं हृदयग्रन्थेः कपालफलकादधः ॥

प्राणाश्चरन्ति तत्रैता व्यज्यन्ते श्रुतयः पृथक् ।
व्यक्तिस्थानेषु वर्णा[5]नां स्वरसंज्ञा भवन्ति ताः ॥

कण्ठे सज्जति यो नादः स षड्जः स्याच्चतुश्श्रुतिः ।
ऋषभस्त्रिश्रुतिस्तालुमूले तस्य त्रि[6]सम्भवात् ॥

शब्दो गौस्तां बिभ्रदोष्ठे गान्धारो द्विश्रुतिर्भवेत् ।
मूर्ध[7]मध्यस्थितो नादो मध्यमः स्याच्चतुश्श्रुतिः ॥

पञ्चभिर्जायते दन्ततालुकण्ठोष्ठमूर्धभिः ।
चतुश्श्रुतिः पञ्चमः स्याद्दन्तपङ्क्तिसमाश्रयः ॥

---

1 A B सहायाः । 2 C न्ध । 3 B बन्धपथा । 4 A तोट । 5 A धर्मा । 6 A ज्युर्थि ।
7 C ध्रिं ।

कण्ठतालुधृतो नादो धैवतस्त्रिश्रुतिर्भवेत् ।
नादो निषण्णः कण्ठोष्ठे निषादो द्विश्रुतिर्भवेत् ॥

स्वर्यमाणतया तत्तत्स्थानेषु मरुदाहतेः ।
स्वरसंज्ञां लभन्ते ते तत्तन्नामपुरस्कृताः ॥

अन्ये धातुभ्य उत्पन्नाः स्वरा इत्येव जानते ।
धातवः सप्त भूतानामन्तः सप्ताग्नयः स्थिताः ॥

केचिदग्नय इत्येवं केचिदूष्मेति मन्वते ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः ॥

धमन्यः स्युश्चतुर्विंशदर[1]वन्नाभिमाश्रिताः ।
शरीरमनुगृह्णन्ति ताः सर्वा ह्यत्र सर्वतः ॥

तासूर्ध्वमेका मूर्धानमेकाऽधःकोष्ठमाश्रिता ।
ओजांसि सप्तधातूनां वर्धयन्त्यन्तरा स्थिता ॥

उरस्यो[2]धातुरन्योऽपीत्येके प्राहुर्हृदाश्रयः ।
आयुर्वेदे तत्स्वरूपं त्रिप्रकारमुदाहृतम् ॥

चतस्रः शुक्लवर्धन्यस्तास्तु कन्दसमाश्रयाः ।
तिस्रो धमन्यो वर्धन्यो मज्जाया नाभिमाश्रिताः ॥

अस्थीनि वर्धयन्त्यौ द्वे धमन्यौ हृदयं श्रिते ।
कण्ठे चतस्रो वर्धन्यो धमन्यो मेदसं श्रिताः ॥

चतस्रो मांसवर्धन्यो धमन्यस्तालुमूलगाः ।
मूर्ध्नि तिस्रोऽसृग्वर्धन्यो धमन्योऽधोमुखाश्रिताः ॥

भ्रुवोर्मध्ये धमन्यौ द्वे त्वग्वर्धन्यौ व्यवस्थिते ।
दहराकाशमध्यस्थ[3]सहस्रदलशोभिते ॥

1 B द्दश । 2 A. अन्योजा । D अस्त्योजो । 3 A स्थे ।

विस्फुरत्केसराश्लिष्टकर्णिके पङ्कजोदरे ।
निवातदीपवत्स्थायी सोमसूर्याग्निमण्डले ॥

आत्मा निस्सङ्ग एवैकः साक्षी सर्वस्य कर्मणः ।
तस्य स्वामीति सङ्कल्पो[1]मन आख्यां लभेत सः ॥

विषयेभ्यः प्रयत्नेन मन आत्माऽधितिष्ठति ।
मनोऽधितिष्ठति प्राणपूर्वान्पञ्चसमीरणान् ॥

ते धातून्व्या[2]प्य धमनीमुखेभ्यस्तत्र सम्भवान् ।
अग्नीन्प्रज्वलयन्त्येव तेभ्यो नादः प्रवर्तते ॥

धमनीनामनेकत्वाद्ध्वनयः स्युरनेकधा ।
ध्वनयः श्रुतिसंज्ञन्तु लभन्ते तत्र तत्र च ॥

श्रुतिसङ्ख्याऽपि तत्रत्यधमनीसङ्ख्यया भवेत् ।
उदात्तश्चानुदात्तश्च स्वरितप्रचयाविति ॥

आख्यां लभन्ते श्रुतयस्तत्तत्स्थानाश्रयाः क्रमात् ।
शुक्लधात्वग्निजो नादः स्वरः षड्जश्चतुःश्रुतिः ॥

मज्जाधात्वग्निजो नादो ऋषभस्त्रिश्रुतिस्वरः ।
अस्थिधात्वग्निजो नादो गान्धारो द्विश्रुतिस्वरः ॥

मेदोधात्वग्निजो नादो मध्य[3]मः स्याच्चतुश्श्रुतिः ।
[4]मांसधात्वग्निजो नादः पञ्चमः स्याच्चतुश्श्रुतिः ॥

रक्तधात्वग्निजो नादः त्रिश्रुतिर्धैवतस्वरः ।
त्वग्धातुवह्निजो नादो निषादो[5] द्विश्रुतिस्वरः ॥

आधारगः शुक्लधातुर्मज्जाधातुस्तु नाभिगः ।
हृदाश्रयोऽस्थिधातुः स्यान्मेदोधातुस्तु कण्ठगः ॥

---

1 A ल्पे । 2 BC न्वेधाकृत्या । 3 A पञ्च । 4 A omits this line । 5 B ऋषभो ।

मांसधातुस्तालुमूले रक्तधातुस्तु मूर्धगः ।
भ्रूमध्यगः स्यात्त्वग्धातुः क्रमादेवं स्थिताः स्वराः ॥

शुक्लस्यावर[1]णं मज्जा तदावरणमस्थि च[2] ।
अस्थ्नामा[3]वरणं मेदो मांसं तस्यावृतिर्भवेत् ॥

मांसावरणमस्रं स्यात्त्वक्चास्रावरणं भवेत् ।
तस्मात्त्वग्जः स्वरस्तारो मन्दः स्याच्छुक्लजः स्वरः ॥

एवमुच्चैष्ट्वनीचैष्ट्वभावस्ते[4]षां विलोक्यताम् ।
श्रुतीनां च स्वराणां च स्थितिरेषां स्वभावतः ॥

स्व[5]र्यमाणतया तत्तत्स्थानेषु मरुदाहतेः ।
स्वरसंज्ञां लभन्ते ते तत्तत्षड्जादिनामभिः ॥

ध्वनेर्विवक्षावशतो ग्रा[6]मभेदप्रकल्पना ।
विवक्षयैव रागाणां मूर्च्छना तानकल्पना ॥

मध्यमस्वरतो नादो यो निर्वर्तितुमीहितः ।
स एव[7] मध्यमग्रामः षड्जग्रामो यथास्थितः ॥

त्रिचतुश्श्रुतिकौ मध्यग्रामे पञ्चमधैवतौ ।
अन्त्यादिक्रमयोगेन व्यत्ययात्सप्त मूर्च्छनाः ॥

ग्रामयोरुभयोस्तानत्रये ताः सप्त सप्त च ।
तानत्रये द्वादशभिः स्वरैर्द्वादश मूर्च्छनाः ॥

गतागतीर्वितन्वन्ति तेन तास्तिर्यगायताः ।
श्रुतयो गानकालेऽत्र संयोगैक्यं भजन्ति ताः ॥

स्मृतिव्यवसितारम्भस्पर्शभिन्नलयक्रमात् ।
षड्भिरङ्गैः सुसम्प[8]न्नाः श्रुतयः परिकीर्तिताः ॥

---

1 B क्षां च । 2 A तत् । 3 A अपध्मा । 4 A भवस्त्वे । 5 B स्म । 6 D क । 7 C एवश्च । 8 A सम्रुत्प ।

स्मृतिर्ध्वनेस्तारतम्य[1]विमर्शो इति कथ्यते ।
नाडीमुखेभ्यो नादस्य व्यक्तिर्व्यवसितं भवेत् ॥

श्रुत्यैक्यभावनौत्सुक्यमारम्भ इति कीर्तितः ।
स्पर्शस्तत्तद्ध्वनिस्पर्शो व्यक्तिस्थानेषु सप्तसु ॥

भिन्नो ध्वनेः प्रभेदः स्याच्चतुस्त्रिद्विप्रकारतः ।
श्रुतीनां लीयमानत्वं लयो नी[2]चोच्चभावतः ॥

तास्त्रिधा स्युः पुनर्भिन्नन्यूनाधिकविभागतः ।
भिन्ना द्विश्रुतिकास्तत्र न्यूनास्त्रिश्रुतिसंज्ञिताः ॥

चतुःश्रुतीका अधिकाः स्वरांशा श्रुतयस्त्विमाः[3] ।
स्वरितेनानुदात्तेन भिन्नसंज्ञाः प्रकीर्तिताः ॥

उदात्ताच्चानुदात्ताच्च स्वरितान्न्यूनसंज्ञिताः ।
उदात्तानुदात्त (?) स्वरितप्रचयेनाधिकाः स्मृताः ॥

यथाश्रुतिभवाः शुद्धरागा इति समीरिताः ।
भिन्नाधिकाः क्रमभवा गौडरागाः प्र[4]कीर्तिताः ॥

अधिकन्यूनसंसृष्टिमया वेस[5]रसंज्ञिताः ।
भिन्न[6]न्यूनोपगमनाद्भिन्नरागा इति स्मृताः ॥

साधारणास्स्युर्व्यत्यस्तभिन्नन्यूनाधिकात्मकाः ।
उदात्तश्चानुदात्तश्च स्वरितप्रचयावपि ॥

निहतं कम्पितश्चैव[7] तथाऽकम्पितमेव च ।
तानि स्वराणामङ्गानि सन्ति संज्ञान्तराण्यपि ॥

आद्यन्तान्वयभेदेन न्यूनभिन्नाधिकेन च ।
मन्द्रमध्यमतारेण छायासङ्ख्या[8]क्रमेण च ॥

---

1 C स्यं । 2 A गीयमानत्वं द्वयोर्नी । B श्रूयमाण । 3 C स्स्मृताः । 4 C भिन्नाधिकक्रमा भागा सोक्ताः सं । 5 B समये स्व । 6 A दिन । 7 A B कल्पतश्चैव । 8 B यासां मतं ।

उदात्तेनानुदात्तेन स्वरितप्रचयेन च ।
कम्पिताकम्पितेनैव स्वरेभ्यो रागसम्भवः ॥

आद्यन्तान्वयभेदस्तु मूर्च्छनैवेति कीर्त्यते ।
न्यूनभिन्नाधिकत्वन्तु पुरस्तादेव दर्शितम् ॥

मन्द्र[1]मध्यमतारं तत्स्थानत्रयमितीरितम् ।
रागव्यक्तिकृतालापश्छायेति परिभाष्यते ॥

षाडवौडुव[2]सम्पूर्णभेदः सङ्ख्येति कीर्त्यते ।
अत्रोदात्ताद्यः सप्त प्रसिद्धा इति नेरिताः ॥

ग्रहांशस्तारमन्द्रौ च षाडवौडविते[3] अपि ।
अल्पत्वञ्च बहुत्वञ्च न्यासोपन्यास एव च ॥

एतद्रागविभागार्थं दशकं जातिलक्षणम् ।
एतैः सप्तशतं रागाः सङ्ख्याता गीतकोविदैः ॥

रागाः सम्पूर्णनामानः स्वरसप्तकसंयुताः ।
तानान्येकोनपञ्चाशत्कथ्यन्ते पूर्णनामसु ॥

द्वि[4]चत्वारिंशता तानैः भाषाः षड्भिः स्वरैर्भवेत् ।
पञ्चत्रिंशन्मितैस्तानैर्विभाषाः पञ्चभिः स्वरैः ॥

अष्टाविंशतिभिस्तानैरनुभाषा चतुस्स्वरैः ।
द्वादशारसमुत्पन्ना द्वादशस्वरपूरिताः ॥

तानाः[5] चतुरशीतिस्तु तेऽपि[6] स्युर्मध्यमादयः ।
पदं यतिर्गतिः स्थानं लयः कालस्तथा त्रिधा ॥

सप्तविंशदलङ्कारा गमकाः सप्त चैव[7] हि ।
द्वाविंशन्मार्गगमका द्वाविंशच्छ्रुतिगामिनः ॥

1. B मन्द । 2. A डप । 3. B के । 4. A द्वि । 5. A सां । 6. C तद्वत् । 7. A सप्त ।

एतेषामेकतायोगो यथा गीतेऽवगम्यते ।
तथैव ते प्रयोक्तव्या गायकैर्गीतकोविदैः ॥

तद्भवं तत्समं देशीत्येतत्स्यात्पद[1]लक्षणम् ।
पदं स्वराधिकरणमर्थप्रत्ययकारि यत् ॥

तिस्रः स्युर्यतयो नाम्ना छन्दभिन्नसमा इति ।
तासां मार्गा[2]स्त्रयोऽपि स्युः चित्रवार्तिकदक्षिणाः ॥

आद्यन्तयोश्च मध्ये च लयपाणिपदैः[3] समा ।
वाद्यप्राधान्यभूयिष्ठा चित्रे ज्ञेया समा यतिः ॥

क्वचिच्चैवावतिष्ठेत क्वचिच्चैव प्रधावति ।
वाद्यगेयात्मिका वृत्तौ भिन्ना स्रोतोवहा यतिः ॥

अव्यक्तवर्णा छन्दाख्या गुरुभिर्लघुभिर्युता ।
लम्बिता गेयभूयिष्ठा गोपुच्छा दक्षिणे यतिः ॥

सिंहो मृगस्तथा भृङ्गो रथश्शकट एव च ।
एतेषां गतयः पञ्च गीते गीतिविदीरिताः ॥

स्थानमुक्तं लयस्त्रेधा द्रुतं मध्यं विलम्बितम् ।
कालस्त्रिधा द्वि[4]मात्रश्च चतुर्मात्रोऽष्टमात्रिकः ॥

चित्रे च वार्तिके मार्गे दक्षिणे च नियम्यते ।
प्रसन्नं मधुरं रक्तं[5] गम्भीरं विशदं लघु ॥

स्पष्टमुल्लासि ललितं गुर्वोजस्वि समं मृदु ।
प्रौढं प्ररूढमात्तं च विदग्धं शुद्धमुद्धतम् ॥

विदर्भितं पल्लवितं नवं कोरकितं कल[6]म्र ।
निरपेक्षं निराकाङ्क्षं निरालम्बनमेव च ॥

---

1 A द्व । 2 B C भिदा । 3 ABC पैरः । 4 A वि । D त्रि । 5 D गुप्तं ।
6 A B गवं कोरक्तकं कु ।

सप्तविंशदलङ्कारा ह्येत एव गुणाः स्मृताः ।
द्वाभ्यां त्रिभिः चतुर्भिः स्यादलङ्कारोऽथ पञ्चभिः ॥

समुच्चितैस्त एव स्युर्गुणा गीतेः पृथक्पृथक् ।
अलङ्काराः प्रयुज्यन्ते छायालापेषु धातुषु ॥

षट्त्रिंशत्स्युरलङ्कारा वर्णेषु भरतोदिताः ।
वर्णाश्रयानलङ्कारान्वदन्त्यन्ये त्रयोदश ॥

कम्पितः स्फुरितो लीनः त्रिभिन्नस्त्रिरिपुस्तथा ।
आन्दोलितश्चाहतश्च गमकाः सप्त[1]कीर्तिताः ॥

स्वरूपं कथ्यते नैषां व्याख्यातत्वादनेकशः ।
निस्वानितं च स्फुरितं विततं[2] विधुतं तथा ॥

भ्रामितं दीर्घललितमुरस्तारं[3] शिरोगुरु ।
उल्लोलिताक्षिप्तके च[4] लीलोत्सारितकुञ्चिते ॥

प्रतिश्रुतमुरःक्षिप्तं कण्ठाक्षिप्तकमेव च ।
समाक्षिप्तं कोमलञ्च मूर्धाक्षिप्तं विकृ[5]ष्टकम् ॥

उद्वर्तितं परावृत्तमपवर्तितमेव च ।
एतानि मार्गगमका इति विद्वद्भिरीरिताः ॥

मूर्च्छनाक्रमतस्तत्तत्स्वरश्रुतिसमाश्रयाः ।
मानपञ्चकसंयुक्तं रीतिपञ्चकसंयुतम् ॥

चतुरायामसम्भिन्नं छन्दोभिश्चाष्टभिर्युतम् ।
ध्वनिशारीरसम्मिश्रं विचित्रस्वरवर्तनम् ॥

तत्तच्छा[6]यापरिष्कारललितं गीतमुच्यते ।
समानमुच्छ्रितं लम्बं भिन्नं[7] चैवापकृष्टकम् ॥

1 AR सम्प्र । 2 A B थं । 3 AB पं । 4 A B लोलिताक्षिप्तके चैव । 5 A B तु ।
6 B ज्ञा । 7 A भिन्नरसं । D भिन्नं चरं ।

मानपञ्चकमेतत्तु कथितं गीतकोविदैः ।
समानं तद्भवेत्स्थानं ध्वनिशारीर[1]साम्यकृत् ॥

तेषां कस्यचिदुत्सृष्टिरुच्छ्रितं परिकीर्तितम् ।
स्थाने स्थाने लम्बते चेद्ध्वनिस्तल्लम्बमीरितम् ॥

ध्वनिशारीरसंश्लेषो यस्तद्भिन्नमितीर्यते ।
यत्रापकृष्यते गीते ध्वनिस्तदपकृष्टकम् ॥

रीत[2]यो गौडपाञ्चाललाटवैदर्भमिश्रजाः[3] ।
आगतिः गतिश्चापि व्यावृत्तिर्व्याकुलीनता ॥

एतद्गीतप्रयोगेषु चतुरायामसंज्ञिता[4]ः ।
अतलं तरलं चैवमुल्लोलमलगं तथा ॥

उग्राणं लिप्सितं चैव घट्टितश्च विघट्टितम् ।
एतानि रागगीतेषु छन्दांसीति च मन्वते ॥

छन्दोगतिविशेषोऽत्र न मात्रावर्णकल्पितः ।
धातुमातृषु यो रागः ताल[5]मानविनाकृतः ॥

तत्संसृष्टवदाभाति गीते तदतलं विदुः ।
तरलीक्रियते यत्र तालादिस्तारतम्यतः ॥

तरलं तत्तदुल्लोलमुल्लोलो यत्र जो ध्वनिः ।
रागस्थानेष्वलग्नो यो लयतालवशानुगः ॥

तदाश्रया गतिर्गीतेरलगं[6] कथ्यते बुधैः ।
उग्राणं तद्यदुग्रेण रागतालप्रकल्पनम् ॥

रागान्तरं लिप्सते यद्रागस्तल्लिप्सितं विदुः ।
रागान्तरेण व्याविद्धं[7] गीतं घट्टितमुच्यते ॥

---

1 A B स्थायिशरीरध्वनि । 2 B D गीत । 3 C मिश्रिताः । 4 C संज्ञिता गीतवेदिभिः । 5 C न । 6 B ध्वतलं । C ध्वकलं । 7 C लीढं

विघट्टि[1]तं विरुद्धेन तालेन स्याद्विघट्टितम् ।
भिन्नमुच्चं तथावर्तं कीलं चाकुलमेव च ॥

मुदितश्च द्रुतं चैव दोषाः सप्तैव गीतिजाः ।
ईदृक्स्वरूपं भोजाद्यैः स्वप्रबन्धेषु नोदितम् ॥

भट्टाभिनवगुप्तार्यपादैरेतत्प्रकाशितम् ।
[2]इतःपरं विशेषास्तु भोजसोमेश्वरादिभिः ॥

व्याख्याता भरतादीनां मतेनेति विरस्यते ।
मयापि शारदीयाख्ये प्रबन्धे सुष्ठु दर्शितम् ॥

सङ्गीतं तस्य भेदाश्च तत्रैवालोक्यतां बुधैः ।
आयामभेदगत्यादेः स्वरूपं कथयिष्यते ॥

नटो गीतेन वाद्येन नृत्तेनाभिनयेन च ।
रङ्गे रामाद्यवस्थाभिरनुकार्याभिरञ्जसा ॥

रामादितादात्म्यापत्तेः प्रेक्षकान्त्रसयिष्यति ।
सभापतिः सभा सभ्या गायका वादका अपि ॥

नटी नटाश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ।
अतो रङ्ग इति ज्ञेयः पूर्वं यत्स प्रकल्प्यते[3] ॥

तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ।
कला पाताः पादभा[4]गाः परिवर्ताश्च सूरिभिः ॥

पूर्वं क्रियन्ते यद्रङ्गे पूर्वरङ्गो भवेदतः ।
तस्य द्वाविंशदङ्गानि प्रत्याहारमुखानि तु ॥

प्रत्याहारोऽवतरण[5]मारम्भाश्रा[6]वणे अपि ।
वक्त्र[7]पाणिस्ततस्तत्र भवेत्तु परिघट्टना ॥

---

1 A घाटि । 2 A omits two lines । 3 B C त्संप्रकल्पते । 4 A कलाः पाताः पातरा । D कालपादापादभा । 5 C थ संरंभ । 6 C स्र । 7 B क्त्वं ।

सङ्घट्ट[1]ना ततो मार्गासारितश्च ततो भवेत् ।
शुष्कापकृष्टकं तत्रोत्थापनं परिवर्तनम् ॥

नान्दी प्ररोचना तत्र त्रिगतासारिते अपि ।
गीतं[2] ध्रुवा त्रिसाम स्या[3]द्रङ्गद्वारमतःपरम् ॥

सवर्धमानकं चारिर्महाचारिस्ततःपरम् ।
एतान्यङ्गानि कथ्यन्ते पूर्वरङ्गस्य सूरिभिः ॥

निमेषकालो मात्रा स्यान्मात्रे द्वे यत्क[4]ला भवेत् ।
द्विमात्रा स्यात्कला चित्रे[5] चतुर्मात्रा तु वार्तिके ॥

अष्टमात्रा तु विद्वद्भिर्दक्षिणे समुदाहृता ।
निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ॥

तत्रावापोऽथ[6] निष्कामो विक्षेपश्च प्रवेशनम् ।
चतुर्विकल्प इत्येवं निश्शब्दः परिकीर्तितः ॥

शम्या तालो ध्रुवश्चैव[7] सन्निपातस्तथैव हि ।
सशब्दलक्षणा ह्येते विज्ञेयास्तु चतुर्विधाः ॥

निष्कामश्च प्रवेशश्च द्विकलौ परिकीर्तितौ ।
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्तिताः ॥

गुरुप्लुतानि मि[8]त्वाऽथ द्विमात्रं परिकल्पयेत् ।
पादभागैश्चतुर्भिस्तैर्मात्रामपि च लक्षणैः[9] ॥

परिवर्तो भवेत्तालपरिवृत्तिः पुनः पुनः ।
कुतपस्य तु विन्यासः प्रत्याहार उदाहृतः ॥

कुतपो मुरजादीनां भा[10]ण्डादीनां चयः स्मृतः ।
यदा[11]ह्रियन्ते भाण्डाद्याः प्रत्याहारस्ततो भवेत् ॥

---

1 A B संघोट । 2 A रङ्ग । 3 A सामर्थ्या । 4 C न्मात्राकालः क । 5 A B C चैत्रे । 6 B न्त्रापवादो । C त्रावबोधो । 7 A B वा चैव । 8 BC हि । 9 B विचक्षणाः । 10 D द । 11 ABC या ।

अत्रावतरणं तत्स्याद्गायकानां निवेशनम् ।
बहुकार्यसमारम्भ आरम्भ इति कथ्यते ॥

वाद्यानां मुरजादीनां प्रस्तुतिः कार्यमुच्यते ।
आस्रावणं नाम भवेद्यस्मिन्नातोद्यरञ्जनम् ॥

तन्त्र्यादे[1]र्दण्डहस्ताद्यैर्दीसिरातोद्यरञ्जनम् ।
विभागो वाद्यवृत्तीनां वक्त्रपाणिरिहोच्यते ॥

समोप[2]परिपूर्वाश्च पाणयस्त्रिविधाः स्मृताः ।
तन्त्र्योजस्करणार्थं यत्सा प्रोक्ता परिघट्टना ॥

अत्र पाणिविभागो यो मतः सङ्घट्ट[3]ना बुधैः ।
सङ्घट्टनाविधिर्वीणागत इत्येव केचन[4] ॥

योगोऽत्र तन्त्री[5]भाण्डानां मार्गासारितमुच्यते ।
कलापातविभागोऽत्र भवेदासारितक्रिया ॥

अनर्थवर्णापाकृष्टिर्भवेच्छुष्कापकृष्टकम् ।
शुष्कापकृष्टकं ते न ते नेत्युच्चारणं भवेत् ॥

यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ।
तस्मादुत्थापकं ज्ञेयं वागङ्गव्यक्तिकारकम्[6] ॥

यस्मात्तु लोकपालेभ्यः परिवृत्य[7] चतुर्दिशम् ।
नमस्कुर्वन्ति तस्मात्तु परिवर्तनमुच्यते ॥

नन्दी वृषो वृषाङ्कस्य जगदादौ जगत्पतेः[8] ।
नृत्यतः कल्पनायोगाज्जगाम किल रङ्गताम् ॥

तस्य तद्रूपसम्बन्धात्पूजा नान्दीति कथ्यते ।
देवतादिनमस्कारमङ्गलारम्भपाठकैः ॥

1 A तन्त्र्या दो । C श्रातोद्यैर्द । 2 A समाथ । D समासः। 3 A ता संघोट। 4 AB वलम् । 5 A B न योगस्तन्त्र । 6 C णम् । 7 C त्या । 8 A प्रजापतेः ।

या क्रिया नन्द्यते नाट्यारम्भे नान्दीति सा स्मृता ।
या पूर्वरङ्गसम्बन्धाद्द्वाविंशत्यङ्गवर्तिनी ॥

सभ्यान्नन्दयतीत्येवं सापि नान्दीति कीर्त्यते ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥

तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।
नान्दीश्लोको विधातव्यश्चन्द्रनामाङ्क एव सः ॥

यथैव चन्द्रसम्बन्धो लक्ष्यते व्यज्यतेऽथवा ।
नान्दीश्लोके तथा यत्नः कर्तव्यः कविभिस्सदा ॥

चन्द्रायत्ततया नाट्ये प्रवृत्ते रससम्पदाम् ।
एतदुत्थापनाद्यङ्गचतुष्कं नान्दिपाठकैः ॥

विधेयमस्मात्प्रीयन्ते ब्रह्माद्याः सर्वदेवताः ।
सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः ॥

नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम् ।
तत्सङ्ख्यातैर्भवेन्नान्दी वाक्यैः क्वापि विवक्षया ॥

समपादाऽथवा नान्दी भवेदिति च केचन ।
प्ररोचना सा यत्रैव प्रख्यातोदात्तवस्तुनः ॥

प्रशंसया प्रेक्षकाणामुन्मुखीकरणं तु यत् ।
सूत्रधारो नटश्चैव तथा वै पारिपार्श्विकः ॥

कुर्वन्ति यत्र सल्लापं तदेतत्त्रिगतं स्मृतम् ।
आसारितं बहिर्गीतविधिरित्युच्यते बुधैः ॥

अत्र गीतिविधिः पूर्वैर्बहुशो भरतादिभिः ।
व्याख्यातस्तत्र वैपुल्यान्नास्माभिरभिधीयते ॥

मन्द्रकादिषु गीतेषु सर्वेष्वेष[1] विधिः स्मृतः ।
अधिका[2] चापकृष्टा च प्रावेशिक्यावसानिकी[3] ॥

अन्तरा चेति पञ्चैता ध्रुवा नाटकसंश्रिताः ।
त्रिसाम स्यात्त्रिनृत्तं[4] च त्रिलयं च त्रिपाणि यत्[5] ॥

वागङ्गसत्त्वाभिनयैस्त्रिनृत्तमभिधीयते ।
यस्मादभिनयो यत्र प्रथमं त्ववतार्यते ॥

रंगद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ।
सुकुमारं विजानीयाच्छृङ्गाररससम्भवम् ॥

स्मराश्रये च दम्पत्योर्नृत्तं हर्षात्मकं भवेत् ।
पत्यौ सन्निहिते यस्मिन्नृतुकालादिदर्शनम् ॥

गीतकार्याभिसम्बन्धं नृत्तं तत्र प्रयोजयेत् ।
दूत्याश्रयं यदा च स्यादृतुकालादिदर्शनम् ॥

औत्सुक्यचिन्तासम्बन्धात्तत्र नृत्तं प्र(न)योजयेत् ।
खण्डिता विप्रलब्धा च कलहान्तरितापि वा ॥

यस्मिन्नङ्गे भवेन्नारी[6] तत्र नृत्तं न योजयेत् ।
सखीप्रवृत्ते सल्लापे दयिते प्रोषिते सति ॥

सद्भिर्नि(र्न)योज्यते नृत्तं प्रियेऽसन्निहितेऽपि च ।
देवस्तुत्याश्रयं गीतं यदङ्गं यत्र दृश्यते ॥

माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ।
यत्र श्रृङ्गारसम्बन्धं गानं स्त्री[7]पुरुषाश्रयम् ॥

देव्या कृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ।
ततस्त्रिसाम्ना[8] देवस्य पुष्पाञ्जलिमुदीरियेत् ॥

---

1 A B ससस्वेष । 2 C आस्थिता । 3 C प्रवेश्या च वसन्तिका । 4 A B त्रिवृत्तं । 5 C युक्त । 6 A न्दी । 7 B यन्ति । 8 B C ततः त्रिसाम ।

तिरस्कृतरसोत्कर्ष[1]ः किञ्चिदामोदसूचकः ।
पुष्पाञ्जलिभवः श्लोक[2]ः कार्य आशीःपुरस्सरः ॥

ततः पुष्पाञ्जलिं मुक्त्वा रङ्गपीठं परीत्य च ।
प्रणम्य देवताभ्यश्च कर्तव्योऽभिनयस्तदा ॥

यत्राभिनेयं गेयं स्यात्तत्र वाद्यं न योजयेत् ।
अङ्गहारप्रयोगे तु भाण्डवाद्यं प्र[3]योजयेत् ॥

समं रक्तं विभ[4]क्तञ्च स्फुटं शुद्धं प्रहारजम् ।
नृत्ताङ्गग्राहि वाद्यज्ञैर्योज्यं वाद्यं तु ताण्डवे ॥

आसारितादि वा गीतं नृत्तं वाद्यमथापि वा ।
वर्धतेऽ[5]भिनयो वा स्यात्स भवेद्वर्धमानकः ॥

एकवाद्य[6]प्रचारो यः स चारीत्यभिधीयते[7] ।
मण्डलादिप्रचारो यः स महाचारिरिष्यते ॥

इति द्वाविंशदङ्गात्मा पूर्वरङ्गः प्रकीर्तितः ।
एवं यः पूर्वरङ्गन्तु विधिना सम्प्रयोजयेत् ॥

नाशुभं प्राप्नुयादत्र पश्चात्स्वर्गं च गच्छति ।
इत्थं रङ्गविधानस्य सम्बन्धादिप्रसिद्धये ॥

गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम् ।
ना[8]यकस्य च यन्नाम गर्भनिर्दिष्टलक्षणम् ॥

वाञ्छाकलापः प्रथमः कलाविधिरनन्तरः ।
वाञ्छाशून्या न दृश्यन्ते व्यवहाराः कदाचन ॥

वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् ।
स्वाभिधेयगतत्वेन तद्द्विधा परिपठ्यते ॥

---

1 A र्षा । 2 B र्भवेत् श्लोकः C ममुक्त्वैव । 3 A न । 4 C र । 5 B उद्धतो ।
6 C पाद । 7 A महाचारिरुच्यते । 8 A गा ।

स्वगतं[1] तु स्वगोत्रादि स्वस्य[2] कीर्तिप्रकाशनम् ।
अभिधेयगतं तत्तत्काव्यनाम्ना प्रकाशनम् ॥

तन्नाम नाटकाद्यन्तर्गर्भितार्थोपसूचकम् ।
यदा हि रामाभ्युदयं नाम नाटकमित्यतः ॥

वाच्यवाचकसम्बन्धो नाट्यविद्भि[3]र्विभाव्यते ।
कीर्तिः फलं तया स्वर्गस्थितिरत्र प्रयोजनम् ॥

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
'नान्द्यन्ते' शब्दबोधार्थमुक्तान्यङ्गानि लेश[4]तः ॥

प्ररोचनार्थो[5] नान्द्यन्तः प्रत्याहारादि कथ्यते ।
अथ नान्द्यन्तशब्दोऽत्र षष्ठीतत्पुरुषोऽपि वा ॥

इत्थं रङ्गं विधायादौ सूत्रधारे विनिर्गते ।
तद्व[6]न्नटः प्रविश्यान्यः सूत्रधारसमा[7]कृतिः ॥

सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ।
अत्र वस्तुस्वरूपन्तु प्रथमं सम्यगुच्यते ॥

वस्तु तत्स्यात्प्रबन्धस्य शरीरं कविकल्पितम् ।
इतिवृत्तं तदेवाहुर्नाट्याभिनयकोविदाः ॥

चरितं नायकादीनामितिवृत्तमिति स्मृतम् ।
प्रयोजनवशात्तत्तु वर्तमानमपि क्वचित् ॥

वृत्तवत्कल्प्यमिति यदितिवृत्तं तदुच्यते ।
गोपुच्छवद्विधातव्यं काव्यादि[8] कविभिः सदा ॥

पश्चाद्भागे प्रबन्धस्य कर्तव्यास्ते रसादयः ।
इतिवृत्ताभिधं वस्तु यत्काव्ये तद्द्विधा भवेत् ॥

1 B भूतं । 2 B सोऽस्य । 3 A नास्त्येवात्र । D नास्त्येवाम्यै । 4 A वेग । 5 AB तो । 6 A कश्चि । 7 A B गुणा । 8 A कार्यादि । C अङ्कादि ।

आधिकारिकमेकन्तु प्रासङ्गिकमथापरम् ।
तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ॥

वृत्तान्तो नायकादीनामत्र स्यादाधिकारिकः ।
उपनायकवृत्तान्तः प्रासङ्गिक उदाहृतः ॥

नायिकानायकादीनां वृत्तान्तो यस्त्रिवर्गभाक् ।
काव्य[1]व्यापी स एवैष आधिकारिक उच्यते ॥

यश्चोपनायकादीनां वृत्तान्तो नायकार्थकृत् ।
स नान्तरीयकश्चार्थः प्रासङ्गिक उदाहृतः ॥

आजन्मनोऽभिषेकान्तं रामस्यैवाधिकारिकम् ।
प्रासङ्गिकन्तु सुग्रीवविभीषणविचेष्टितम् ॥

प्रासङ्गिकाभिधं वस्तु नाटके भवति त्रिधा ।
पताकाप्रकरीयुक्तपताकास्थानकक्रमात् ॥

सानुबन्धं पताकाख्यं प्रकरी च प्रदेश[2]भाक् ।
उपनायकवृत्तान्तो नायकस्य फलार्थिनः ॥

साधको लभ्यते स्वार्थे सा पताकेति कथ्यते ।
नायकस्य कथामध्ये तत्समानस्य या कथा ॥

आफलोदयपर्यन्ता सा[3] पताकेति कथ्यते ।
पताका मद्रराजस्य[4] शल्यस्य चरितं यथा ॥

फलं प्रकल्प्यते यस्याः परार्थायैव केवलम् ।
अनुबन्धविहीनां तां प्रकरीमिति निर्दिशेत् ॥

येन केनाप्यनल्पेन हेतुना पूर्वमुद्गतम् ।
पश्चान्न दृश्यते यत्तु तद्वस्तु प्रकरी भवेत् ॥

---

1 B नाट्य । 2 A च प्रभेद । 3 A सम्बन्धातसा । 4 A मकरन्दस्य ।

प्रकरी कुलपत्यङ्के जटायो[1]श्चरितं यथा ।
यथा पताका कस्यापि शोभाकृच्चिह्नरूपतः ॥

स्वस्योपनायकादीनां वृत्तान्तस्तद्वदुच्यते ।
शोभायै वेदिकादीनां यथा पुष्पाक्षतादयः ॥

तथाऽत्र वर्णनादिस्तु प्रबन्धे प्रकरेर्भवेत् ।
आगन्तुकेन[2] भावेन यदभिव्यक्तिकारणम् ॥

वस्तुनो भाव्यवस्थस्य पताकास्थानकन्तु तत् ।
तत्पताकाप्रकर्यादेर्भाव्यवस्थस्य वस्तुनः ॥

सूचनोपायमेवाहुः पताकास्थानकं बुधाः ।
अतीतानागते कार्ये कथ्येते यत्र वस्तुना ॥

अन्यापदेशव्याजेन पताकास्थानकन्तु तत् ।
यत्रार्थे चिन्तितेऽन्यस्मिंस्तद्व[3]दन्यः प्रवर्तते ॥

आगन्तुकेन भावेन पताकास्थानकं तु तत् ।
तत्तुल्यसंविधानञ्च तथा तुल्यविशेषणम् ॥

इति द्विधा यदन्योक्तिरूपं तत्प्रथमं भवेत् ।
यत्समासोक्तिरूपन्तु तत्स्यात्तुल्यविशेषणम् ॥

पताकास्थानकस्यान्ये चातुर्विध्यं प्रजानते ।

"सहसैवार्थसम्पत्तिर्गुणवृत्त्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥

वचः[4]सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥

अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥

1 A ज्ञातयो । 2 B कन्तु । 3 D तल्लिङ्गो । 4 C समाश्र ।

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
उपन्यासस्सुयुक्तं यत्[1] तच्चतुर्थमुदाहृतम् ॥"

आदितस्त्रितयं तुल्यसंविधानात्मकं भवेत् ॥

चतुर्थं तु भवेत्तुल्यविशेषणसमन्वितम्।
उद्दामोत्कलिकेत्यादि लतारत्नावलीगतम् ॥

यदुच्यते द्वितीयेऽङ्के तत्स्यात्तुल्यविशेषणम्।
यत्सिद्धिचिन्ता यत्काले तत्काले तस्य सिद्धये ॥

विधीयते यदन्योक्तिस्तत्तुल्यं संविधानकम्।
'अपि नाम स गृह्येत' इति[2] कौटिल्यचिन्तया ॥

'गहीदो[3]' इति सिद्धार्थकोक्तिस्तुल्यविधानकम्।
यदा[4]धिकारिकं वस्तु द्विधैव परिकीर्तितम् ॥

प्रत्येकं तत्त्रिकं त्रेधा भिद्यते कार्ययोगतः।
प्रख्यातोत्पाद्यमिश्रत्वभेदात्त्रिविधमुच्यते ॥

प्रख्यातमितिहासादिरुत्पाद्यं कविकल्पितम्।
मिश्रं च सङ्करादेवं नवधा वस्तु कल्पितम् ॥

तस्माद[5]पीह वस्त्वन्यद्दिव्यमर्त्योभयात्मकम्।
अनन्त[6]त्वादथैतेषामूह्या लक्ष्यानुसारतः ॥

अत्राधिकारिकस्यापि तथा प्रासङ्गिकात्मनः।
वस्तुनो भरतः प्राह फलं तस्य भिदा अपि ॥

फलं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च।
त्रिभिर्द्वाभ्या[7]मथैकेन तेषामन्योन्यसङ्करात् ॥

---

1 A यदुपन्याससंयुक्तं। 2 A तेति तु। 3 B गहीत। 4 A तथा। B यथा। 5 A स्यस्याद। C स्याच्चेद। 6 A त्वुक्त। 7 A त्रिबिन्द्वाख्या।

एवं द्वादशधा वस्तुफलभेदाः प्रकल्पिताः ।
बीजमस्येतिवृत्तांशः त्रिवर्गस्येरितं बुधैः ॥

फलं यदितिवृत्तस्य स त्रिवर्ग इतीरितः ।
उपक्षिप्तन्तु यत्स्वल्पं विस्तारं यात्यनेकधा ॥

हेतुर्यत्स्यात्त्रिवर्गस्य तद्बीजमिति कथ्यते ।
विस्तारो बहुधा तस्य नायकादिविभेदतः ॥

स स्वामात्यो[1]भयायत्तसंसिद्धेर्नायकस्य तु ।
तत्तदुत्साह[2]रूपोऽयं विस्तार इति कथ्यते ॥

बीजमुप्तं यथा स्कन्धशाखापुष्पादिरूपतः ।
बहुधा विस्तृतिं गच्छेत्फलायान्तेऽवकल्पते ॥

तथा नायकमित्रा[3]दिरूपोऽन्ते फलवान् भवेत् ।
बीजश्च वेणीसंहारे सत्पक्षा इति दर्शितम् ॥

फले[4] प्रधाने विच्छिन्ने बीजस्यावान्तरैः फलैः ।
तस्याविच्छेदको हेतुः बिन्दुरित्याह कोहलः ॥

बिन्दुर्मानविपत्तिभ्यां द्विरूपः कथ्यते बुधैः ।
क्रोधेन मानजो बिन्दुः शोकेन स्याद्विपत्तिजः ॥

लाक्षागृहानलेत्यादि बिन्दोः सामान्यलक्षणम् (?) ।
कृष्टा येनेति पाञ्चाली[5] व्याहृता गौरिति क्रुधा[6] ॥

शोकेन द्रौपदीकेशाम्बराकर्षणपातकिन् ।
इति बिन्दोर्द्विरूपत्वमन्यत्रोह्यमिदं यथा ॥

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च कथाभेद[7]स्य हेतवः ॥

---

1 B C D ससामान्यो । 2 B C यत्तदुत्सङ्ग । 3 श्रा । 4 B ल । 5 C केशेषु येनेति । 6 A ताढ या । 7 B तथा देह ।

एते कथाशरीरस्य हेतवः परिकीर्तिताः ।
साधनत्वाद्धि बीजस्य प्रथमं तदुपक्षिपेत् ॥

साध्यत्वादेव कार्यस्य सर्वा[1]न्ते तत्प्रयोजयेत् ।
अविच्छेदाय रचयेद्बिन्दुं मध्ये तयोरपि ॥

तत्र तत्र यथायोगं पताकाप्रकरीन्यसेत् ।
उक्ता ह्यर्थप्रकृतयस्तत्प्रवृत्तिश्च दर्शिता ॥

यथा हि विश्वामित्रस्य प्रोत्साहोपचितः स्वतः[2] ।
रामाद्युत्साहरूपोऽर्थो बीजमित्यभिधीयते ॥

यद्द्वितीये तृतीयेऽङ्के जात्याद्य[3]च्छेदकारणम् ।
अनुयायी भवेद्बिन्दुश्चतुर्थाङ्कावधि क्वचित् ॥

यथा हि वीरचिते चतुर्थेऽङ्के विलोक्यते ।
विष्कम्भे माल्यवद्वाक्ये हा वत्सा इत्युदीरिते[4] ॥

सुग्रीवादेर्य उ[5]त्साहो रामाद्युत्साहसाह्यकृत् ।
सा[6]नुबन्धः फलप्राप्तेः सा पताकेति कथ्यते ॥

यथा जटायोर्वृत्तान्तः सीतापहरणे कृतः ।
हनूमतो वा प्रकरी[7] यथा सागरलङ्घने ॥

ताताज्ञामधिमौलीति वाक्ये कार्यं विलोक्यते ।

ताताज्ञामधिमौलि मौक्तिमणिं कृत्वा महापो[8]त्रिणो
दंष्ट्राविध्य[द्ध][9]विलासपत्रकबरी दृष्टा भृशं मेदिनी ॥
सेतुर्दक्षिणपश्चिमौ जलनिधी सीमन्तय[10]न्निर्मितः
कल्पान्तं च[11] कृतं समस्तमदशग्रीवोपसर्गं जगत् ॥

अत्र धर्मार्थनिष्पत्तिः फलत्वेन प्रकल्पिता ॥

---

1 B कार्या । 2 C तोऽपि सः । 3 B द्यु । 4 C ताः । 5 C र्यदु । 6 A योऽ । 7 B कृतिः । 8 A होत्रि । 9 All Mss read विन्ध्य or विध्य । 10 A सम्मर्द । 11 B स्ताम ।

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥

कार्यस्य नायकादीनां व्यापारापेक्षया पुनः ।
पञ्चावस्था भवन्तीति भरतादिभिरुच्यते ॥

औत्सुक्यमात्रबन्धस्तु यद्बीजस्य नियुज्यते ।
महतः फलयोगस्य स खल्वारम्भ इष्यते ॥

अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं स प्रयत्नः प्रकीर्तितः ॥

ईषत्प्राप्तिश्च या काचिदर्थस्य परिकल्प्यते ।
सत्तामात्रेण तं प्राहुर्विधिवत्प्राप्तिसंभवम् ॥

नियुक्ता तु फलप्राप्तिर्यदा ह्ये[1]वं प्रपश्यति ।
नियतां तु फलप्राप्तिं सगुणां तां विनिर्दिशेत् ॥

अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
दृश्यते यन्निवृत्तेति[2] फलयोगः स उच्यते ॥

सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
यथानुक्रमशो ह्येताः पञ्चावस्था भवन्ति हि[3] ॥

शकुन्तलायाः क्षत्रेण परिग्राह्यक्षमत्वतः ।
आरम्भोऽसंशयं क्षत्रेत्यादिदुष्यन्तभाषिते ॥

प्रयत्नो माधवेनैव मालत्याः सङ्गमाशया ।
प्राणैस्तपोभिरित्यादि यत्तत्कामन्दकी[4]वचः ॥

प्रीते विधातरीत्यादि प्राप्त्याशा माल्यवद्वचः ।
सन्देहनिर्णयो जातः साभिलाषं भवेति च ॥

1 C भा। 2 A इपि। 3 A वा। 4 A दम्बरी।

दुष्यन्तभाषितं यत्र नियताप्तिरियं भवेत् ।
भीमस्य वेणीसंहारे फलयोगोऽत्र दर्शितः ॥

अवस्थापञ्चकं ह्येतदर्थप्रकृतिभिस्सह[1] ।
निबन्धनीयं कविभिर्यथैवान्योन्यमन्वितम् ॥

तदन्वयवशादर्थप्रकृतीनां यथाक्रमम् ।
एकैकस्य भवेत्सन्धिरेकैक इति निर्णयः ॥

अथार्थप्रकृतीनां तदवस्थापञ्चकस्य च ।
अन्वयो ह्युपसंहारक्रमारम्भक्रमाश्रयः ॥

पञ्चावस्थासमेतार्थप्रकृतीनां यथाक्रमम् ।
यथासङ्ख्येन जायन्ते मुखाद्याः पञ्च सन्धयः ॥

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।
अन्वितानां कथांशानां परमे तु प्रयोजने ॥

संबन्धस्सन्धिरित्युक्तोऽवान्तरैकप्रयोजनः ।
एककार्यान्वितेष्वत्र कथांशेषु प्रयोगतः ॥

अवान्तरैककार्यस्य सम्बन्धः सन्धिरिष्यते ।
मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ॥

विवक्षितोऽयमुद्देशक्रमोऽवस्थाक्रमो यथा ।
नानार्थरसहेतुस्तु बीजोत्पत्तिर्मुखं भवेत् ॥

अंहो अअं सो राओत्ति रत्नावल्यां मुखं स्मृतम् ।
बीजोत्पत्तिर्न हेतुः स्याद्रसानां मुखसन्धिभाक् ॥

तेषां त्रिवर्गसम्बन्धः प्रायो यस्मान्न दृश्यते ।
मैवं कामोपयोग्यत्र शृङ्गारो दृश्यते[2] रसः ॥

---

1 C संभवम् । 2 C गृह्यते ।

अर्थोपयोगी वीरः स्याद्रौद्रोऽपि स्यात्क्वचित्क्वचित् ।
रक्षारूपेण धर्मार्थोपयोगी करुणो भवेत् ॥

अद्भुतोऽपि मनः[1]प्रीतिप्र[2]दत्वात्कामसाह्यकृत् ।
ते भयानकबीभत्सहास्याः काव्येषु योजिताः ॥

तत्तन्नेतृमनोवृत्तिवशात्प्रायस्त्रिवर्गगाः ।
अतो रसानां हेतुत्वं मुखसन्धेर्भवेदपि ॥

बीजारम्भोदाहृतिर्या मुखसन्धेश्च सा भवेत् ।
अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥

उद्भेदः करणं भेद इत्यङ्गानि मुखस्य तु ।
बीजन्यास उपक्षेपस्तद्बाहुल्यं परिक्रिया ॥

तन्निष्पत्तिः परिन्यासो गुणाख्यानं[3] विलोभनम् ।
सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते ॥

बीजागमः समाधानं प्राप्तिः कोऽपि सुखागमः ।
परिभावोऽद्भुतावेशो[4] विधानं सुखदुःखकृत् ॥

करणं प्रकृतारम्भ उद्भेदो गूढभेदनम् ।
भेदः प्रोत्साहनाऽङ्गानि कथितानि यथार्थतः ॥

वस्तुनेतृरसादीनामानुगुण्येन योजयेत् ।
विवक्षितोऽत्र नाङ्गानां क्रम इत्येव निर्णयः ॥

लक्ष्यालक्ष्य इवोद्भेदस्तस्य प्रतिमुखं भवेत् ।
दृश्यादृश्यतया बीजव्यक्तिः प्रतिमुखं भवेत् ॥

---

1 B नाक् । 2 B प । 3 C तद्गुणाख्या । 4 A दो ।

प्रत्यङ्गोपनिबद्धानां तत्तत्कार्यानुसारतः।
प्रयोजनानां निष्पत्तिर्दृश्यत्वमिह कथ्यते॥

बहूनां तादृगर्थानामनिष्पत्तिरदृश्यता।
यथा सागरिकायान्तु वत्सराजस्य दर्शनात्॥

समागमेच्छा[1] बीजन्तु दृश्यादृश्यतया स्थितम्।
बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश॥

विलासः परिसर्पश्च विधूतं शमनर्मणी।
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम्॥

पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि।
रतिचेष्टा विलासः स्याद्दम्पत्योर्नवसङ्गमे॥

परिसर्पस्तु बीजस्य दृष्टनष्टानुसर्पणम्।
विधूतमरतिर्यूनोस्सुरता[2]प्राप्तिसम्भवा॥

यूनोररत्युपशमः शम इत्युच्यते बुधैः।
परिहासवचो नर्म धृतिस्तज्जा[3] द्युतिर्भवेत्॥

युक्तोत्त[4]रं प्रगमनं निरोधः स्यान्निरोधनम्।
अनुनीतिः पर्युपास्तिः पुष्पं साति[5]शयं वचः॥

प्रत्यक्षनिष्ठुरं वज्र[6]मुपन्यासः प्रसादनम्।
वर्णसंहार इत्युक्तो नानाजातीयसङ्गमः॥

एतेषाञ्च क्रमो न स्याद्व्युत्क्रमस्यापि दर्शनात्।
पौर्वापर्यं भवेन्नर्मद्युत्यन्ते विधुतादिके[7]॥

विलासादेः प्रधानत्वं नेत्रादिवशतो भवेत्।
गर्भः स्याद्दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः[8]॥

---

1 B समैश्च। 2 B तरी। 3 B र्ले। 4 AB न्त। 5 B नु। 6 A वाक्य।
7 B C कम्। 8 C बहिः।

बीजस्यैवान्तरायादेरस्य प्रतिमुखान्तरे
दृश्यादृश्यतया दृष्टनष्टस्यान्वेषणं हि सः[1] ॥

व्यपा[2]यशङ्काऽनुवृत्तेर्विच्छेदस्यानुवृत्तितः ।
पौनःपुन्यं मुहुरिति गर्भस्तादृश ईरितः ॥

स्यादत्रोत्सर्गतः प्राप्तिः पताकाया विकल्पतः ।
तथाप्यस्या निवेशः स्यात्प्राप्त्याशाया नियोगतः ॥

प्राप्त्याशायामवस्थायां गर्भसन्धाविहाथवा ।
अपताके निवेशः स्याद्बिन्दोर्बीजस्य वा क्वचित् ॥

समन्वयेऽर्थप्रकृतेः प्राप्त्याशाया इतीरितः ।
अभावस्तु पताकाया यथा मालविकादिषु ॥

सद्भावो दृश्यते तस्या मालतीमाधवा[3]दिषु ।
तस्मात्पताका स्यान्नेति विकल्पं प्राह कोहलः ॥

गर्भसन्धेः प्रसिद्धत्वान्नोदाहरणमुच्यते ।
तृतीयाङ्के तु मालत्या(त्या) गर्भसन्धिर्विलोक्यते ॥

शरीरं क्षाममित्यादि क्व सेत्यन्तं यदन्तरा ।
अङ्गानि द्वा[4]दशैतस्य गर्भसन्धेर्यथाक्रमम् ॥

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानश्च तोटकाधिबले तथा ॥

उद्वेगसम्भ्रमाक्षेपा इत्यङ्गानि भवन्ति तु ।
अभूताहरणं छद्म तदा तत्त्वस्य कत्थनम् ॥

अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ।
तत्वार्थकीर्तनं मार्गो रूपं सन्देहकृद्वचः ॥

---

1 B सा । 2 A वा । 3 A B यथा मालविका । 4. C न्येका ।

द्वि[1]त्रार्थसमवाये तु वितर्को रूपमुच्यते ।
यत्तु सातिशयं वाक्यं तदुदाहरणं भवेत् ॥

क्रमः सञ्चिन्तितार्थाप्तिर्भावज्ञानमथापरे ।
सङ्ग्रहः सामदानोक्तिरभ्यूहो[2] लिङ्गतोऽनुमा ॥

चेष्टयाऽन्यातिसन्धानं वदन्त्यधिबलं बुधाः ।
संरम्भयुक्तं वचनं यत्तत्तोटकमुच्यते ॥

उद्वेगो[3]ऽरिकृता भीतिः शङ्कात्रासौ च सम्भ्रमः ।
गर्भबीजसमुत्क्षेपादाक्षेप इति कीर्तितः ॥

गर्भसन्धेरिहाङ्गानां क्रमोऽपि न विवक्षितः ।
क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ॥

गर्भनिर्भिन्नबीजार्थः सोऽवमर्श इति स्मृतः ।
गर्भनिर्भिन्नबीजार्थः सम्बन्धो व्यसनादिजः ॥

विचारनिर्णयो यस्तु सोऽवमर्श इति स्मृतः ।
यथा हि वेणीसंहारे तीर्णे भीष्ममहार्णवे ॥

इत्यादिनैव षष्ठेऽङ्के सोऽवमर्शो विलोक्यते ।
तत्रापवादसम्फेटौ विद्रवद्रवशक्तयः ॥

द्युतिः प्रसङ्गश्छलनं व्यवसायो निरोधनम् ।
प्ररोचना विचलनमादानञ्च त्रयोदश ॥

दोषप्रख्याऽपवादः[4] स्यात्सम्फेटो रोषभाषणम् ।
विद्रवो वधबन्धादिर्द्रवो गुरुतिरस्कृतिः ॥

विरोधशमनं शक्तिस्तर्जनोद्वेजने द्युतिः ।
अप्रस्तुतार्थकथनं प्रसङ्ग इति कथ्यते ॥

---

1 A B त्रि । 2 A B भूह्या । 3 A ह्वेदो । 4 A B ह्याख्यापहारः ।

व्यवसायः स्वशक्त्युक्तिश्छलनं चावमाननम् ।
व्यवसायः परिज्ञेयः प्रतिज्ञाहेतुसम्भवः ॥

संरम्भानाम[1]वज्ञा या तद्विरोधनमुच्यते ।
परस्परस्य सङ्ग्रामः संरम्भेण विरोधनम् ॥

आमन्त्रणं यत्साध्यस्य सिद्धवत्सा प्ररोचना ।
विकत्थना विचलनमादानं कार्यसङ्ग्रहः ॥

एषां क्रमप्रधानत्वे प्रक्रिया पूर्ववद्भवेत् ।
बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥

ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणन्तु तत् ।
बीजयुक्ता[2] मुखाद्यर्थाः परमे च प्रयोजने ॥

लभन्ते यत्र सम्बन्धं तन्निर्वापणमुच्यते ।
यदा हि रामाभ्युदये सुग्रीवश्च विभीषणः ॥

कपयो राक्षसा रामाभिषेकाभ्युदयं ययुः ।
उपसंहृतिसन्धेश्च संज्ञा निर्वहणन्त्विति ॥

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृतिभाषोपगूहनाः ॥

पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ।
सन्धिर्बीजोपगमनं विरोधः कार्यमार्गणम् ॥

ग्रथनं तदुपक्षेपस्तच्छ[3]न्दः कार्यवाचकः ।
निर्णयस्त्वनुभूताख्यः पुनः पुनरितीरितः ॥

परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् ।
परिभाषा मिथो जल्पः प्रसादः पर्युपासनम् ॥

1 C व्यवद । 2 A वन्तो । 3 B स्तवश ।

आनन्दो वाञ्छितावाप्तिस्समयो दुःखनिर्गमः ।
कृतिर्लब्धार्थशमनं तत्स्थिरीकरणं तु वा ॥

मानाद्यर्थस्य सम्प्राप्तिर्भाषेति परिभाष्यते ।
कार्यदृष्ट्यद्भुतप्राप्ती पूर्वभावोपगूहने ॥

वरप्रदानलाभादिः कार्यसंहार उच्यते ।
प्रशस्तिर्वीर्यविजयमङ्गलादिप्रशंसनम् ॥

नेत्रादिवशतोऽमीषां प्राधान्यञ्च क्रमोऽपि च ।
यथासम्भवमाधेयो विकल्पश्च समुच्चयः ॥

तेषां लक्ष्येषु दृष्ट्वान्नान्यथा कल्पयेत्सुधीः ।
उक्ताऽङ्गानां चतुष्षष्टिः षोढा चैषां प्रयोजनम् ॥

एतान्युक्तानि शृङ्गारप्रकाशे भोजभूभृता ।
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ॥

रागप्राप्तिः प्रयोगस्य गोप्यानां चैव गोपनम्[1] ।
आश्चर्यवदभिज्ञानं प्रकाश्यानां प्रकाशनम् ॥

एवं प्रयोजनं षोढा सन्ध्यङ्गानामुदाहृतम् ।
यथाऽङ्गहीनः पुरुषो न च कार्यक्षमो भवेत् ॥

अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् ।
काव्यं यदनुदात्तार्थं सम्यगङ्गैः समन्वितम् ॥

दीप्तत्वात्तत्प्रयोगस्य शोभामेति न संशयः ।
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम् ॥

हीनत्वात्तत्प्रयोगस्य न सतां रञ्जयेन्मनः ।
तस्मात्सन्धिप्रयोगेषु[2] यथायोगं यथारसम् ॥

1 गुह्योनालं च गूहनम् । 2 A B त्सन्धिप्रयोगेण ।

काव्याङ्गानि प्रयुञ्जीत द्वित्रैर्हीनं न दुष्यति ।
यावन्त्यङ्गानि पठ्यन्ते तावतामेव कोविदैः ॥

निबन्धः कार्य इत्येव निर्णयो भोजभूभुजः ।
उपक्षेपादयोऽप्यत्र प्रबन्धेष्वाधिकारिका:[1] ॥

प्रासङ्गिकाश्च[2] कविभिः प्रयोक्तव्या रसानुगाः
त[3]था सन्ध्यन्तराङ्गानि प्रयुञ्ज्यात्तत्र तत्र तु ॥

साम चापि प्रदानञ्च भेदो दण्डो वधस्तथा ।
प्रत्युत्पन्नमतित्वञ्च गोत्रस्खलितमेव च ॥

मायोपधिर्भयं हा[4]सः क्रोधो भ्रान्तिस्तथैव च ।
ओजस्संवरणं चैव तथा हेत्ववधारणम् ॥

दूतो लेखस्तथा स्वप्नस्तथा चित्रं मदोऽपि च ।
सन्ध्यन्तराणि सन्धीनां विशेषास्त्वेकविंशतिः ॥

सन्धीनां यानि वृत्तानि प्रबन्धेष्वनुपूर्वशः ।
स्वसम्पद्गुणयुक्तानि तान्यङ्गानि प्रयोजयेत् ॥

द्वेधा विभागः कर्तव्यः सर्वस्यापीह वस्तुनः ।
सूच्यमेव भवेत्किञ्चिद्दृश्यश्र[5]व्यमथापरम् ॥

नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
नीरसं लौकिकोपेतमशास्त्रीयञ्च यद्भवेत् ॥

तद्वस्तु सूचनीयं स्यादित्याहुर्भरतादयः ।
दृश्यस्तु मधुरोदात्तरसभावनिरन्तरः ॥

अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ।
विष्कम्भचूलिकाऽङ्कास्याङ्कावतारप्रवेशकैः ॥

---

1 B ताः । 2 A B श्चा । 3 A य । 4 A यावधिर्भवेयं । 5 All Mss. read दृश्यंश्रव्य ।

सूच्यार्थसूचनोपायाः सूरिभिः पञ्च[1] कीर्तिताः ।
वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ॥

संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ।
तत्र संक्षेपशब्दो यः स प्रयोजनवाचकः ॥

वृत्तवर्तिष्यमाणाङ्कद्वयशेषार्थ[2]सूचकः ।
विष्कम्भोऽङ्कद्वयस्यान्तर्यथायोगं प्रवेशकः ॥

द्विधा भवेत्स विष्कम्भः शुद्धः सङ्कीर्ण इत्यपि ।
शुद्धोऽनेकैरथैकेन मध्यपात्रेण योजितः ॥

नीचमध्यमपात्रेण सङ्कीर्णस्तादृशेन च ।
कपालकुण्डलाशुद्धविष्कम्भः पितृकानने ॥

उन्मत्तमाधवे सौदामिनीसङ्कीर्ण इत्यपि[3] (?) ।
विष्कम्भे नायकादीनां प्रवेशः कार्य एव च[4] (न) ॥

शुद्धः सङ्कीर्णो वा द्वेधा विष्कम्भको ज्ञेयः ।
मध्यमपात्रः शुद्धः सङ्कीर्णो नीचमध्यकृतः ॥

कुतोऽपि स्वेच्छया प्राप्तः सम्बन्धो नोभयोरपि ।
विष्कम्भार्थः स विज्ञेयः कथांशस्यापि सूचकः ॥

वृत्तवर्तिष्यमाणाङ्कद्वयमध्ये निवेशनम् ।
विष्कम्भस्योक्तशेषार्थसूचनायो[5]पपादितम् ॥

वृत्तवर्तिष्यमाणाङ्कद्वयमध्ये प्रवेशनम् ।
विष्कम्भस्यानुदात्तोक्त्या यन्नीचे[6]नार्थसूचनम् ॥

ततः प्रवेशकः प्रायः प्रथमाङ्के निषि[7]ध्यते ।
निवेशः प्रथमाङ्केऽपि विष्कम्भस्यावधार्यते ॥

1 A एते पञ्चप्र । C पञ्चतन्त्र । 2 B ङ्कद्वयोः श्लेषार्थ । C नां द्वयोः शब्दार्थ । 3 A कल्पितः ।
4 B हि । 5 A स्तम्बगाढो । 6 A त्रिजे । 7 B ब ।

आदौ विष्कम्भकं कुर्यादिति भोजेन दर्शितम् ।
परिजनकथाऽनुबन्धः प्रवेशकस्तत्र विज्ञेयः ॥

अङ्कच्छेदं कृत्वा मासकृतं वर्षसञ्चितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥

नो[1]त्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारप्रयोगमासाद्य कर्तव्यः ॥

विटमुनिदैवतपुरुषैः कञ्चुकिभिश्चार्थयुक्ति[2]मासाद्य ।
संस्कृतवाग्भिरपीत्थं प्रवेशकः संविधातव्यः ॥

विटतापसवृद्धाद्यैर्मुनिकञ्चुकिभिस्तथा ।
प्रवेशकमपीच्छन्ति सन्तः संस्कृतभाषिभिः ॥

कालोत्थापननगरव्यत्यासारम्भकामविषयाणाम् ।
अर्थाभिधानभूतः प्रवेशकः स्यादनेकार्थः ॥

दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम् ॥

बह्वा[3]श्रयमप्यर्थं प्रवेशकैः संक्षिपेत्प्रबन्धेषु ।
अङ्केषु स प्रयुक्तो जनयति खेदं प्रयोगबन्धस्य ॥

यत्रा[4]र्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् ।
वृत्तान्तः स्वल्पकथः प्रवेशकैस्संविधातव्यः ॥

बहुचूर्णपदो भेदो[5] जनयति खेदं प्रयोगस्य ।
परिमितवागात्मकता[6] प्रवेशकस्योच्यते सद्भिः ॥

युद्धं राज्यभ्रंशं मरणं नगरोपरोधनञ्चैव ।
अप्रत्यक्षकृतानि प्रवेशकैः संविधेयानि ॥

1 B तेनो । 2 C Omits युक्ति । 3 A त्वं वा । 4 A B धन्या । 5 A B पेतं ।
6 C गर्यतया ।

अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटकं वाऽपि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः ॥

इत्थं प्रवेशविष्कम्भौ भरतेन प्रदर्शितौ ।
सदृशा[1]भ्यां प्रयोज्यः स्यादङ्कसन्धौ प्रवेशकः ॥

प्रवेशकस्य पाठ्यं[2] यत्तन्नातिप्रचुरं भवेत् ।
संक्षेपार्थस्तु बहुलं प्रेक्षकौत्सुक्यहेतवे ॥

संक्षिप्तसिन्धुराणमत्स्य[3]घटोत्कचवधो यथा ।
अवस्थां कालमालोच्य कार्यस्य गुरुलाघवे ॥

प्रवेशकादिकृत्यं यत्तदङ्केषु विधीयते ।
कार्यं प्रवेशकेनात्र वर्षादूर्ध्वं न किञ्चन ॥

प्रवेशकेन न वधो नायकस्य कदाचन ।
विधेयः कार्यमङ्के(न्ते)ऽत्र सन्धिर्वाऽप्यपसारणम् ॥

यथा विभीषणेनात्र सन्धिरुल्कामुखस्य च ।
दीर्घजि[4]ह्वस्य मारीचवञ्चिते नाटके कृतः ॥

नायिका च वसागन्धा नायको रुधिरप्रियः ।
तयोरिहाश्वत्थामाङ्के दृष्टं तदपसारणम् ॥

अन्तर्यवनिकासंस्थैः सूचनाऽर्थस्य चूलिका[5] ।
अन्तर्यवनिकासंस्थैः सूतमागधबन्दिभिः ॥

अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका ।
एकैकानि शिरांसीति पद्मा[6]दौ सा च दृश्यते ॥

पूर्वाङ्कान्तप्रविष्टैर्यदुत्तराङ्कार्थसूचनम् ।
पूर्वाङ्कार्थानुवृत्त्यर्थं तदङ्कास्यमुदीरितम् ॥

1 B सादृश्या । 2 A ठ्यं । 3 B जस्य । 4 C विद्युज्जि । 5 C चूलिकाऽर्थस्य सूचना । 6 AB क्ष ।

अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कार्थस्य सूचनम् ।
यथा हि वीरचरिते द्वितीयेऽङ्केऽवसानके ॥

रामभार्गवयोर्मध्ये[1] सुमन्त्रेण प्रविश्य च ।
विश्वामित्रवसिष्ठौ च तदाह्वानेन सूचितौ ॥

रामयोस्त[2]त्र कलहाविच्छेदेनैव तौ पुनः ।
तृतीयाङ्कप्रवेशेन सुमन्त्रेणैव सूचितौ ॥

सूत्रणं[3] सकलाङ्कानां ज्ञेयमङ्कमुखं बुधैः ।
यथा 'सौदामिनी दाणिं धारेइ सिरिपव्वदे' ॥

अवलोकितया पृष्टकामन्दक्युत्तरेण च ।
समासतः श्मशानादिकृतं सर्वाङ्कसूत्रणम् ॥

अत्र[4] मुखं विश्लिष्टं यथोपरि श्लिष्यते त्रिधा[5] वाक्यैः ।
पुरुषस्य वै तदङ्कं मुखमिति सन्तो ह्युपदिशन्ति ॥

अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः ।
पूर्वाङ्कस्यावसानोक्तकथाऽविच्छेदपूर्वकम् ॥

प्रवेशो भाविनोऽङ्कस्य सोऽङ्कावतर इष्यते ॥
समाप्यमान एकस्मिन्नितराङ्कस्य सूचनम् ।

समासतो हि नाट्यज्ञैरङ्कावतर इष्यते ।
यथा मालविकायाश्च प्रथमाङ्कावसानके ॥

विदूषकप्रवेशादिनिष्क्रामान्तं यदुच्यते ।
पात्रकृत्यं द्वितीयेऽङ्के तत्सङ्गीतकमाततः ॥

आरभ्य गणदासादेरविच्छेदेन कल्पितः ।
अङ्कावतारो विष्कम्भाद्यनन्तरित एव सः ॥

---

1 C ताटकयोर्युद्धे । 2 C रामाय त । 3 BC त्रिणां । 4 B ङ्क । 5 AC omit त्रिधा ।

समाप्यमाने पूर्वाङ्के यथा गौरीगृहाभिधे ।
भाव्यङ्कनायकावस्थासूचनं तद्विलोक्यताम् ॥

एतेष्वङ्कबहिर्भावः स्याद्विष्कम्भप्रवेशयोः ।
चूलिकायाः क्वचिद्बाह्ये क्वचिन्मध्ये निवेशनम् ॥

[1]एभिस्तु सूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ।
मध्ये च वेणीसंहारे दृश्यते चूलिका तथा ॥

इयमङ्कादिबा[2]ह्याङ्कमुखगर्भाङ्कसाम्यतः ।
कथाऽविच्छेदहेतोस्तु चूलिका भोजकल्पिता ॥

गर्भाङ्काङ्कमुखाभ्यामबहिष्काभ्यां स्वभावतस्त्वङ्कात् ।
इतिवृत्ताविच्छे[3]दे हेतुतया चूलिका कथिता ॥

अङ्कमुखं गर्भाङ्कः कार्योऽस्मिन् चूलिकाऽपि वा कुशलैः ।
माभूदितिवृत्तानां विच्छेदो विस्तरो वेति ॥

अङ्कादिबाह्यावेवाङ्कमुखाङ्कावतरौ स्वत[4]ः ।
एभिस्तु सूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत् ॥

एतद्द्वयं द्विधाभूतं[5] श्राव्यमश्राव्यमेव च ।
सर्वस्य नियतस्येति क्रमात्तद्द्वयमुच्यते ॥

सर्वैः सदस्या नियतो[6]नट इत्यभिधीयते ।
सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ॥

श्राव्यं तु नियतस्यैतन्नाट्यधर्ममवेक्ष्य च ।
द्विधा विभज्यते तत्र जनान्तमपवारितम् ॥

त्रिपताकाकरेणान्यान[7]पवार्यान्तरा कथाम् ।
अन्योन्या[8]मन्त्रणं यत्स्यात्तज्जनान्तिकमुच्यते ॥

---

1 AC omit this line । 2 A B दपा । 3 A दस्य च । 4 A अङ्कादपाद्य नैवा ङ्कमुखाङ्कापन्तशाश्वतः । C वितरौःस्वतः । 5 A ता B य । 6 A B यांता । 7 A न्यम । 8 A B न्योना ।

रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् ।
वस्तुनिर्वाहकत्वाच्च नाट्यधर्मप्रसङ्गतः ॥

आकाशभाषितं तत्किं ब्रवीषीति ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकः तत्स्यादाकाशभाषितम् ॥

इत्याद्यशेषमिह वस्तुविशेष[1]जातं
रामायणादि च वि[2]भाव्य बृहत्कथाञ्च ।
आसूत्रयेत्तदनु नेतृरसानुगुण्यात्
चित्रां कथामुचितचारुवचःप्रपञ्चः[3] ॥

न केवलं रसो नैव[4] लक्ष्यं नैव च लक्षणम् ।
न नायकस्यैवोत्कर्षो वर्ण्यः[5] सुकविना क्वचित् ॥

कथाशरीरं सर्वेषामानुगुण्येन कल्पयेत् ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने नाट्येतिवृत्त-
शरीरलक्षणा[6]भिधानं नाम सप्तमोऽधिकारः ।

---

1 A भेद । 2 A परि । 3 B बन्धः । 4 A रसानेव । 5 A ज्यः । 6 A B धुरीणलक्षणा ।

॥ श्रीः ॥

# अथाष्टमोऽधिकारः ।

कथाशरीरं काव्यस्य लक्षणश्चोपपादितम् ।
भरतादिभिराचार्यैर्दर्शितेनैव वर्त्मना ॥

प्राथम्यान्नाटकस्यास्य तत्सम्यगभिधीयते ।
नाटकं सप्रकरणं[1] भाणः प्रहसनं डिमः ॥

व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इति ।
तोटकं नाटिका गोष्ठी सल्लापः शिल्पकन्तथा ॥

डोम्बी श्रीगदितं भाणी प्रस्थानं काव्यमेव च ।
प्रेक्षकं सट्टकं नाट्यरासकं लासकं तथा ॥

उल्लोप्य[2]कञ्च हल्लीसमथ दु[3]र्मल्लिकाऽपि च ।
मल्लिका कल्पवल्ली च पारिजातकमित्यपि ॥

रसात्मका दशैतेषु विंशद्भावात्मका मताः ।
तेषां रूपक[4]संज्ञाऽपि प्रायो दृश्यतया क्वचित् ॥

त्रिंशद्रू[5]पकभेदाश्च प्रकाश्यन्तेऽत्र लक्षणैः ।
प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् ॥

सम्पूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ।
स्वेतरेषां प्राकृतानां नाटकस्योक्तधर्मतः ॥

---

1 A च प्रहसनम् । 2 A च्य । 3 A मत्त । । 4 B स्वरूपं । 5 A एते रू ।

अतिदेशक्रमात्स्वाङ्गसमर्पकतयोच्यते ।
विकासविस्तरक्षोभविक्षेपात्मकतो[1]दितैः ॥

चेतोविकारैरङ्गाङ्गिभूताष्टरसयोगतः ।
रसाश्रयत्वं सम्पूर्णलक्षणत्वञ्च कथ्यते ॥

अर्थप्रकृत्यवस्थात्मसन्धिसन्ध्यङ्गवृत्तिमत् ।
अर्थोपक्षेपकैर्युक्तं पताकास्थानकादिभिः ।
रसालङ्कारसहितं नाटकं पूर्णलक्षणम् ॥

पञ्च पञ्च चतुष्षष्टिश्चतुःपञ्चैकविंशतिः ।
षट्त्रिंशन्नवतिर्य[2]त्र तदाहुर्नाटकं बुधाः ॥

अर्थप्रकृतयोऽवस्थाः पञ्च पञ्चेति कीर्तिताः ।
अङ्गानि वृत्तयस्तत्र सन्धिसन्ध्यन्तराणि च ॥

चतुष्षष्टिश्चतुः पञ्च सैकविंशतिभिः क्रमात् ।
सङ्गीताङ्गा[3]नि नवतिः षट्त्रिंशद्भूषणानि च ॥

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न योगोऽसौ नाटके यन्न दृश्यते ॥

अपि सिध्येत विदुषां मुक्तिरभ्यासकौशलात् ।
नतु नाटकाविद्येयं सर्वलोकानुरञ्जनी ॥

नृपतीनां यच्चरितं नानारसभावचेष्टितैर्बहुधा ।
सुखदुःखोत्पत्तिकृतं विज्ञेयं नाटकं नाम ॥

रत्नावल्यादिषु प्रायश्चरितं रसभावयुक् ॥

सुखं मलयवत्याश्च दुःखं गरुडचञ्चुना[4] ।
जीमूतवाहनस्यैतन्नागानन्दे विभाव्यते ॥

1 A तयो । 2 B तांत्र । 3 C तका । 4 A वञ्चनात् ।

नाटके च प्रकरणे पञ्चाद्या[1]दश कीर्तिताः ।
अङ्काः स्युस्तत्र पञ्चाङ्कमेतन्मारीचवञ्चितम् ॥

षडङ्कं नाटकमिदं वेणीसंहारनामकम् ।
शाकुन्तलादि सप्ताङ्कमष्टाङ्कं नलविक्रमम् ॥

देवीपरिणयस्तत्र नवाङ्कं नाटकं स्मृतम् ।
दशाङ्कं नाटकमिदं बालरामायणादिकम् ॥

कुन्दमालाऽत्र सुश्लिष्टा सन्धिपञ्चकसंयुता ।
तथाच वेणीसंहारः षट्त्रिंशद्भूषणोज्ज्वलः ॥

देवीपरिणयः सर्ववृत्तिनिष्पन्न उच्यते ।
प्रवेशकादिनिष्पत्तिर्नागानन्दे प्रदर्शिता ॥

नयातिशयदाक्षिण्यसिद्ध्यभिप्रायगर्हणाः ।
उपदि[2]ष्टञ्च माला च सार्थापत्तिश्च सम्भ्रमः ॥

पश्चात्तापः प्रसिद्धिश्च हेतुदृष्टान्तसंशयाः ।
गुणातिपात आक्रन्दो[3] विचारः प्राप्तिरेव च ॥

विशेषणं निरुक्तिश्च कपटञ्च मनोरथः ।
याञ्चा निदर्शनं चाशीरभिमानः स्पृहाऽपि च ॥

पृच्छाऽभिज्ञानमुद्दिष्टं शोभोदाहरणे तथा ।
नीतिरक्षरसङ्घातः क्षोभश्चार्थविशेषणम् ॥

प्रोत्साहनं गुणाख्यानं गुणोक्तिश्च निवेदनम् ।
गुणानुवादोपपत्तिपरिवादोद्यमा अपि ॥

अनुक्तसिद्धिः कार्यं[4] च परिहारस्तथाश्रयः ।
उ[5]क्तिर्देशोऽनुवृत्तिश्च प्रहर्षश्च क्षमेति च ॥

1 A श्च वा । 2 B वि । 3 B क्रुष्टो । 4 B र्व्यं । 5 D यु ।

चतुष्षष्टि(?)रलङ्काराः कथिता नाट[1]काश्रयाः ।
यूनोः प्रियकरो[2]योऽर्थः स नयः कथ्यते बुधैः ॥

विशेषकीर्तनं यत्स्यादर्थे सोऽतिशयः स्मृतः ।
चित्तानुवृत्तिर्दाक्षिण्यं सिद्धिरिष्टार्थसङ्गमः ॥

स्वाद्येष्वर्थेष्वहंमानः सोऽभिप्राय इतीरितः ।
कुत्सैव[3] गर्हणेत्युक्ता क्रोधान्मानाच्च मत्सरात् ॥

लोकवेदमताख्यानमुपदिष्टमुदाहृतम् ।
गुणाभिधानं माला स्यादर्थानामिष्ट[4]सिद्धये ॥

अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसंयुक्ता सार्थापत्तिरिति स्मृता ॥

वचनव्यवहारेषु स्खलनं यस्स सम्भ्रमः ।
अनुतापो गतार्थस्य पश्चात्ताप इतीरितः ॥

प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसादनम् ।
पक्षप्रसाधको हेतुः दृष्टान्तः साम्यकीर्तनम् ॥

अनिश्चयेन वाक्यस्य समाप्तिः संशयः स्मृतः ।
गुणातिपातो व्यत्यस्तगुणाख्यानमुदाहृतम् ॥

आक्रन्दोऽभीष्टविषयः शोकालाप उदाहृतः ।
यथोचितमुपन्यासो विचारः परिकीर्तितः ॥

एकदेशाद्[5]शेषस्य ज्ञानं प्राप्तिरुदाहृता ।
सिद्धार्थहेतूपन्यासविशेषोक्तिर्विशेषणम् ॥

निरुक्तिर्निरवद्योक्तिः पूर्वोक्तार्थप्रसिद्धये ।
उक्तार्थस्यापलपो यः कपटं तदुदाहृतम् ॥

---

1 B य। 2 A ङ्करो। 3 B तत्सर्वं। 4 C मर्थ। 5 C ति।

मनोरथोऽन्यापदेशैः स्वाभिप्रायस्य सूचनम्।
याञ्चेति कथ्यतेऽभीष्टसङ्गमप्रार्थनोभयोः॥

निदर्शनं तत्समानवस्तुरूपस्य कीर्तनम्।
आशीरभीष्टविषयस्वायुराद्यर्थवर्धनम्॥

अङ्गीकारोऽभिमानः स्यादर्थे हर्षादिभिः कृतः।
रमणीयार्थविषयो रागो यः सा स्पृहा मता॥

अन्वेषणन्तु[1] पृच्छा स्यादभिज्ञानं तु सूचनम्।
उद्दिष्टमर्थनिर्देशः पारोक्ष्याच्चापरोक्ष्यतः॥

स्वप्रभाव[2]प्रकटनं शोभेति परिकीर्त्यते।
दृढ[3]तुल्यार्थकृद्वाक्यमुदाहरणमुच्यते॥

न्यायानुवर्तनं नीतिः लोकशास्त्रा[4]विरोधतः।
स एवाक्षरसङ्घातो वाक्यं श्लिष्टाक्षरश्च यत्॥

आत्मन्यभूतत[5]द्भावभावनं क्षोभ ईरितः।
विशि[6]ष्टार्थप्रमाकृद्यद्वाक्यमर्थविशेषणम्॥

त्वरानिवेदनं यत्तु तत्प्रोत्साहनमुच्यते।
आख्यानं स्याद्गुणाख्यानं[7] गुणोक्तिर्गुणकीर्तनम्॥

समावस्थानकथनं निवेदनमुदाहृतम्।
गुणानुवादो यूनोर्यद्भूयो भूयो गुणस्तुतिः॥

उपपत्तिः स्वबुद्ध्याऽर्थे योग्यताधानमुच्यते।
अपवादो मृषादोषस्तूत्साहस्तूद्यमो भवेत्॥

अनुक्तसिद्धिरुक्तार्थस्यान्यथासिद्धिरुच्यते।
प्रयोजनाभिधानं यत्कार्यमित्यभिधीयते॥

---

1 A णा हि। 2 A प्रभावस्य। C स्वप्रकार। 3 C प्रन्थ। 4 B स्त्रवि। 5 B C द्भुतस। 6 B C ष्लि। 7 A णकथा। C कथाख्यानं।

परिहारः प्रतीतस्य कस्याप्यर्थस्य मार्जनम् ।
भीताभयप्रदानं यत्स आश्रय इतीरितः ॥

उक्तिस्तत्त्वाभिधानं स्यात्स्तोतुन्निन्दितुमेव[1] च ।
दे[2]शः स्याल्लिङ्गिनो ज्ञाना[3]भिधानमिति कथ्यते ॥

अभ्यर्थनानुवृत्तिर्या साऽनुवृत्तिरुदाहृता ।
सन्तोषोक्तिः प्रहर्षः स्यादनर्थाच्छादनं क्षमा ॥

ईदृग्लक्षणसंयुक्तं नाटकं सुप्रयोजितम्[4] ।
प्रेक्षकस्य नटस्यापि प्राश्निकस्य कवेरपि ॥

स्याद्भुक्तये मुक्तये च तेषां लक्षणमुच्यते ।
यशो[5]धर्मरतः शान्तः श्रुताभिजनवृत्तवान् ॥

षडङ्गनाट्यकुशलः चतुरातोद्यविच्छुचिः ।
चतुरोऽभिनयज्ञश्च रसभावविवेचकः ॥

नैपथ्यदेशभाषाज्ञः कलाशिल्पविचक्षणः ।
शब्दच्छन्दोऽभिधानज्ञः सर्वसिद्धान्ततत्त्ववित् ॥

त्यक्तमत्सरदोषश्च स नाट्ये प्रेक्षकः स्मृतः ।
एभिर्गुणैरुपेतश्च प्रयोगे वीतसाध्व[6]सः ॥

इङ्गिताकारचेष्टाज्ञो नानाप्रकृतिशीलवित्[7] ।
शिल्पविन्नायकादीनां तादात्म्यापत्तिभावकः ॥

चित्रविचि[8]त्रवर्णज्ञः तत्सङ्करविभागवित् ।
ईदृग्गुणविशिष्टस्तु नटो नाट्ये प्रशस्यते ॥

नटप्रेक्षकयोरुक्तगुणैरेतैर्विभूषितः ।
यज्ञविन्नर्तकश्चैव छन्दोविच्छन्द[9]विन्नृपः ॥

---

1 A तुर्निन्दितुरे । 2 A ले । 3 A दिङ्गितज्ञाता । 4 C सप्रयोजनम् । 5 A तो । 6 C ह । 7 C वान् । 8 C विचित्तचि । 9 A चिति । Bc च्छन्द ।

इष्टार्थे[1]श्चित्रकृद्वेश्या[2] गान्धर्वो राजसेवकः ।
समुत्पन्ने च सङ्घर्षे प्राश्निकास्ते भवन्ति हि ॥

यज्ञविद्दे[3]वतायोगे नर्तकोऽभिनयादिषु[4] ।
छन्दोविद्वृत्तबन्धेषु शब्दवित्पाठ्यविस्तरे ॥

विभूतिगु[5]णसम्भोगवीर्या[6]न्तःपुरचेष्टिते ।
नपः स्वचरितेषु स्यादिष्टार्थस्संस्तवे सदा[7] ॥

प्रमाणाकृतिचेष्टासु नानालङ्कारयोजने ।
नाट्यनैपथ्ययोगेषु चित्रकृत्तु प्रशस्यते ॥

कामोपचारे वेश्या तु गा[8]न्धर्वः स्वरतालयोः ।
सेवको विनयाचारे त एते प्राश्निका मताः ॥

नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्[9] ।
यद्यत्स्व[10]शिल्पं नैपथ्यं कर्म वा चेष्टितं वचः ॥

तत्तन्नाट्येन साध्यं यत्स्वकर्मविषये स्थितम्[11] ।
कामुकैश्च विदग्धैश्च श्रेष्ठिभिश्च विरागिभिः ॥

शूरैर्ज्ञानवयोवृद्धै रसभावविवेचकैः ।
बालमूर्खाबलाभिश्च सेव्यं यन्नाट्यमुच्यते ॥

तत्तदर्थेषु तेषान्तु यस्मादेतत्प्रहर्षणम् ।
तुष्यन्ति तरुणाः कामे विदग्धाः समयाश्रिते ॥

अर्थेष्वर्थपरा[12]श्चैव मोक्षेत्वथ विरागिणः ।
शूरा बीभत्सरौद्रेषु नियुद्धेष्वाहवेषु च ॥

धर्माख्यानपुराणेषु वृद्धास्तुष्यन्ति नित्यशः ।
सत्त्वभावेषु सर्वेषु बुधा[13]स्तुष्यन्ति सर्वदा ॥

---

1 A B ष्वास । 2 A द्वैयो । 3 A ज्ञोपदे । B D ज्ञे च । 4 C यक्रमे । 5 C र्गु । 6 A ष्याना । 7 A B ष्वासस्संस्तवे सदा । C ष्ठा सत्सौष्ठवे तदा । 8 A ग । 9 A B कीर्तितम् । 10 B स्य । 11 A योत्थितम् । 12 A B D अर्थिनः श्रेष्ठिन । 13 B वृद्धा C बद्धा ।

बाला मूर्खास्स्त्रियश्चैव हास्यनैपथ्ययोः सदा ।
यस्तुष्टौ तुष्टिमायाति शोके शोकमुपैति च ॥

क्रुद्धः क्रोधे भये भीरुः स श्रेष्ठः प्रेक्षकः स्मृतः ।
तदीदृङ्नाट[1]कारम्भप्रकारोऽत्र प्रदर्श्यते ॥

प्रयुज्य[2] रङ्गं निष्क्रामेत्सूत्रधारः सहानुगः ।
स्थाप[3]कः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ॥

दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥

प्रीतिर्नाम सदस्यानामित्यादेर्वस्तु सूच्यते ।
बीजन्तु वेणीसंहारे सत्पक्षा इति दर्शितम् ॥

रत्नावल्यां मुखं द्वीपादन्यस्मादपि दर्शितम् ।
तवास्मि गीतरागेति पात्रं शाकुन्तले कृतम् ॥

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥

श्लोकश्च भारतीवृत्त्या सत्पक्षेत्यादिनोच्यते ।
भारती संस्कृतप्रायो वाग्व्यापारो नटा[4]श्रयः ॥

या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥

साङ्गैः प्ररोचनायुक्तैः वीथीप्रहसनामुखैः ।
प्रेक्षकाद्युन्मुखीकारः प्रस्तुतार्थ[5]प्रशंसया ॥

प्ररोचना सा श्रीहर्षो निपुणेत्यादिनोच्यते ।
प्रस्तुतिस्त्वीदृगर्थस्य या सा प्रस्तावना स्मृता ॥

1 C वृत्तनाटक । 2 A विश्य । 3 B स्ताव । 4 B नरा । C रसा । 5 A कविमुख्य ।

मद्वर्ग्या रसपाठेति पद्ये प्रस्तावनोच्यते ।
सूत्रधारो नटीयुक्तो वस्तु प्रस्तावनावधि ॥

कुरुते यत्र सद्वृत्तैस्तदामुखमुदाहृतम् ।
सूत्रधारो नटी ब्रूते मारिषं वा विदूषकम् ॥

स्वकार्यप्रस्तुताक्षेपिचित्रोक्त्या यत्तदामुखम् ।
नटी विदूषको वापि पारिपार्श्विक एव वा ॥

सूत्रधारेण सहिताः सल्लापं यत्र कुर्वते ।
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ॥

आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनाऽपि वा ।
प्रवृत्तककथोद्धातप्रयोगातिशयैस्तथा ॥

वीथ्यङ्गैः षोडशैतेषां योगः प्रस्तावनोच्यते ।
प्रवेशो यो वसन्तादिसाम्येन स्यात्प्रवृत्तकम् ॥

सत्पक्षेत्यादिना श्लोकेनायमर्थो यदीरितः ।
स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः ॥

गृहीत्वा प्रविशेत्पात्रं कथोद्धातो द्विधोच्यते ।
द्वीपादित्यादिवाक्येन यथा यौगन्धरायणः ॥

अर्थः क्रूरग्रहेत्यादि मुद्राराक्षसकल्पितः ।
आकर्ण्य चाणक्यपात्रप्रवेश उपलक्ष्यते ॥

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः ।
पात्रप्रवेशो[1] यत्रैष प्रयोगातिशयो मतः ॥

एष राजेव[2] दुष्यन्तेत्यादिना स प्रतीयते ।
प्रवृत्तककथोद्धातप्रयोगातिशयत्रिके[3] ॥

1 A योगो। 2 B C ति। 3 A याश्रिते।

भीमचाणक्यदुष्यन्तप्रवेशैर्लक्ष्यते क्रमात् ।
अथात्रैतानि[1] कथ्यन्ते वीथ्यङ्गानि त्रयोदश ॥

उद्धात्यकावलगिते प्रपञ्चत्रिगते छलम् ।
वाक्केल्यधिवले गण्डमवस्यन्दितनालिके ॥

असत्प्रलापव्याहारमृदवानि त्रयोदश ।
गूढार्थ[2]पदपर्यायमाला प्रश्नोत्तरस्य वा ॥

यत्रान्योन्यसमालापो द्वेधोद्धात्यन्तदुच्यते ।
अन्योन्यालापरूपैका स्यात्प्रश्नोत्तरमालिका ॥

गूढार्थपदपर्यायमूलैकालापयोर्द्वयोः ।
यथा हि पाण्डवानन्दे सा प्रश्नोत्तरमालिका ॥

"का भूषा बलिनां क्षमा परिभवः कोऽयं[4]स्वकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥"

अथ विक्रमोर्वशीये राज्ञो विदूषकस्य सल्लापे ।
कामपदार्थप्रश्नाद्गू[5]ढार्थो लक्ष्यते नितराम् ॥

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वाऽन्यत्स्यात्तच्चावलगितं द्विधा ॥

प्रस्तुतार्थसमावेशादन्यकार्यस्य साधनम् ।
[6]कार्या सैकतलीनेति (?) प्रस्तुतार्थोपदेशतः ॥

सीतात्यागपरीवादादन्यकार्यस्य साधनम् ।
अप्रस्तुतसमावेशादन्यकार्यस्य साधनम् ॥

---

1 A त्रयाणि। 2 A ढोत्थ। 3 A वा। 4 कः स्यात्स । 5 A B मात्प्रश्नोत्थार्थे।
6 A omits seven lines ।

तवास्मि गीतरागेणेत्यादौ तत्तु विलोक्यते।
अत्राप्रस्तुतदुष्यन्तमृगयाव्याजतोऽन्यतः॥

प्रवेक्ष्यमाणपात्रस्य सूचनं तन्निवेशनम्।
प्रस्तुतार्थसमावेशादेकमन्यार्थसाधनम्॥

अन्यदप्रस्तुतार्थस्य प्रवेशेनान्य[1]साधनम्।
असद्भूतं मिथः स्तोत्रं प्रपञ्चो हास्यकृन्मतः॥

प्रपञ्चस्य स्वरूपन्तु नागानन्दे विभाव्यते।

"निच्चं जो पिबइ सुरं जणस्स पिअसंगमञ्च जो कुणइ।
मण्णे दो अवि देवा बलदेवो कामदेवो अ॥"

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह॥

नटादित्रितयालापः पूर्वरङ्गे तदिष्यते।
एतत्प्रस्तावनात्मेति कथ्यते नाट्यवेदिभिः॥

त्रिगतं त्वि[2]न्दुलेखायां वीथ्यां राज्ञाऽभिधीयते।

"किन्तु कलहंसनादो मधुरो मधुपायिनां नु झङ्कारः।
हृदयगतवेदना[3]यास्तस्या नु सनूपुरश्चरणः॥"

प्रियैरिवाप्रियैर्वाक्यैर्विलोभ्य छलना छलम्॥

छलं च वेणीसंहारे भीमार्जुनवचो यथा।

"कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुश्शासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः॥"

विनिवृत्त्याऽस्य[4] वाक्केलिर्द्विस्त्रिः प्रत्युक्तितोऽपि वा॥

1 B C शोन्यस्य। 2 C वि। D चिर। 3. A देवताया। 4 B त्ता स्व।

वाक्यापरिसमाप्तिर्वा स्याच्छलार्थाभिधायिनः ।
अनर्घराघवे सूत्रिपारिपार्श्विकयोर्यथा ॥

प्रत्युक्ति[1]रूपा वाक्केलिः सर्वत्रैवं विलोक्यताम् ।
प्रक्रान्तवाक्यासमाप्तिमात्ररूपा क्वचिद्भवेत् ॥

सकुण्डलं सकवचमित्यादौ सा विलोक्यते ।
छलवाक्यासमाप्तिर्या सा भवेद्विनिवर्तने ॥

त्वं जीवितं चेत्यारभ्य रामं प्रति समीरितम् ।
वासन्तिकावचः शान्तमित्यप्रियनिवर्तनम् ॥

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाऽधिबलं[2] भवेत् ।
रामरावणयोरुक्तिः स्याद्दशग्रीवनिग्रहे ॥

गण्डं प्रस्तुतसम्बधि भिन्नार्थं सहसोदितम् ।
सहभृत्यगणेत्यादिवाक्ये तत्तु विलोक्यते ॥

यथा स्वविजयोक्तिश्च पाण्डुपुत्रजयोक्तिकृत् ।
यथोक्तस्यान्यथाव्याख्या यत्रावस्यन्दितं हि तत् ॥

गृहीतचित्रफलकं राजानमवलोक्य च ।
सुसङ्गतासागरिकासल्लापे तद्विलोक्यते ॥

सोपहासनिगूढार्थो नालिकैव प्रहेलिका ।
विलोक्यते नालिकेयं मुद्राराक्षसनाटके ॥

'हंहो ब्रह्मण मा कुप्य'त्यारभ्य प्रश्नयुक्तिभिः ।
अपरक्तांश्चन्द्रगुप्ताज्जानामीत्यन्तमुच्यते ॥

असम्बद्धकथालापोऽसत्प्रलाप इतीरितः ।

मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् ।
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥

यथा हि रामाभ्युदये सीतापहरणोद्यतः ॥

1 B त्यक्ष । 2 A शिथिलं ।

मारीचेन सहायेन निषिद्धो रावणः क्रुधा ।
प्रालपद्विपरीतं यदसल्लापः स उच्यते ॥

भुक्ता मया हि गिरयः स्नातोऽहं वह्निना पिबामि नभः ।
हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्यामि ॥

असम्बद्धकथालापोऽसत्प्रलापोऽत्र दृश्यते ।
अन्यार्थमेव व्याहारो हास्यलोभकरं वचः ॥

मालव्यां गन्तुमिच्छन्त्यां गणदासविदूषकौ ।
यत्र सल्लपतस्तस्या हास्यलोभकरं वचः ॥

यावद्वीक्षेत राजानं व्यापारस्तत्र दृश्यते ।
दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥

यथा हि नायकानन्दे गुणा दोषाय कीर्तिताः ।
कस्मैचित्कपटायेति लक्ष्मीमुद्दिश्य केनचित् ॥

यथा शाकुन्तले दोषा गुणाय परिकीर्तिताः ।
मेदश्छेदकृशेत्यादिमृगयागुणकीर्तनैः ॥

तेषामन्यतमेनार्थं पात्रं वाऽऽक्षिप्य सूत्रभृत् ।
प्रस्तावनाऽन्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥

प्रख्यातन्तु विधातव्यं वृत्तमत्राधिकारिकम् ।
अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान् ॥

कीर्तिकामो महोत्साहः त्रय्यास्त्राता महीपतिः ।
प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः ॥

तत्प्रयत्नेन कर्तव्यमितिहासादिवृत्ततः ।
यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ॥

विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ।
उपादेयश्च हेयश्च निश्चित्यात्यन्तमग्रतः ॥

प्रकाशयेदुपादेयं तिरस्कु[1]र्यात्तथेतरत् ।
कथाशरीरं विभजेद्बीजबिन्द्वादिपञ्चधा ॥

मुखादिपञ्चभिः सा[2]ङ्गैर्नियतं तत्तदा[3]ख्यया ।
पताकावृत्तमप्यूनमेकाद्यैरनुसन्धि[4]भिः ॥

सन्ध्यन्तराणि साङ्गानि भवेयुरनुसन्धयः ।
सन्ध्यङ्गैरूनमेवात्र पताकावृत्तमावहेत् ॥

ततः सन्ध्यन्तराण्यत्र यथायोगं प्रयोजयेत् ।
असन्धिमेव प्रकरीं सर्वत्रापि प्रयोजयेत् ॥

एवं विभक्तेतिवृत्तस्यादौ विष्कम्भकं न्यसेत् ।
अङ्कं वा विन्यसेद्विद्वान्यथावत्कार्ययुक्तितः ॥

प्रस्तावनाया मध्यं यन्नाटकोपक्रमात्मकम् ।
तदेवात्रादिशब्देन विष्कम्भस्थानमीरितम् ॥

नीरसं सूच्यते यत्र तत्र विष्कम्भकं न्यसेत् ।
यत्रादितो रसस्तत्र भवेदङ्कस्तु सामुखः ॥

अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् ।
यदा सन्दर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः ॥

पूर्ववृत्ताश्रयमपि किञ्चिदुत्पाद्यवस्तु च[5] ।
विधेयं नाटकमिति मातृगुप्तेन भाषितम् ॥

---

1 B निराकु । 2 B स्वा । 3 A वर्तना । 4 D बन्दि । 5 A मेव वा । B मेव च ।

प्रागेव सीताहरणाद्यद्धि भीषणवर्णनम्।
तद्वस्तूत्पाद्यमेतत्तु रामानन्दे प्रदृश्यते॥

प्रत्यक्षनेतृचरितो बिन्दु[1]व्याप्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥

निर्दिष्टनेतृचरितो नानारूपप्रयोजकः।
अलङ्काररसाधारो यः सोऽङ्क इति कथ्यते॥

नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम्।
नैकरसान्तरसहितो ह्यङ्कः खलु वेदितव्यः सः॥

अङ्क इति रूढिशब्दो भावैश्च रसैः प्र[2]रोहयत्यर्थान्।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः॥

अङ्कः प्रबन्धचिह्नत्वाद्र[3]सस्याश्रयतोऽपि वा॥

यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदाऽवगन्तव्यम्॥

अङ्काश्रयस्य कर्तव्यो रसस्य स्थायिनोऽङ्गिनः।
पोषो विभावानुभावसात्त्विकव्यभिचारिभिः॥

अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः।
गृहीतमुक्तैः कर्तव्यमङ्गिनः[4] परिपोषणम्॥

अत्र वस्तुरसादीनामेकस्याभिनिवेशिनः[5]।
इतरेणोपमर्दस्तु न कर्तव्यः कदाचन॥

न चातिरसतो वस्तु दूरविच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः॥

नोपमादिरलङ्कारो न स्यादतिशयादिकः॥

---

1 A बीज। 2 A B रू। 3 A प्रबन्धचिह्नत्वादङ्को। 4 B व्यं स्थायि। 5 B शनम्।

क्षमागुणवदाक्रन्दशोभोदाहरणादयः ।
अलङ्काराः स्युरङ्कस्य ते स्युर्नाटककाव्ययोः ॥

वीरश्शृङ्गारयोरेकः प्रधानोऽङ्गी च नाटके ।
अङ्गमन्ये[1]ऽद्भुतरसः सन्धौ निर्वहणे भवेत् ॥

एवं नानाविधरसभावाधिकरणे कविः ।
अङ्के निषिद्धं[2] विज्ञाय विधेयञ्च प्रयोजयेत् ॥

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ॥

अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।
नाधिकारिवधः क्वापि कर्तव्यः कविभिस्तथा ॥

आवश्यकं तु यत्कार्यं न त्याज्यं तत्कदाचन ।
अधिकारिवधस्यापि क्वचित्स्यात्कल्पनं मतम् ॥

अर्वाक्प्रहा[3]रात्स पुनः प्रत्युज्जीविष्यते यदि ।
नायकस्य यदेकाहचरितप्रतिपादकः ॥

एकप्रयोजनाश्लिष्टस्तत्रैवासन्ननायकः ।
विदूषकादिभिः पात्रैः प्रयोज्यश्च चतुस्त्रिभिः ॥

समस्तपात्रनिष्क्रामावसानोऽङ्कोऽभिधीयते ।
पताकास्थानकान्यत्र बिन्दुरन्ते च बीजवत् ॥

प्रयुज्यते यदि भवेत्तत्राङ्क इति कोहलः ।
एवमङ्काः प्रयोक्तव्याः प्रवेशादिपुरस्कृताः ॥

प्रधानभूतावङ्केऽस्मिन्विष्कम्भश्च प्रवेशकः ।
नायकैकाहचरितरूप आसन्ननायकः ॥

1 A B अङ्कमध्ये । 2 A षेध्यं । 3 A ह्व ।

रसादिनिबिडो बीजबिन्दुव्याप्तिपुरस्कृतः ।
पात्रैश्च नायकासन्नैः प्रयोज्यश्च चतुस्त्रिभिः ॥

पताकास्थानकस्फीतो विष्कम्भादिपुरस्कृतः ।
समस्तपात्रनिष्कामावसानोऽङ्क इतीरितः ॥

पञ्चाङ्कमेतेदप[1]रं दशाङ्कं नाटकं परम् ।
वीरशृङ्गारयोरन्यतराङ्गि रसनिर्भरम् ॥

शोभितं चाप्यलङ्कारैरुपमारूपकादिभिः ।
रामायणेतिहासादिसुप्रसिद्धाधिकारिकम् ॥

दिव्यमर्त्यादिविख्यातधीरोदात्तादिनायकम् ।
अर्थोपक्षेपकैर्युक्तं षट्त्रिंशद्भूषणोज्ज्वलम् ॥

अर्थप्रकृत्यवस्थातत्सन्धिसन्ध्यन्तरान्वितम् ।
पताकास्थानकयुतं साङ्गवृत्तिप्रवृत्तिमत् ॥

अन्यूनदशपञ्चाङ्कं नान्दीप्रस्तावनायुतम् ।
यद्रूपकविशेषः स्यात्तन्नाटकमिति स्मृतम् ॥

एकाहचरितैकाङ्कः कार्यश्चैत्रावली यथा ।
अङ्कः स्याद्वासरार्धेन[2] यथा गौरीगृहाभिधः ॥

यद्विक्रमोर्वशीयाख्यं तत्पञ्चाङ्कं प्रकल्पितम् ।
षडङ्कं दृश्यते लोके रामाभ्युदयनाटकम् ॥

शाकुन्तलादिसप्ताङ्कमष्टाङ्कं नलविक्रमम् ।
देवीपरिणयस्तत्र नवाङ्कं नाटकं स्मृतम् ॥

बालरामायणं नाम दशाङ्कं नाटकं स्मृतम् ।
अतो हि नाटकस्यास्य प्राथम्यं परिकल्पितम् ॥

---

1 C व। 2 A B C र्थै।

[1]नाट्यवेदं विधायादावृषीनाह पितामहः ।
धर्मादिसाधनं नाट्यं सर्वदुःखापनोदनम् ॥

आसेवध्वं तदृषयस्तस्योत्थानं तु नाटकम् ।
दिव्यमानुषसंयोगो यत्राङ्कैरविदूषकैः ॥

तदेव तोटकं भेदो नाटकस्येति हर्षवाक् ।
[2]तदव्यापकमित्यन्ये नाद्रियन्ते विपश्चितः ॥

नवाष्टसप्तपञ्चाङ्कं दिव्यमानुषसङ्गमम् ।
तोटकं नाम तत्प्राहुर्भेदं नाटकसम्भवम् ॥

[3]इत्येक आहुराचार्या अन्ये त्वेवं प्रचक्षते ।
दिव्यमानुषसंयोगस्तोटकं नाटकानुगम् ॥

नवाङ्कं तो[4]टकं दृष्टं मेनकानहुषाह्वयम् ।
तोटकं मदलेखाऽऽख्यं यत्तत्स्तम्भितरम्भकम् ॥

क्रमादष्टाङ्कसप्ताङ्कौ दृश्येते ह्यविदूषकौ ।
यद्विक्रमोर्वशीयाख्यं पञ्चाङ्कं तोटकं स्मृतम् ॥

सुबन्धुर्ना[5]टकस्यापि लक्षणं प्राह पञ्चधा ।
पूर्णं चैव प्रशान्तं च भास्वरं ललितं तथा ॥

समग्रमिति विज्ञेया नाटके पञ्च जातयः ।
पूर्णस्य नाटकस्यास्य मुखाद्याः पञ्च सन्धयः ॥

उदाहरणमेतस्य कृत्या[6]रावणमुच्यते ।
प्रशान्तरसभूयिष्ठं प्रशान्तं नाम नाटकम् ॥

न्यासो न्याससमुद्भेदो बीजोक्तिर्बीजदर्शनम् ।
ततोऽनुदिष्टसंहारः प्रशान्ते पञ्च सन्धयः ॥

1 CD Omit this line । 2 CD Omit this line । 3 CD Omit this line । 4 B C ना । 5 B ना । D सुबन्धु नाटकस्यास्य । 6 C ता ।

सात्वतीवृत्तिरत्र स्यादिति द्रौहिणिरब्रवीत् ।
स्वप्नवासवदत्ताख्यमुदाहरणमत्र तु ॥

आच्छिद्य भूपात्सव्यसना दे[1]वी मागधिकाकरे ।
न्यस्ता यतस्ततो न्यासो मुखसन्धिरयं भवेत् ॥

न्यासस्य च प्रतिमुखं समुद्भेद उदाहृतः ।
पद्मावत्या मुखं वीक्ष्य विशेषकविभूषितम् ॥

जीवत्यंवन्तिकेत्येतज्ज्ञातं भूमिभुजा यथा ।
उत्कण्ठितेन सोद्वेगं बीजोक्तिर्नामकीर्तनम् ॥

एहि वासवदत्ते क्व क्व यासीत्यादि दृश्यते ।
सहाव[2]स्थितयोरेकप्राप्त्याऽन्यस्य गवेषणम् ॥

दर्शनस्पर्शनालापैरेतत्स्या[3]द्बीजदर्शनम् ॥

"चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तान्तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥"

किन्ते भूयः प्रियं कुर्यामितिवाग्यत्र नोच्यते ।
तमनुद्दिष्टसंहारमित्याहुर्भरतादयः ॥

माला नायकसिद्ध्यङ्गग्लानिस्तस्याः परिक्षयः[4] ।
मात्राव[5]शिष्टसंहारे भास्वरे पञ्च सन्धयः ॥

एकस्मिन्नायके ख्याते तत्सामान्यप्रतापवान्[6] ।
यदि स्यात्प्रतिपक्षश्च सा मालेति प्रकीर्तिता ॥

यथा हि चन्द्रगुप्तस्य न(च)न्दनः प्रतिपूरुषः ॥

नायकं छलयित्वेष्टसिद्धिर्या परिपन्थिनः ।
एषा नायकसिद्धिः स्यान्मारीचेनेव रावणः ॥

---

1 A व्यसनादे । B न्सम्यक्सादे । 2 A सभाव । B स्वभाव । 3 BC D नैरेतत्तस्य स्या । 4 B यात् । 5 B वि । 6 A न्यं द्रुतापहन् ।

गर्भस्याङ्गै[1]र्विमर्दादिदर्शनं ग्लानिरिष्यते ।
कपिभिर्वार्धिमुत्तीर्य लङ्कावेष्टनमेव तत् ॥

परिक्षयोऽत्र मोहादिर्ना[2]यकस्य रिपोर्बलात् ।
स नागपाशबन्धादी रामलक्ष्मणयोरिव ॥

मात्रावशिष्टसंहारसन्धिरेकं तु नाटके ।
शत्रुबन्दीकृतस्त्रीणां तस्य शत्रोर्वधादथ ॥

तत्प[3]रीक्षास्थितिर्मात्रावशिष्टमिति कथ्यते ।
यथा सीतापरीक्षैव[4] रावणानन्तरे कृता ॥

भारतीवृत्तिभूयिष्ठं वीराद्भुतरसाश्रयम्[5] ।
भास्वरं नाटकं बालरामायणमिदं[6] यथा ॥

ललितं कैशिकीवृत्तिश्शृङ्गारैकरसाश्रयम् ।
ऊर्वशीविप्रलम्भोऽत्र तदुदाहरणं यथा ॥

विलासो विप्रलम्भश्च विप्रयोगो वि[7]शोधनम् ।
[8]उद्दिष्टार्थोपसंहारो ललिते पञ्च सन्धयः ॥

विलासो नायकादीनां यथर्तु[9] रतिसेवनम् ।
यथा श्रीवत्सराजस्य वसन्तोत्सववर्णनम् ॥

ईर्ष्यया छन्दतो यूनोः विप्रलम्भः पृथक्स्थितिः ।
यथाहि वत्सराजस्य देव्या वासवदत्तया ॥

विप्रलम्भस्तु यासा(शापा)दिवत्सरान्तम[10]सङ्गतिः ।
यथा शर्मिष्ठया देव्या ययातेर्वार्षपर्वणः[11] (?) ॥

परिवादभयाद्दोषशोधनं स्याद्विशोधनम् ।
यथा रामेण वैदेह्या लङ्कावासविशोधनम् ॥

---

1 A न्यै । 2 BC ना । 3 C यत्प । 4 A रिक्षेपो । 5 B भास्वरं ललितं तथा । 6 B वीराद्भुतरसप्रायं बालरामायणं । 7 C ऽव । 8 C Omits two line । 9 B त्तु स्यात् । 10 A पापादिवत्सरान्तव । 11 A णेः ।

यथा हि विक्रमोर्वश्यामुद्दिष्टार्थोपसंहृतिः ॥

ऊर्वशीयं चिरं गेहे सहधर्मचरी तव ।
भवत्वितीन्द्रसन्देशः तं पूरूरवसं प्रति ॥

सर्ववृत्तिविनिष्पन्नं सर्वलक्षणसंयुतम् ।
समग्रं तत्प्रतिनिधिः महानाटकमुच्यते ॥

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
एतान्यङ्गानि कार्याणि सर्वनाटकजातिषु ॥

युक्तिः प्राप्तिः समाधानं विधानं परिभावनम् ।
एतान्यवश्यकार्याणि प्रशान्ते नाटके बुधैः ॥

आज्ञापवादः सम्फेटः प्रसङ्गो विद्रवस्तथा ।
सङ्ग्रहश्चेति साङ्गानि सम्यग्योज्यानि भास्वरे ॥

विरोधं प्रणयश्चैव पर्युपासनमेव च ।
पुष्पं वज्रश्च बध्नीयादवश्यं ललिते सुधीः ॥

सर्वेषां यत्र रूपाणि दृश्यन्ते विविधानि च ।
नाटकं नृत्तचा[1]राख्यं तत्समग्रमितीरितम् ॥

## अथ प्रकरणलक्षणम् ॥

इतिवृत्तमथोत्पाद्यमत्र प्रकरणे मतम् ।
वणिक्सचिवविप्राणामेकः स्यात्तत्र नायकः ॥

धीरशान्तश्च सापायो धर्मकामार्थतत्परः ।
शेषं नाटकवत्सन्धिप्रवेशकरसादिकम् ॥

माधवो धीरशान्तश्च द्विजातिः कामतत्परः ।
अपायोऽघोरघण्टादिव्यापारोऽत्र विभाव्यते ॥

1 A वा ।

नायिका द्विविधा नेतुः कुलस्त्री गणिका तथा ।
क्वचिदेकैव कुलजा वेश्या क्वापि द्वयं क्वचित् ॥

कुलजाऽऽभ्यन्तरा वेश्या बाह्या नातिक्रमोऽनयोः ।
आभिः प्रकरणं त्रेधा द्वाभ्यां सङ्कीर्णमुच्यते ॥

सङ्कीर्णं तत्प्रकरणं[1] यत्स्याद्धूर्तसमाकुलम् ।
वेश्याकुलस्त्रियोर्योगो न स्यात्प्रकरणे स्वतः ॥

शिल्पादिव्यपदेशेन भवेद्वेश्यासमागमः ।
भाषेत प्राकृतं वेश्या संस्कृतं कुलनायिका ॥

यत्तु कविरात्मबुद्ध्या वस्तु शरीरञ्च नायकञ्चैव ।
स्वयमुत्पाद्य विरचयेत्तज्ज्ञेयं प्रकरणं नाम ॥

दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ॥

मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽत्र तत्त्वज्ञैः ।
संस्कृतवचनानुगतः सङ्क्षेपार्थः प्रवेशकवत्[2] ॥

इति प्रकरणे शुद्धविष्कम्भो भोजनिर्मितः ॥

नोदात्तनृपोपेतं न दिव्यचरितं न राजसम्भोगः ।
बाह्यजनसम्प्रयुक्तं विज्ञेयं प्रकरणं नाम ॥

शकारः कुट्टिनी चेटी धर्मशास्त्रबहिष्कृताः ।
विटचेटादयो बाह्या नित्यं प्रकरणे मताः ॥

वेशो[3]पचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरस्रो विटो मतः ॥

उज्ज्वलवेषाभरणः कुप्यत्यनिमित्ततः प्रसीदति च ।
प्राकृतभाषाचारो भवति शकारो बहुगुणाढ्यः ॥

---

1 A हसनं । 2 A प्रयोजनवत् । B D प्रकरणं पश्चात् । 3 B C षो ।

आगमलिङ्गविहीनं देशकुलन्यायलोकविपरीतम् ।
व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥

मध्यमपुरुषैर्योज्यः शुद्धो विष्कम्भकस्तु तत्त्वज्ञैः ।
संस्कृतवचनानुगतः प्रयोजनार्थः प्रवेशकस्तद्वत् ॥

उत्पाद्यमितिवृत्तं तु धीरः शान्तश्च नायकः ।
अपायबहुलक्लेशधर्मकामार्थतत्परः ॥

समुच्चयविकल्पाभ्यां प्रासवेशकुलाङ्गनम् ।
शकारविटचेटादितत्तत्पात्रसमाकुलम् ॥

राजसम्भोगसङ्कीर्णं विष्कम्भादिविनाकृतम् ।
अन्यूनाधिकपञ्चाङ्कत्वादिलक्षणसंयुतम् ॥

ईदृशं रूपकं यत्तु तद्वै प्रकरणं भवेत् ।
पद्मावतीपरिणयो विप्रस्य चरितं भवेत् ॥

तथैव मृच्छकटिका वणिजां चरितं भवेत् ।
कुलस्त्रीनायिकं तत्तु मालतीमाधवाभिधम् ॥

यथा तरङ्गदत्ताख्यं गणिकानायिकं कृतम् ।
तथैव मृच्छकटिका विहितोभयनायिका ॥

## अथ नाटिकालक्षणम् ॥

नाटकस्य प्रकरणस्योभयोः सङ्करात्मिका ।
लक्ष्यते नाटिकाऽप्यत्र सङ्कीर्णान्यनिवृत्तये ॥

प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।
नायको धीरललितो वृत्तमुत्पाद्यमेव च ॥

शृङ्गारोऽङ्गी रसोऽङ्गानि वीररौद्रादयो मताः ।
वृत्तिश्च कैशिकी स्वाङ्गैर्नर्मस्फुञ्जा[1]दिभिर्युता[2] ॥

---

1 A लम्भा । B लज्जा । 2 A क्रुधा ।

देव्या प्रधानया नेतुस्तत्सदृश्या च मुग्धया ।
सङ्करोऽत्रानुरागोऽपि नवावस्थो भवेत्तयोः ॥

देवीभयेन साशङ्को नेता मुग्धासमागमे ।
चत्वारः सन्धयो लोपोऽवमर्शस्य भविष्यति ॥

न विटः पीठमर्दश्च सहायौ भवतः क्वचित् ।
नेतुः स्यान्नर्मसचिवो विरूपस्तु विदूषकः ॥

कैश्चिन्नाटकधर्मैस्तदविरोधिभिराश्रितम् ।
स्त्रीप्रायपात्रं देशर्तुवर्णनाकल्पशोभितम् ॥

रूपकं चतुरङ्कं यन्नाटिकेत्यभिधीयते ।
अत्रोत्पाद्येतिवृत्तत्वाच्छृङ्गारादिरसत्वतः ॥

प्रख्यातनृपनेतृत्वात्षट्त्रिंशद्भूषणत्वतः ।
तुल्यत्वं नाटकेनापि तथा प्रकरणेन च ॥

नाटिकायाः स्मृतं तत्र विशेषोऽयमुदाहृतः ।
तदुदाहरणं रत्नावली च प्रियदर्शिका ॥

सैव प्रवेशकेनापि विष्कम्भेन विनाकृता ।
अङ्कस्थानीयविन्यस्तचतुर्यवनिकान्तरा ।
प्रकृष्टप्राकृतमयी सट्टकं नामतो भवेत् ॥

## अथ भाणलक्षणम् ॥

भाणस्तु धूर्तचरितं स्वानुभूतं परेण वा ।
यत्रोपवर्णयेदेको निपुणः पण्डितो विटः ॥

सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसंस्तवैः ॥

भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितम् ।
मुखनिर्वहणे साङ्गे लास्याङ्गानि दशापि च ॥

कोहलादिभिराचार्यैरुक्तं भाणस्य लक्षणम् ।
लास्याङ्गदशकोपेतं सम्यग्गुप्तपाद्यवस्तु च ॥

भारतीवृत्तिभूयिष्ठं शृङ्गारैकरसाश्रयम् ।
परस्वात्मानुभूतार्थधूर्तचारित्रवर्णनम् ॥

तत्तद्विटोक्तिप्रत्युक्तिविहिताकाशभाषितम् ।
मुखनिर्वहणप्रायसन्धियुग्रूपकं च यत्[1] ॥

एकाङ्कश्च भवेद्भाण इति विद्वद्भिरुच्यते ।
भाणस्य लक्षणं चेदग्भोजेनापि प्रकाशितम् ॥

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकं त्रिमूढश्च[2] सैन्धवाख्यं द्विमूढकम् ॥

उत्तमोत्तमकं भाव्यमु[3]क्तप्रत्युक्तमेव च ।
लास्यं दशविधं ह्येतदङ्गनिर्देशकल्पनम् ॥

वीणादिवाद्ययोगेन सहितं यत्र भाव्यते ।
ललितं नायिकागीतं तद्गेयपदमुच्यते ॥

चञ्चत्पुटादिना वाक्याभिनयो नायिकाकृतः[4] ।
भूमिचा[5]रिप्रचारेण स्थितपाठ्यं तदुच्यते ॥

भ्रूनेत्रपादचलनविलासाभिनयान्वितम् ।
योज्यमासीनया पाठ्यमासीनं तदुदाहृतम् ॥

नानाविधेन वाद्येन नानाताललयान्वितम् ।
लास्यं प्रयुज्य[6]ते यत्र सा ज्ञेया पुष्पगण्डिका[7] ॥

---

1 C ह्ययतदङ्गयूक् । 2 गूढं च । 3 A चैतद्ध । 4 A शेन विनाकृतम् । 5 B वा । 6 C ज्य । 7 C न्धिका ।

अन्यासङ्गम[1]शङ्किन्या नायकस्यात्त[2]रोषया ।
प्रेमच्छेद[3]प्रकटनं लास्यं प्रच्छेदकं विदुः ॥

अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलङ्कृतम् ।
लास्यं पुरुषभावाढ्यं त्रिमूढक[4]मुदाहृतम् ॥

देशभाषाविशे[5]षेण चलद्वलयशृङ्खलम् ।
लास्यं प्रयुज्यते यत्र तत्सैन्धवमुदाहृतम् ॥

चारीभिर्ल[6]लिताभिश्च चित्रार्था[7]भिनयान्वितम् ।
स्पष्टभावरसोपेतं लास्यं यत्तद्द्विमूढकम् ॥

अपरिज्ञातपार्श्वस्थं गेयभावविभूषितम् ।
लास्यं सोत्कण्ठवाक्यं यदुत्तमोत्तमकं भवेत् ॥

कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।
वाक्यं तदुक्तप्रत्युक्तं द्वयोः[8]प्रश्नोत्तरात्मकम् ॥

स्वप्ने विलोक्य दयितं क्रियते यत्प्रबुद्धया ।
मनोभवार्तया भावस्तद्धि भाविकमुच्यते ॥

अपरैर्नृत्य[9]भेदास्तु गुल्मशृङ्खलितालताः ।
भेद्यकश्चेति चत्वारः कथ्यन्तेऽत्र मनीषिभिः ॥

गुल्मः सम्भूय यन्नृत्तं शृङ्खलाऽन्योन्यबन्धनी ।
परस्पराङ्गवेष्टेन यन्नृत्यं सा लता मता ॥

एकैकस्य बहिस्सङ्गान्नृत्तं यत्स च भेद्यकः ।
पिण्डीबन्धश्च गुल्मश्च पर्यायाविति केचन ॥

गुल्मबन्धो विलम्बे स्याच्छृङ्खला तु लयान्तरे ।
मध्यमे स्याल्लताबन्धो द्रुते स्याद्भेद्यकः स्मृतः ॥

भद्रासनेन यन्त्रेण तत्तच्छिक्षा विधीयते ।

---

1 C गमन । 2 B त्तु । 3 A भेद । 4 A स्त्रीरूपक । 5 A विभावौ च Bcविशेषाणाम । 6 A बाहुभिर्लो । 7 C विचित्रा । 8 C यत्र । 9 B गेय ।

## अथ प्रहसनलक्षणम् ॥

भाणवत्स्यात्प्रहसनं तत्त्रिधा परिभिद्यते ॥

शुद्धं क्वाप्यथ सङ्कीर्णं क्वचिद्वैकृतमित्यपि ।
तत्र श्रोत्रियनिर्ग्रन्थशाक्यादीनां यथायथम् ॥

भाषाचेष्टिततद्रूपहास्यवाक्यसमन्वितम् ।
चेटचेटीविटव्याप्तं शुद्धं प्रहसनं भवेत् ॥

उद्घात्यकादिवीथ्यङ्गैर्मिश्रं सङ्कीर्णमुच्यते ।
विटकामुकचेटादिवचोवेषधरैस्तु यत् ॥

परिव्राणमुनि[1]षण्डाद्यैः कृतं वैकृतमुच्यते ।
रसस्तु भूयसा कार्यः षट्प्रकारस्ततस्ततः ॥

मुखं निर्वहणश्चैव सन्धी द्वावस्य कीर्तितौ ।
अङ्कोऽप्येको भवेद्यस्य तत्तु प्रहसनं भवेत् ॥

सैरन्ध्रिका[2] स्यात्सङ्कीर्णा शुद्धा सागरकौमुदी ।
कलि[3]केलिप्रहसनं यत्तद्वैकृतमीरितम् ॥

## अथ डिमलक्षणम् ॥

उद्धतैर्देवगन्धर्वयक्षरक्षोमहोरगैः ।
भूतप्रेतपिशाचाद्यैर्डिमः षोडशनायकः ॥

शृङ्गारहास्यविधुरै रसैर्दीप्तैर्निरन्तरः ।
कैशिकीवृत्तिरहितो भारत्यारभटीयुतः ॥

लुप्तावमर्शसन्धिश्च चतुस्सन्धिसमन्वितः ।
अङ्गिरौद्ररसोपेतो बीभत्सादिनिरन्तरः ॥

प्रख्यातवस्तुविषयो न्यायमार्गीणनायकः ।
चन्द्रसूर्योपरागोल्कानिर्घातादिभिरुद्भटः ॥

---

1 A ण्ड. । 2 A सौभाद्रिकः । 3 A तली ।

उत्पातैर्घोरसङ्ग्रामसंरम्भभरितान्तरः ।
सप्रवेशकविष्कम्भश्चतुरङ्को डिमः स्मृतः ॥

इदं त्रिपुरदाहाख्ये लक्षणं ब्रह्मणोदितम् ।
उदाहरणमेतस्य वृत्रोद्धरणमुच्यते ॥

तारकोद्धरणं तद्वत्तत्र तत्र विलोक्यताम् ।

## अथ व्यायोगलक्षणम् ॥

व्यायोगस्येतिवृत्तं यत्तत्प्रख्यातमितीरितम् ॥

धीरोदात्ताश्च विख्याता देवा राजर्षयोऽथवा ।
नायकास्त्रिचतुष्पञ्च भवेयुर्न दशाधिकाः ॥

दिव्ययोनिकथाल्पस्त्रीपरिवारस्त्रिसन्धिकः ।
गर्भावमर्शरहितो विष्कम्भादिसमन्वितः ॥

एकाहचरितैकाङ्को भारत्यारभटीयुतः ।
युद्धाधर्षणसम्फेटविद्रवादिनिरन्तरः ॥

काचित्कः स्वल्पशृङ्गारः षड्दीप्तरसनिर्भरः ।
अस्त्रीनिमित्तसङ्ग्रामो व्यायोगः कथितो बुधैः ॥

## अथ समवकारलक्षणम् ॥

देवासुरेतिवृत्तं यत्प्रख्यातं लोकसम्मतम् ।
तत्स्यात्समवकारोऽस्य निर्विमर्शाश्च सन्धयः ॥

मुख्यी स्यात्कैशिकी वृत्तिरङ्गी वीररसो भवेत् ।
प्रख्यातोदात्तचरिता मिलिता देवदानवाः ॥

पृथक्प्रयोजनास्तत्र नायका द्वादश स्मृताः ।
अङ्गान्यन्ये रसास्तत्र सात्त्वत्याद्याश्च वृत्तयः ॥

अङ्कैस्त्रिभिस्त्रिकपटस्त्रिशृङ्गारस्त्रिविद्रवः ।
अष्टादश स्युरेतस्मिन्नाडिकाः समुदायतः ॥

ताभिस्त्रिधा विभिन्नाभिः त्र्यङ्ककालो नियम्यते[1] ।
मुखप्रतिमुखाभ्याश्च प्रथमाङ्को द्विसन्धिकः[2] ॥

कालस्तु प्रथमाङ्कस्य भवेद्द्वादश नाडिकाः ।
द्वितीयाङ्कश्चतसृभिर्नाडिकाभिः स्थितो भवेत् ॥

मुखं प्रतिमुखं गर्भः सन्धयोऽस्य त्रयोऽपि च ।
तृतीयाङ्कस्य कालोऽपि नाडिकाभ्यां प्रकल्प्यते ॥

सन्धेया निर्विमर्शाश्च चत्वारः सन्धयोऽत्र तु ।
मुहूर्तस्य तुरीयांशो नाडिका घटिकाद्वयम् ॥

वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ।
कपटस्य स्वरूपं तु भ्रमो मोहात्मकः स्मृतः ॥

वस्तुस्वभावकपटः क्रूरसत्त्वादिसम्भवः ।
दैविकः कपटो वह्निवर्षवातादिसंभवः ॥

शत्रुजः कपटस्तत्र सङ्ग्रामादिसमुद्भवः ।
विद्रवः प्रायशस्तद्वत्तयोर्भेदोऽत्र कथ्यते ॥

जीवग्राहोऽथ मोहो वा कपटेन प्रकाश्यते ।
विद्रवस्तु फलं तत्तद्धेतोस्तस्मात्पलायनम् ।
शृङ्गारो धर्मकामार्थभेदेन त्रिविधो भवेत् ॥

व्रतनियमतपोयोगाद्यस्मिन्बहुधा निवेशितः कामः ।
पुत्रादिभोगसुखकृत्स ज्ञेयो भोग(धर्म)शृङ्गारः ॥

अर्थावाप्तिर्यस्मिन्कामेन निवेशितेन संभवति ।
तदधीनविभवभोगास्वादसुखेनार्थशृङ्गारः ॥

1 A त्र्यङ्ककाण्डानियुज्यते । 2 C द्वे द्विसन्धि तत् ।

परदारद्यूतसुरा[1]मृगयाद्यास्वादकेलिविनिविष्टः ।
तत्तद्विषयास्वादनसुखललितः कामश्रृङ्गारः ॥

वीथ्यङ्गानि यथालाभमासुखं नाटकादिवत् ।
श्रृङ्गारत्रितयं यत्र नात्र बिन्दुप्रवेशकौ ॥

इत्थं समवकारस्य लक्षणं दर्शितं बुधैः ।
उदाहरणमेतस्य भवेदमृतमन्थनम् ।
प्रथमेऽङ्केऽत्र श्रृङ्गारकपटाश्च सविद्रवाः ॥

युद्धजलसम्भ्रमो वा वाय्वग्निगजेन्द्रसम्भ्रमकृतो वा ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥

उष्णिग्गायत्र्याद्यान्यन्यानि च यानि बन्धकुटिलानि ।
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि ॥

वीथीप्रहसनाङ्गानि भवेयुर्वा नवा क्वचित्[2] ।
अन्यथा वर्णयन्त्यन्ये कपटं विद्रवं बुधाः ॥

वस्तुक्रमसमुद्भूतो दैवसम्पादितस्तथा ।
तथा शत्रुकृतश्चेति कपटाः स्युस्त्रयः क्रमात् ॥

तथा हि[3] चित्रशालाङ्के दण्डकाष्ठोपसङ्क्रमात् ।
ज्वरो विदूषकस्यैष कपटः प्रथमः स्मृतः ॥

दैवाद्वध्यशिलारोहो नागानन्दे[4] प्रकल्पितः ।
जीमूतवाहनस्यैष द्वितीयः कपटः स्मृतः ॥

यथा पुंसवनाङ्केऽत्र चिन्तामूर्खस्य[5] मायया ।
कैकयीमन्थरावेषधारणं कपटोऽन्तिमः ।
(वातादिजन्यसाम्यात्तु) विद्रवो[6] नात्र कथ्यते ॥

---

1 C हला । 2 B इति समवकारलक्षणम् । 3 B यथापि । 4 A दैवाशीलावमोहोऽत्र नागव्याजेन । B दैवाद्विन्ध्य । 5 A चित्रजासुखि । 6 A हितादिजन्यसाम्यत्वाद्विद्रयो । B C D पातादिजन्या साम्यात्तु द्विद्रयो ।

## अथ वीथीलक्षणम् ॥

मुखनिर्वहणे सन्धी वीथ्या वृ[1]त्तिस्तु कैशिकी ।
द्वाभ्यां प्रयोज्या पात्राभ्यां क्वचिदेके[2]न वा भवेत् ॥

अङ्गी सर्वरसस्पर्शी शृङ्गारोऽस्याः प्रधानतः ।
युक्ता लास्याङ्गवीथ्यङ्गैः सम्यगुद्घात्यकादिभिः ॥

भवेयुर्वा न वेत्यस्यां लास्याङ्गान्याह कोहलः ।
वीथ्याः शृङ्गाररूपत्वाद्विधेयानीति भोजराट्[3] ॥

एकाङ्कैव भवेद्वीथी रसः सूच्योऽत्र सम्भृतः ।
यथा बकुलवीथी स्यादिन्दुलेखादयो यथा ॥

## अथोत्सृष्टिकाङ्कलक्षणम् ॥

उत्सृष्टिकाङ्के प्रख्यातमितिवृत्तं क्वचिद्भवेत् ।
कदाचिदेतदुत्पाद्यमप्रख्यातं कवेर्धि[4]या ॥

दिव्यैरयुक्तः पुरुषैः शेषैरन्यैः समन्वितः ।
कैशिकीवृत्तिहीनश्च सात्त्वत्यारभटीयुतः ॥

नियुद्धयुद्धसम्फेटप्रहारनिधनोद्भटः ।
प्रभूततरुणस्त्रीणां परिदेवितमेदुरः ॥

निर्वेदभाषितैः स्त्रीणां नानाव्याकुलचेष्टितैः ।
क्वचिद्भयानकप्रायः कर्तव्योऽभ्युदयान्तिमः ॥

एवमुत्सृष्टिकाङ्कस्तु कर्तव्यः काव्यवेदिभिः ।
अस्याङ्कमेकं भरतो द्वावङ्काविति कोहलः ॥

व्यासाञ्जनेयगुरवः प्राहुरङ्कत्रयं यदा ।
विष्कम्भकोऽत्र सङ्कीर्णः तत्र तत्र प्रवेशकः ॥

मुखनिर्वहणे सन्धी इति कोहलभाषितम् ।
ईहामृगवदित्यन्ये केऽप्याहुर्डिमसन्धिभिः ॥

---

1 A विद्यादृष्ट । 2 A दृक्के । 3 B वाक् । 4 A B भवेद्धि ।

यद्दिव्यनायककृतं कार्यं सङ्ग्रामबन्धुवधयुक्तम् ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥

कस्माद्भारतमिष्टं वर्षेभ्यस्तस्य कर्मभूमित्वात् ।
न वधादयः क्वचित्स्युः निबन्धनीयाः प्रयोज्याश्च ॥

भवेयुः क्वापि यद्येते प्रत्युज्जीवन्त्यनन्तरम् ।
लक्ष्मणस्य वधः शक्त्या रावणेन यथा कृतः ॥

यत्प्रत्युज्जीवनान्तोऽभूत्तत्तु शर्मानुजाह्वये ।
जीमूतवाहनस्यापि नागानन्दे वधो यथा ॥

तत्प्रत्युज्जीवनान्तश्च तथैवान्यत्र कल्प्यताम् ।
चन्द्रापीडस्य मरणं यत्प्रत्युज्जीवनान्तिमम्[2] ॥

कल्पितं भट्टबाणेन यथा शारदचन्द्रिका ।
दिव्येन मर्त्यस्य वधः काव्यस्यावश्यभावतः ॥

निबन्धे[3]सूच्य एवाङ्कविच्छित्त्यैष प्रवेशकैः ।
यथा सगरपुत्राणां कपिलेन वधः कृतः ॥

प्रवेशकैः सूचितोऽङ्कच्छेदैर्गङ्गाभगीरथे ।
यथा वधः प्रयोज्यः स्यात्तथा बन्धादि कल्प्यताम् ॥

इत्याहुर्भारते वर्षे इति शंकुकभाषितम् ।
देशेष्वन्येषु कविभिर्न वधादिः प्रकल्प्यते ॥

हृद्या तत्तद्भूमिः शोभनगन्धा च काञ्चनी यस्मात् ।
उपवनसलिल[4]क्रीडाविहारनारीरतिप्रमोदाश्च ॥

तेषु च वर्षेषु सतां भवति न दुःखं न वा शोकः ।
एते देशविशेषाः पुराणशास्त्रेतिहासपरिगणिताः[5] ॥

1 B तत्तद्धा । 2 B तमम् । 3 A बन्धः । 4 A B भवन । 5 All Mss read after this कर्मारम्भेषु कृत्ये [illegible] । [illegible] A ।

कर्मारम्भो न भवेत्तेषु हि ते (सुवते) यत्फलं क्षोण्याः ।
सुरतोत्सवसम्भोगा देशेष्वेतेषु बन्धनीयास्स्युः ।
रत्युपचाराङ्गतया गीताङ्गानि प्रयोजनीयानि ॥

अन्ये रसा न प्रयोज्यास्तत्तद्देशविशेषतः ।
प्रायेणोत्सृष्टिकाङ्कस्तु वर्षे भारत एव हि ॥

अनुषङ्गेण कथितो विशेषोऽत्रावधारितः ॥

## अथेहामृगलक्षणम् ॥

ईहामृगस्येतिवृत्तं प्रख्यातोत्पाद्यमिश्रितम् ।
मुखप्रतिमुखोपेतं तथा निर्वहणान्वितम् ॥

धीरोद्धतश्च प्रख्यातो दिव्यो मर्त्योऽथ नायकः ।
बलाद्दि व्याङ्गनाहेतुप्रवृत्तो द्दामसङ्गरः ॥

गणशः षट्चतुःपञ्च नायकाः प्रतिनायकाः ।
यथासमरसंरम्भतुल्यवृत्तिरसाश्रयाः ॥

वृत्तित्रययुतो हीनः कैशिक्या सहितोऽपि वा ।
भयबीभत्सरहिताः षडेवात्र रसाः स्मृताः ॥

अङ्काश्चत्वार एवात्र सविष्कम्भप्रवेशकाः ।
व्याजान्निवर्तितोद्दामसंरम्भारम्भसङ्गरः ॥

वधं[5] प्राप्तस्य नो कुर्यान्नेतुः क्वापि यशस्विनः ।
उक्ता व्यायोगधर्मा ये ते स्युरीहामृगेऽपि च ॥

व्यायोगस्य विशेषोऽयमस्त्रीहेतुकसङ्गरः ।
ईहामृगश्च कथितो यथा कुसुमशेखरः ॥

भाणे वीथ्यां प्रहसने व्यायोगोत्सृष्टिकाङ्कयोः ।
डिमे समवकारे च तथैवेहामृगेऽपि च ॥

---

1 B C D त्र वधादिकः । 2 A BCD बालादि । 3 B वृत्तान्तो । 4 B वृत्तत्रय हितो । 5 C घ ।

मुखं प्रतिमुखं गर्भोऽवमर्शश्चोपसंहृतिः ।
प्रयोज्याः सन्धयस्तज्ज्ञैरेकद्वित्र्यादिलोपतः ॥

एकलोपे चतुर्थः स्याद्विलोपे त्रिचतुर्थयोः ।
द्वितृतीयचतुर्थानां त्रिलोपे लोप इष्यते ॥

९ इत्थं विचिन्त्य दशरूपकलक्ष्म मार्ग-
मालोक्य वस्तु च विभाव्य बृहत्कथाश्च ।
कुर्यादयत्नवदलङ्कृतिभिः प्रबन्धं
वाक्यैरुदारमधुरैः स्फुटमन्धवृत्तैः ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने दशरूपकलक्षण-
कथनो नामाष्टमोऽधिकारः ॥

---

1 B क्ष्य।

॥ श्रीः ॥

# अथ नवमोऽधिकारः ।



भरतादिप्रणीतत्वादर्थे[1]दोषो न कश्चन ।
शब्दे विभक्तिव्यत्यासाल्लिङ्गव्यत्यासतोऽपि वा ॥

धात्वर्थस्य विपर्यासाद्दोषो यद्यपि दृश्यते ।
सद्भिस्तत्क्षम्यतामत्र को लोके[2] न प्रमाद्यति ॥

एतत्तु शारदादेव्याः प्रसादादेव दर्शितम् ।
तस्मादभ्यसनीयोऽयं भावज्ञानाय कोविदैः ॥

दशरूपेण भिन्नानां रूपकाणामति[3]क्रमात् ।
अवान्तरभिदाः काश्चित्पदार्थाभिनयात्मिकाः ॥

ते नृत्यभेदाः प्रायेण सङ्ख्यया विंशतिर्मताः ।
तोटकं नाटिका गोष्ठी सल्लापः शिल्पकस्तथा ॥

डोम्बी श्रीगदितं भाणो भाणी प्रस्थानमेव च ।
काव्यञ्च प्रेक्षणं नाट्यरासकं रासकं तथा ॥

उल्लोप्यकञ्च हल्लीसमथ दुर्मल्लिकाऽपि च ।
कल्पवल्ली मल्लिका च पारिजातकमित्यपि ॥

एता नामान्तरैः कैश्चिदाचार्यैः कथिता अपि ।
संविधानक्रमस्तासां न कदाचन भिद्यते ॥

---

1 B र्थै । 2 B को । 3 A मितः ।

नाटिकायास्तोटकस्य सट्टकस्य च लक्षणम् ।
अंश[1]त्वान्नाटकस्यापि तथा प्रकरणस्य च ॥

आनुषङ्गिकमेतेषां लक्षणं तत्र दर्शितम् ।
डोम्बी श्रीगदितं भाणो भाणीप्रस्थानरासकाः ॥

काव्यं च सप्त नृत्यस्य भेदाः स्युस्तेऽपि भाणवत् ।
इत्याहुः केचिदन्ये तान्सर्वान्नृत्यात्मकान्विदुः ॥

## गोष्ठी

अथोत्पाद्यकथैकाङ्का गोष्ठी श्रृङ्गारमन्थरा ।
रूपसौन्दर्यलावण्योपेतषट्पञ्चनायिका ॥

प्राकृतैर्नवभिः पुंभिः दशभिर्वाऽप्यलङ्कृता ।
गर्भावमर्शसन्धिभ्यां शून्या नोदात्तवाकृ[2]ता ।
अत्र स्यात्कैशिकी वृत्तिः मृद्वी नान्यरसाश्रया ॥

न कुञ्जरघटाघातपात्रं भवति कन्दली ।
गोपीपते[3]र्विहरतो गोष्ठबालस्य चेष्टितम् ॥

यत्तु-यमलार्जुनादिदानवनिधनकृतं तत्तु गोष्ठी स्यात् ॥

## सल्लापकः

सल्लापस्येतिवृत्तं यत्ख्यातं चोत्पाद्यमेव वा ।
मिश्रं वा तत्र श्रृङ्गारहास्यौ नैवार्हतः क्वचित् ॥

शबलो वीररौद्राभ्यामङ्गान्यन्ये रसाः स्मृताः ।
प्रायः सपत्नशा[4]न्तश्च क्रुद्धपाषण्डनायकः ॥

दैवारिजन्यकपटयुद्धस्थानोपरोधवान् ।
सात्त्वत्यारभटीवृत्तिसहितश्च सविद्रवः ॥

अङ्कास्त्रयो द्वितीयेऽङ्के तालप्राचुर्ययुग्भवेत् ।
तृतीयोऽङ्कः सकपटः प्रथमोऽङ्कः सविद्रवः ।
चतुस्सन्धिः प्रतिमुखशून्यः सल्लापको भवेत् ॥

1 C ह्न । 2 A वाक्ष । B वंक्ष । 3 A B च तै । 4 A B त्नश्शा ।

## शिल्पकः

शिल्पकश्चतुरङ्कः स्याच्चतुर्वृत्तिविराजित[1]ः ।
हास्यं विना रसैः पूर्णः स्वतो ब्राह्मणनायकः ॥
हीनोपनायकः क्वापि श्मशानादिसमाकुलः ।
ऊढा पुनर्भूः कन्या वा ताः स्युः सचिवविप्रजाः ॥
मालती माधवस्येव कमलस्य कलावती ।
अङ्गानि सप्तविंशत्स्युरुत्कण्ठादीनि च क्रमात् ॥
उत्कण्ठा चावहित्थश्च प्रयत्नाशंसने अपि ।
तर्कश्च संशयस्ताप उद्वेगो मौर्ख्य[2](ढ्य)मेव च ॥
आलस्यकम्पानुगतिविस्मयास्साधनं तथा ।
उच्छ्वासश्च तथाऽऽतङ्कः शून्यता च प्रलोभनम् ॥
नात्यं सम्फेट आश्वासः सन्तोषातिशयस्तथा ।
प्रमदश्च प्रमादश्च युक्तिश्चापि प्रलोचना ॥
प्रशस्तिश्चेति कथितान्यङ्गान्यत्रैव शिल्पके ।
उदाहरणमेतेषां परस्तादेव [3]वक्ष्यते ॥

## डोम्बी

डोम्ब्येव भाण्डि[4]कोदात्तनायिकैकाङ्कभूषिता[5] ।
कैशिकीभारतीप्राया[6] वीरशृङ्गारमेदुरा ॥
श्लक्ष्णनेपथ्यभाङ्मन्दो[7]त्साहा पूरुषनायिका ।
अङ्गानि तस्याःसप्त स्युः कामदत्ता यथा कृता ॥
विन्यासश्चाप्युपन्यासो विबोधः साध्वसस्तथा ।
अनुवृत्तिश्च संहारः समर्पणमिति क्रमात् ॥
निर्वेदवाक्यं विन्यास इष्टार्थविरहार्तिजम्[8] ।
कार्याख्यानमुपन्यासः तत्तदर्थप्रसाधने[9] ॥

---

1 B विंत्तिविवर्जितः । 2 A ग्ध्यमे । 3 A B ल । 4 C णि । 5 D omits this line । 6 B यें । 7 C मदनो । 8 A हादिना । B र्जितम् । 6 B C नम् ।

निवृत्तिः संशयभ्रान्त्योः विबोध इति कथ्यते ।
साध्वसः स्यादभूतस्य भूतोदाहरणं भयात् ॥

निदर्शनोपन्यसनमनुवृत्तिरिति स्मृता ।
यथाभिलषितावाप्तिः संहार इति कथ्यते ॥

समर्पणमुपालम्भः पीडया विरहोत्थया ।
अस्यां लास्याङ्गदशकं यथायोगं प्रयुज्यते[1] ॥

## श्रीगदितम्

अथ श्रीगदितं विद्यात्प्रसिद्धोदात्तनायकम् ।
भारतीवृत्तिबहुलमुदात्तवचनान्वितम् ॥

गर्भावमर्शसन्धिभ्यां शून्यं प्रख्यातनायकम् ।
एकाङ्कं विप्रलम्भाख्यरसप्रायं क्वचित्क्वचित् ॥

यस्मिन्कुलाङ्गना पत्युः शौर्यधैर्यादिकान्गुणान् ।
सखीनामग्रतो वक्ति तानुपालभतेऽथ वा ॥

विप्रलब्धा च तेनैव यदि तत्सङ्गमाशया ।
आसीना यत्र ललितं[2] प्रियाभोगविभूषितम् ॥

उत्कठिता[3] पठेद्गायेत्पाठ्यं वा गीतमेव वा ।
एवंविधं श्रीगदितं रामानन्दं यथा कृतम् ॥

## भाणः

हरिहरभानु[4]भवानीस्कन्दप्रमथाधिपस्तुतिनिबद्धः ।
उद्धतकरणप्रायः स्त्रीवर्ज्यो वर्णनायुक्तः ॥

गुणकीर्तनप्रकाशनगाथाभिर्भूभृतां स्तुतिनिबन्धः[5] ।
गायनसहोक्तियुक्तोदात्तेन विभूषितप्रायः ॥

त्रिचतुरपञ्चवितालैः विश्रामैः सप्तभिः परिच्छिन्नैः ।
अर्धोद्ग्रा[6]हनिवारणसङ्ख्यातैः कुत्रचिन्नियतः ॥

---

1 AB Colophon is इति भाण्डिका । 2 D यत्रासीना च लिखितम् । 3 ABD तान् । 4 A B बाण । 5 A भूहतामेऽस्तु । 6 A अर्थोग्रा ।

समविश्रामैर्विविधैर्विभूषितः पञ्चमे विपरिवर्ते ।
गाथामात्राद्विपथकपाठ्येनालङ्कृतो ललितः ॥

वर्णोऽथ मत्तपाली सभग्नता[1]लावनन्तरं गाथा ।
अनुभग्नतालमात्रे प्रथमे स्याद्भग्नतालश्च ॥

गाथाद्विपथवसन्ता विश्रामे स्युर्द्वितीये तु ।
मात्राविषमच्छिन्ना सभग्नताला भवेद्रथ्या[2] ॥

मागधिका साध्या[3]स्यात्तालविताने तृतीये तु ।
रथ्या द्विपथवसन्तकरथ्यातालाश्चतुर्थे स्युः ॥

रथ्याऽथ भग्नतालो मार्गणिका[4]द्विपथविषमाश्च ।
पञ्चमकेऽप्यथ षष्ठे रथ्यानवभग्नतालाः स्युः ॥

द्विपथकमार्गणिके च स्यातामथ[6] सप्तमे च विश्रामे ।
रथ्याऽथ भग्नतालः शुद्धे भाणे क्रमप्रदिष्टोऽयम् ॥

सङ्कीर्णभणितिभरितः सङ्करनामाऽयमुभयसंयोगात् ।
किंचिदनुद्धतभावः तालक्रमवर्जितश्च चित्रोऽयम् ॥

इति शुद्धः सङ्कीर्णश्चित्रोऽ[7]यमिति त्रिधा भवेद्भाणः ।
यदि वैष शुद्धभाषः शुद्धः संकीर्णयाऽथ सङ्कीर्णः ॥

सर्वाभिर्भाषाभिश्चित्रैश्च विचेष्टितश्च चित्रः स्यात् ।
अयमुद्धतोऽथ ललितो भाणो ललितोद्धतश्च भिन्नः स्यात् ॥

अर्थानामौद्धत्याल्लालित्यादुभयभावाच्च ।
यद्दुष्कराभिधेयं चित्रं चाप्युद्भटं च यद्भवति ॥

तद्भाणकेऽभिधेयं युतमनुतालैर्वितालैश्च ।
तस्यान्तर्भावो यो भाणेऽसौ नन्दिमालि[8]नामा स्यात् ॥

---

1 C ना । 2 B भवद्रव्या । 3 A नां वा । 4 C सार्गाणि । 5 B मांश्च । 6 C नामा ।
7 B शुद्धोऽय । 8 A B नान्दिमौलि ।

भिन्नः कैश्चित्कथितो भरतमतं सम्यगविदित्वा ।
आकाशपुरुषमुद्दिश्य वस्तु[1]यत्पठ्यतेऽथ वा [2]क्रियते ॥

विशिष्टोद्गाव्यभावप्रयोगवान्नन्दिमाली सः ।
उद्धतप्रायकरणः क्वचित्स्त्रीवर्जवर्णनः ॥

गाथादि[3]राजस्तुतिभिः निबद्धो गुणकीर्तनैः ।
सुगायन[4]सहोक्त्यैव युक्तोदात्तेन भूषितः ॥

निबद्धो ब्रह्मरुद्रेन्द्रस्कन्दादिस्तुतिभिर्दृढम् ।
वितालैः पञ्चभिर्वा तु यद्वा त्रिचतुरैरपि ॥

विश्रामैः सप्तभिश्चैव परिच्छिन्नैस्तथान्तरा ।
अर्धोद्ग्राहादिसङ्ख्यानै र्नियतश्च क्वचित्क्वचित् ॥

भूषितः[6] समविश्रामैः परिवर्ते च पञ्चमे ।
गाथामात्राद्विपथकपाठ्येनालङ्कृतः क्वचित् ॥

वर्णोऽथ मत्तपाली वा भग्नतालावनन्तरम् ।
गाथानुभग्न[7]तालाश्च मात्रा वा प्रथमे भवेत् ॥

विश्रामे भग्नतालाश्च गाथा द्विपथकस्तथा ।
व[8]सन्तोऽपि च विश्रामे द्वितीये प्रविशन्त्यमी ॥

मात्रा च विषमच्छिन्ना भग्नतालस्ततःपरम् ।
रथ्या च मागधीत्येते विश्रामे स्युस्तृतीयके ॥

रथ्या द्विपथकश्चापि वसन्तो रथ्यया सह ।
तालश्चतुर्थे विश्रामे प्रविशन्ति यथाक्रमम् ॥

रथ्या च भग्न तालश्च तथा मार्गणिकापि च ।
द्विपथो विषमश्चापि विश्रामे पञ्चमे स्मृताः ॥

1 C omits वस्तु । 2 A बुद्ध्या । 3 C भि । 4 C भगाय । 5 C तै । 6 C तैः ।
7 A वान । 8 A वि । 9 A B सह ।

षष्ठेऽथ रथ्यातालश्च नवतालं ततः परम् ।
भग्नतालो द्विपथकस्तथा मार्गणिकाऽपि च ॥

विश्रामे सप्तमे रथ्या भग्नतालश्च कल्प्यते ।
एवं क्रमः शुद्धभाणे नाट्यविद्भिरुदाहृतः ॥

भाणः शुद्धो भवेच्छुद्धभाषया कल्पितो यदि ।
भाणः सङ्कीर्णनामा स्याद्भाषासङ्करकल्पितः ॥

भाणश्चित्र इति ख्यातः सर्वभाषाविचित्रितः ।
उक्ततालक्रमाश्लिष्टः शुद्धभाण इति स्मृतः ॥

द्वयोस्त्रयाणां तालानां सङ्कीर्णः सङ्करोद्भवः ।
चित्रो भाणो भवेदुक्ततालक्रमविवर्जितः ॥

यस्मिन्नौद्धत्यमर्थानां स भाणस्तूद्धतो भवेत् ।
लालित्यं यत्र चार्थानां स भाणो ललितः स्मृतः ॥

यत्र लालित्यमौद्धत्यं स भाणो ललितोद्धतः ।
चित्रं यदभिधेयं स्याद्दुष्करं चोद्धतं[1] च यत् ॥

भाणे[2]ऽभिधेयं तद्युक्तमनुतालैर्वितालकैः ।
यद्रूपकविशेषस्य भाणस्योक्तं स्व[3]लक्षणम् ॥

अतिदेश्यमिहानुक्तमङ्कसन्ध्यादिकल्पनम् ।
भाणो यो नन्दिमाल्याख्यः सोऽन्तर्भूतोऽत्र लक्ष्यते ॥

पाठ्ये गीते क्रियायां यदुद्दिश्याकाशपूरुषम्[4] ।
विशिष्टोद्भाव्यभावात्मा प्रयोगो यत्र दृश्यते ।
भाणः स नन्दिमालीति नाम्ना कविभिरुच्यते ॥

---

1 C क्लृटम् । 2 A B णो । 3 B स । 4 B पूर्वकम् ।

## भाणिका

प्रायो हरि[1]चरितमिति स्वीकृतगाथादिवर्णमात्रश्च ।
सुकुमारतः प्रयोगाद्भाणोऽपि च भाणिका भवति ॥

दिव्या[2]भिश्चारीभिर्विवर्जिता ललितकरणसंयुक्ता ।
तालान्तरालनृत्ता क्वचिदपि रथ्यादिसङ्कलिता ॥

अर्धोद्ग्राहनिवारणगायनवसन्तमत्तपालीभिः ।
विश्रामैश्च विहीना स्त्रीयोज्या वर्जितोत्तालैः ॥

वस्तूनि भाणिकायां नव दश वा नियमतो विधीयन्ते ।
नवमादिपञ्चमेषु स्थानेषु च भ[3]ग्नतालः स्यात् ॥

स्थानान्तरेषु तस्या लयका(ता)लो यदृच्छया क्रियते ।
विविधवचोविन्यासैः सभ्यजनोत्साहसम्पत्तिः ।
लास्याङ्गसन्धिनियमो भाणवदेवात्र भाणिकायां स्यात् ॥

अथ भाण्यङ्गिशृङ्गारा श्लक्ष्णनैपथ्यनायि[4]का ।
गर्भावमर्शहीना च मुखादित्रयभूषिता ॥

स्वल्पवृत्तप्रबन्धा च पीठमर्दविटान्विता ।
विदूषकेण सहिता दशलास्यसमन्विता ।
पाञ्चालरीतिनियता भवेद्वीणावती यथा ॥

## प्रस्थानम्

प्रस्थानं कैशिकीवृत्तियुतं हीनोपनायकम् ।
आपानकेलिललितं लयतालकला[5]नुगम् ॥

दासादिनायकं द्व्यङ्कं विटचेटादिनायकम् ।
मुखनिर्वहणोपेतं शृङ्गारतिलकं यथा ॥

## काव्यम्

काव्यं सहास्यशृङ्गारं सर्व[6]वृत्तिसमन्वितम् ।
सभग्नतालद्विपदीखण्डमात्रापरिष्कृतम् ॥

---

1 D मी । 2 A विया । 3 C ल । 4 A गाय । 5 A वशा । 6 A B रस ।

गर्भावमर्शसन्धिभ्यां हीनमेकाङ्कमेव च ।
क्वचिल्लास्ययुतं वा स्याद्विटचेटीसमन्वितम् ॥

कुलाङ्गनावेशयुतं ललितोदात्तनायकम् ।
एवं प्रकल्पयेत्काव्यं तद्गौडविजयो यथा ॥

विप्रामात्यवणिक्पुत्रनायिकानायकोज्ज्वलम् ।
मुदितप्रमदाभाषाचेष्टितैरन्तराऽन्तरा ॥

ग्रथितं विटचेटादिवेषभाषाभिरेव वा ।
एवं वा कल्पयेत्काव्यं यथा सुग्रीवकेलनम् ॥

## प्रेक्षणकम्

पदार्थाभिनयं यस्य ललितश्च लयान्वितम् ।
कुरुते नर्तकी यत्र सोऽपि नर्तनकः पुनः ॥

लास्यं द्विधा स्याच्छलिकं समरथ्यासमन्वितम् ।
सुतालचतुरश्राभ्यां यत्र कर्तुं प्रवर्तते ॥

गर्भावमर्शरहितं सर्ववृत्तिसमन्वितम् ।
प्रभूतमागधीशौरसेनीकं रसभावयुक् ॥

द्विसन्धीति वदन्त्येतदुत्तमाधमनायकम् ।
भारत्यारभटीयुक्तं क्वचित्स्यात्तस्य सात्त्वती ॥

यथा वालिवधाख्यश्च नृसिंहविजयो यथा ।
पूर्णनेपथ्यपाठैर्वा नान्दी तस्य विधीयते ॥

क्वचिद्गर्भावमर्शौ स्तः क्वचिद्वृत्तिचतुष्टयम् ।
क्वचिन्नेपथ्यवाक्याढ्यं[1] न कदाचनसूत्रधृत् ॥

एवं प्रेक्षणकं विद्याद्यथा त्रिपुरमर्दनम् ।

## नाट्य रासकम्

षोडश द्वादशाष्टौ वा यस्मिन्नृत्यन्ति नायिकाः ॥

---

1 A पाठाङ्गम् C पाठाढ्यम् ।

पिण्डीबन्धादिविन्यासै रासकं तदुदाहृतम् ।
पिण्डनात्तु भवेत्पिण्डी गुम्फनाच्छृङ्खला भवेत् ॥

भेदनाद्भेद्यको जातो[1] लता जालोपनाहत[2]: ।
एते नृत्ता[3]त्मना कार्या नाट्यवन्तः क्रियाविधौ ॥

सुकुमारोद्धतैरङ्गैर्गायिकाभिर्विलक्षणाः ।
वाक्यस्या(नाट्यस्या)वधयो ह्येते पिण्डाद्या दृश्यजातयः ॥

नव भेदा[4] विधीयन्ते ह्यनुकार्यानुरागिणः ।
कामिनीभिर्भुवो भर्तुः चेष्टितं यत्र नृत्यते ॥

रागाद्वसन्तमालोक्य स ज्ञेयो नाट्यरासकः ।
चर्चरीमिति ताम्प्राहुर्वर्णतालेन तत्र तु ॥

प्रविशेत्कामिनीयुग्मं समचर्या[5]दिशिक्षितम् ।
वामदक्षिणसञ्चारैरङ्गैस्तत्तत्प[6]रिष्कृतम् ॥

ततस्तदेव वर्णान्त आलीढद्वयसंस्थितम् ।
चोलिकाभिद्रुतं तालं[7] वादकानां प्रदर्शयेत् ॥

पञ्चघातकसंज्ञार्थजन[8]स्तस्मात्प्रवर्तते ? ।
नृत्तेन विभजेत्खण्डैः[9] चतुर्भिस्त्रिभिरेव वा ॥

अन्योन्याङ्गिकसञ्चारैर्हस्ततालैर्मिथः कृतैः ।
परिक्रम्य च निष्क्रामेत्ततोऽन्यद्वितयं विशेत् ॥

एककालस्तु निः[10]सन्धिः प्रवेशो निर्गमस्तयोः ।
पुष्पाञ्जलिप्रयोगन्तु मात्रातालेन योजयेत् ॥

उभयोः पात्र[11]योः पश्चात्पात्राणि प्रविशन्ति हि ।
बद्धा[12]पणवतालेन रथ्यावर्णादिवर्णकैः[13] ॥

1 C तौ । 2 A वाहतः । C गतः । 3 A वृत्ता । 4 A न च भेदा । C न पदेना । 5 B र्चा । 6 B ङ्गैस्ततप । C ङ्गैस्तनय । 7 B कोटिकादि हढं तालः । B छलिकादि । 8 A छेद । 9 A त्कन्दैः । D त्काण्डैः । 10 A तिः । 11 B र्श्वं । 12 B न्धा । 13 A B D र्ण्यैते ।

शुष्कगीतप्रयोगेण ततो गायन्ति गायकाः।
लताभिर्भे[1]द्यकैः गुल्मैर्नानावृत्तप्रदर्शकैः॥

पात्रैश्चैकत्र संयुक्तं पिण्डीबन्धन्तु कारयेत्।
ततो मल्लाभिधं तालं शुष्कवर्णप्रयोगतः॥

मुरजाक्षरवाद्यन्तु हन्याद्दण्डद्वि[2]दण्डकैः।
एवं नृत्तक्रमेणाद्यो ह्यपसार[3]ः समाप्यते॥

अपसारत्रयं चान्यदेवमेव प्रकल्पयेत्।
तत्रापि पूर्ववन्नृत्तं कामतस्तु लयक्रमः॥

कथयेद्रासकस्यान्ते शुभार्थं वचनक्रमम्॥

लब्ध्वा[4] दुग्धमहोदधौ सुरगणैः पीत्वाऽमृतं यस्तदा
पिण्डीश्रृङ्खलिका[5]विशेषविहितो युक्तो लताभेद्यकैः।
चित्रातोद्यविचित्रितै[6]र्लययुतो भेदद्वयालङ्कृतः
चारीखण्डसुमण्डलैरनुगतः सोऽयं मतो रासकः॥

## रासकम्

प्रथमानुरागजनित[7]प्रवासश्रृङ्गारसंश्रयं यत्स्यात्।
प्रावृड्वसन्तवर्णनपरमन्यद्वापि[8] सोत्कण्ठम्॥

अन्ते वीररसाढ्यं निबद्धमेतच्चतुर्भिरपसारैः[9]।
मुखनिर्वहणसमेतं प्रस्थानं भवति चैकाङ्कम्॥

आक्षिप्तिकाल्प[10]वर्णौ मात्राध्रुवकोऽथ भग्न[11]तालश्च।
वर्धनिका च[12] ध्वनिका यत्तत्स्यात्तदिह काव्यमिति॥

युक्तं लयान्तरैरच्छ[13]ध्वनिकास्थाननिर्मितैर्भवति।
काव्यं विचित्ररागं चित्रमिति तदुच्यते कविभिः॥

छन्ना[14]नुरागयुक्ताभिरुक्तिभिर्यत्र भूपतेः।
आवर्ज्यते मनः सा तु मसृणा डोम्बिका मता॥

---

1 A दे र्भिं। 2 A ण्डं तु। 3 B दे व्यवहार। 4 A B D ब्रह्मा। 5 A लता। 6 B कै। 7 A मान। 8 A मं यद्वापि। C द्वाप्य। 9 B वसानैः। 10 A थ। 11 C वर्ण। 12 B श्च। C च्छ। 13 A B र्यदच्छ। 14 A पद्मा। D छिन्ना।

नृसिंहसूकरादीनां वर्णना कल्प्यते यतः ।
नर्तकी(नृत्तगी)तेन भाणः स्यादुद्धताङ्गप्रवर्तितः ॥

गजादीनां गतिं तुल्यां कृत्वा प्रवसनं तथा ।
अल्पाविद्धं सुमसृणं तत्प्रस्थानं प्रचक्षते ॥

सख्याः समक्षं पत्युर्यदुद्धतं वृत्तमुच्यते ।
मसृणं तु क्वचिद्धूर्तचरि[1]तं शिल्पकस्तु[2] सः ॥

बालक्रीडानि[3]युद्धानि तथा सूकरसिंहजा ।
धवलादि(ध्वजादिना)कृता क्रीडा यत्र सा भाणि[4]का स्मृता॥

आढ्यप्रायं प्रेक्षणकं[5] स्यात्प्रहेलिकयाऽन्वितम् ।
ऋतुवर्णनसंयुक्तं रामाक्रीडन्तु भाष्यते ॥

मण्डलेन तु यन्नृत्तं तद्रा[6]सकमिति स्मृतम् ।
एककस्तस्य[7] नेता स्याद्गोपस्त्रीणां यथा हरिः ॥

अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुष्षष्टियुगलाद्रासकं मसृणोद्धतम् ॥

## उल्लोप्यकम्

उल्लोप्यकं स्यादेकाङ्कमवमर्शविनाकृतम् ।
निष्प्रवृत्तिविधानञ्च शिल्पकाङ्ग[8]विभूषितम् ॥

हास्यश्रृङ्गारकारुण्ययुक्तमुज्ज्वलवेषवत् ।
बहुपुस्तं च चतुरोज्ज्वल[9]नायकनायिकम् ॥

यथा देवीमहादेवं यथा चोदात्तकुञ्जरम् ।
यस्मिन्नुल्लोप्यकं नाम त्र्यङ्गं गीतं प्रवर्तते ॥

तल्ल[10]क्षणं च गान्धर्वनिर्णये स्पष्टमीरितम् ।

## हल्लीसम्

अथ हल्लीसकं सप्तनवाष्टदशनायिकम् ॥

---

1 A द्धूते चकि । 2 A लिपकन्तु । 3 C दि । 4 A ण्डि । 5 A रणं तु । 6 A हल्ली । 7 A तस्तव । 8 C ङ्गा । 9 D वभूवुस्तदुरोत्थानं यत्र । 10 A B D निर्लक्ष ।

सानुदात्तोक्ति चैकाङ्कं कैशिकीवृत्तिभूषितम् ।
एकाङ्कं वा भवेद्व्यङ्कं विमर्शमुखसन्धिमत् ॥

सगेयलास्यं यतिमत्खण्डताललयान्वितम् ।
एकविश्रामसहितं यथा स्यात्केलिरैवतम्[1] ॥

ललिता दक्षिणाः ख्याता नायकाः पञ्चषा अपि ।
विप्रक्षत्रवणिक्पुत्रास्सचिवायत्तसिद्धयः ॥
द्व्यङ्के मुखावमर्शौ स्त एकाङ्के गर्भनिर्गमः ।

## दुर्मल्लिका

अथ दुर्मल्लिका नाम[2] प्रौढनागर[3]नायिका ॥

चतुरङ्का चतुस्सन्धिर्गर्भसन्धिविनाकृता ।
विटो विलसति स्वैरं प्रथमाङ्केऽत्र[4] (त्रि)नाडिकाः ॥

विदूषको[5] द्वितीयेऽङ्के विलसत्पञ्चनाडिकः ।
पीठमर्दो विहरति तृतीये सप्त नाडिकाः ॥

विटादित्रितयक्रीडा चतुर्थे दश नाडिकः ।
चौर्यरतिं[6] प्रतिभेदं यूनोरनुरागवर्णनं क्वापि ।
यत्र ग्राम्यकथाभिः कुरुते किल दूतिका रहसि ॥

मन्त्रयति च तद्विषयन्यग्जातित्वेन याचते च वसु ।
लब्ध्वापि लब्धुमिच्छति या सा दुर्मल्लिका नाम्ना ॥

एनां दुर्मल्लिकामन्ये प्राहुर्मत्तल्लिकामिति ।
यस्यामुद्भाव्यः स्यात्पुरोहितामात्यतापसादीनाम् ।
प्रारब्धानिर्वाहः सापि च मत्तल्लिका भवति ॥

क्षुद्रकथा मत्तल्लिका येह महाराष्ट्रभाषया भवति ।
गोरोचने च कार्याऽनङ्गवती भावरसविद्या ॥

## मल्लिका

मल्लिका भोगशृङ्गारकैशिकीवृत्तिमन्थरा ।
एकद्व्यङ्कक्र[7]माश्लिष्टविदूषकविटक्रिया ॥

---

1 A त्कैशिकैरतम् । B D त्केलिरेव यत् । 2 B रागा । C राग । 3 A यक । 4 B त्रु । 5 B D कौ । 6 A B C र्यां त्तु । 7 A तद्वक्र्ण ।

गाथाद्विपथकोपेता रथ्यावा[1]सकतालयुक् ।
अनालक्ष्यकथा पूर्वं पश्चादालक्ष्यवस्तुका ॥

गर्भावमर्शहीना च सन्धित्रयसमन्विता ॥

मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु ।
पश्चात्प्रकाशते या सा मणिकुल्यापि मल्लिका ज्ञेया[2] ॥

## कल्पवल्ली

कल्पवल्ली भवेद्धास्य[3]शृङ्गाररसभावयुक्[4] ।
उदात्तनायकोपेता पीठमर्दोपनायका ॥

अस्यां वासकसज्जा स्यान्नायिकाऽथाभिसारिका ।
द्विपदीखण्डगेयाढ्या रथ्यावा[5]सकतालयुक् ॥

लयत्रययुता लास्यदशकेन समन्विता ।
ईदृशी कल्पवल्ली स्याद्यथा माणिक्य[6]वल्लिका ॥

मुखसन्धिप्रतिमुखसन्धिनिर्वहणैर्युता ।
उदात्तवर्णनोत्कर्षा ललितोदात्तनायका ॥

## पारिजातकम्

पारिजातलतैकाङ्कमुखनिर्वहणान्विता ।
वर्णमात्राखण्डतालवती[7] गाथासमन्विता ॥

वीरशृङ्गारभूयिष्ठा देवक्षत्रादिनायका ।
कलहान्तरितावस्थानायिकोदात्तनायका ॥

अथवा भोगिनीस्वीयागणिकानायिकान्विता ।
ताः स्युरष्टौ चतस्रः[8] स्युर्दण्डरासकन[9]र्तनाः (?) ॥

सापसार[10]त्रया चित्रकथागेयसमन्विता ।
क्वचिद्विदूषकक्रीडापरिहासमनोहरा ॥

पारिजातलता सेयं यथा गङ्गातराङ्गिका ।
पारिजातकमित्येव कैश्चिदेषाऽभिधीयते ॥

---

1 B रा । 2 C प्येका । 3 A यद्वा । B द्वास्य 4 A संयुता । 5 D रा । 6 A मणिक । B मणित । 7 A ताला । 8 A सुराष्ट्रवतारस्य । 9 C नायकव । 10 A सावसत्रय । B सापसारमया ।

सट्टकं नाटिकाभेदो नृत्यभेदात्मकं भवेत्।
कैशिकीभारतीयुक्तहीनरौद्ररसादिकम्॥

सर्वसन्धिविहीनं च नाटिकाप्रतिरूपकम्।
शूरसेनमहाराष्ट्रवाच्यभाषादिकल्पितम्॥

अङ्क[1]स्थानीयविच्छेदचतुर्यवनिकान्तरम्।
छादनस्खलनभ्रान्तिनिह्नवादेरसम्भवात्॥

न वदेत्प्राकृतीं भाषां राजेति कतिचिज्जगुः।
मागध्या शौरसेन्या वा वदेद्राजेति केचन॥

नाटिकाप्रतिरूपं यद्विशेषो रूपकस्य तत्।
सट्टकं तेन तस्याहुः भाषां तां प्राकृतीं परे॥

राजशेखरक्लृप्तं तद्यथा कर्पूरमञ्जरी।
प्रकारान्तरतो लक्ष्म रासकस्य परे जगुः॥

अथ रासकमेकाङ्कं सूत्रधारेण वर्जितम्।
सुश्लिष्टनान्दीयुक्तश्च पञ्चपात्रं त्रिसन्धिकम्॥

पूर्णं भाषाविभाषाभिः कैशिकीभारतीयुतम्।
वीथ्यङ्ग[3]मण्डितं मुख्यनायकं ख्यातनायिकम्॥

गर्भावमर्शशून्यं च कलापोद्देशभूषितम्।
उदात्तभावविन्यासभूषितं सोत्तरोत्तरम्॥

एवं[4] लक्षणमुद्दिष्टं रासकस्यात्र कैश्चन।
इति ना[5]नामतेनोक्ता नृत्य[6]भेदाः प्रदर्शिताः॥

वैकल्पिकं लक्ष्म तेषां न क्वचिच्च निषिध्यते।
यथा नियमिता भाषाः संस्कृताद्याः पुरातनैः॥

---

1 A मह। 2 ABD ह्मारतीं। 3 AB D ह्र। 4 A छल। 5 A कतिका। 6 C स्य।

नायिकादिषु पात्रेषु नियमोऽत्र प्रदर्श्यते ।
पाठ्यं तु संस्कृतं नृणामनीचानां कृतात्मनाम् ॥

लिङ्गिनीनां महादेव्या मन्त्रिजावेश्ययोः क्वचित् ।
स्त्रीणां तु प्राकृतं प्रायः शौरसेन्यधमेषु च ॥

पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा ।
यद्देश्यं नीचपात्रं स्यात्तद्देश्यं तस्य भाषितम् ॥

कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः ।
परिव्राण्मुण्डशाक्ये[1]षु चेष्टे(टे)षु[2] क्षत्रियेषु च ॥

विशिष्टाः पर[3]लिङ्गस्थाः संस्कृतं तेषु योजयेत् ।
ऐश्वर्येण प्रमत्तस्य दारिद्र्योपप्लुतस्य च ॥

उत्तम[4]स्यापि पठतः प्राकृतं सम्प्रयोजयेत् ।
अतिरिक्ते[5]षु तत्कार्ये पाठ्यं पुनरुक्तिसंयुक्तम् ॥

राजविप्रविटामात्यसुभटाधीतयोषिताम्[6] ।
नटनर्तकधूर्तानां संस्कृतं पाठ्यमुच्यते ॥

देवदानवगन्धर्वसिद्धनागेशरक्षसाम् ।
कञ्चुकीयप्रतीहारलिङ्गिनीवणिजामपि ॥

विद्याधरीवर्षवरमहादेवीविलासिनाम् ।
योगिनां योगिनीनां च संस्कृतं सम्प्र[7]योजयेत् ॥

छद्मलिङ्गप्रविष्टानां निर्ग्रन्थानां जटावताम् ।
शाक्यचक्रच[8]राणां च संस्कृतं न प्रयोजयेत् ॥

यो वेषविद्यासमयलिङ्ग[9]निष्णातधीर्भवेत् ।
स चक्रच[10]र इत्युक्तः प्रायो वैतण्डिकोऽपि च ॥

1 A काव्ये । 2 A चोक्षेषु । C चाक्येषु । 3 C रि । 4 C न्मत्त । 5 A अनिमित्ते ।
6 A गिनाम् । 7 B न प्र । 8 A ध । 9 B C भङ्गि । 10 A ध ।

अधमानां कुविद्यानामज्ञानामल्पचेतसाम् ।
क्षुत्पीडाविकलाङ्गानां संस्कृतं न प्रयोजयेत् ॥

भाषा या नाय[1]कादीनां तत्तन्नाट्योपयोगिनी ।
परस्परं च वर्ग्याणा[2]माह्वानार्थोऽभिधीयते ॥

नेतुर्या महिषी युक्ता रूपसम्पद्गुणादिभिः ।
तद्भृत्यवनितावर्गैः वक्तव्या भट्टिनीति सा ॥

यदृच्छाधिगमे प्रायः दुर्लभस्यैव वस्तुनः ।
नायिका वृत्तिसन्तोषान्नित्यममंमह इत्यलम् ॥

येन केनापि मान्ये[3]न प्रार्थ्यमानस्य वस्तुनः ।
अङ्गीकारेषु वक्तव्यं बाढमित्येव नायकैः ॥

बहुधा चिन्त्यमानस्य दुर्विज्ञेयस्य वस्तुनः ।
सहसा ज्ञानसम्पत्तावा इत्यार्यै[4]र्निगद्यते ॥

कान्ते[5]ति नायको ब्रूते दक्षिणः पूर्ववल्लभः ।
शठः स्व[6]स्यानभिप्रेतां प्रियेति वदति स्त्रियम् ॥

सावज्ञमङ्गीकरणे तज्ज्ञैरामेति कथ्यते ।
जातेति पुत्रवात्सल्यान्मात्रा पुत्रोऽभिधीयते ॥

हुमि[7]त्यवज्ञाविद्वेषकामचारादिभाषणे ।
हुमित्येवाभिधातव्यं सर्वैरिन्द्रिय[8]गोपने ॥

भर्तृमाताऽ[9]ङ्गनाभिर्वा चेटीभिर्गणिकाऽथवा ।
वार्तासु सर्वदा काम[10]मज्जुकेत्यभिधीयते ॥

अभीष्टवस्तुसंसिद्धिविधावन्येन चोदितः ।
प्रथमः कल्प इत्येव प्रवदत्यासनायकः ॥

---

1 A यां नाट । 2 B वर्गाणां । C रस्यवर्गा । D रच्च वर्णानां । 3 B मत्यैं । 4 B है । D हे । 5 A कन्ये । 6 A वशस्वे । 7 A हुंहे । । 8 A ज्ञित । 9 C त्रा । 10 C व्यक्त ।

आयुष्मन्निति वक्तव्यो रथी सारथिना सदा ।
समीपावस्थितेऽप्येवमनेकेष्वासबन्धु[1]षु ॥

मनसा यन्न[2]रो वक्ति स्वगतं तन्निगद्यते ।
मनस्यवस्थितं कार्यं पुरतः पार्श्ववर्तिनाम् ॥

निश्शङ्कमुच्यते यत्तु तत्प्रकाशं विदुर्बुधाः ।
त्रिपताकं करं कृत्वा यदन्यस्य मनोगतम् ॥

अप्रकाशं नरो वक्ति तज्जनान्तिकमुच्यते ।
अप्रत्यक्षेण पात्रेण सह रङ्गस्थितो नरः ॥

यद्वक्त्य[3]भिमुखीकृत्य तदाकाश उदाहृतम् ।
विद्यमानेषु मनसि कार्यजातेष्वनेकधा ॥

तदोपद[4]मित्याहुः प्रधानं यन्मनी[5]षिणः ? ।
भयाहङ्कारसम्मानमोहकण्ठग्रहादिषु ॥

हीहीशब्दः[6] प्रयोक्तव्यः चेटचेटीविदूषकैः ।
पश्चात्तापप्रवासोर्वीचलनप्राणहानिषु ॥

नायिकाहृदये क्षेपः[7] पुरोभाग इति स्मृतः ।
नियमेनैव वक्तव्या हञ्जेति परिचारिका ॥

गणिकाभिरथाचार्यो भीमार्ये[8]ति निगद्यते ।
नरो (टो)[9] विदूषकप्रायो यो नरः स वधूजनैः ॥

अङ्ग इत्येव वक्तव्यो हीनोऽपि ब्राह्मणो यदि ।
पीठमर्दशठक्रूरधूर्तचेटीविटादिभिः ॥

निन्दायामथवा गर्वे ई शब्दः सम्प्र[10]युज्यते ।
त्रिविधं ह्यक्षरं काव्ये विज्ञेयं नाटकाश्रयम् ॥

---

1 A बुद्धि । 2 B यः पु । 3 A वदत्य । 4 A वत । 5 A पृया यत्तन्म । 6 A ि शब्दो हि । 7 B योत्कम्पः । 8 C ये । 9 C नृदो । 10 B ईश. शन्दः प्र ।

ह्रस्वदीर्घप्लुतं चैव रसभावविभावक[1]म् ।
स्मृते चासूयि[2]ते चैव तथा च परिदेविते ॥

पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ।
आकारश्च स्मृते कार्यमीकारश्चाप्यसूयिते ॥

परिदेविते च ह्राकारमोङ्कारोऽध्ययने तथा ।
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ॥

पाठ्ययोगेषु सर्वेषु ह्यक्षराणि प्रयोजयेत् ।
लघ्वक्षरप्रायकृतमुपमारूपकाश्रयम् ॥

काव्यं कार्यं तु नाट्यज्ञैर्वीररौद्राद्भुताश्रयम् ।
गुर्वक्षरप्रायकृतं बीभत्से करुणेऽपि च ॥

कदाचिद्रौद्रवीराभ्यां[3] क्रोधामर्षणजं भवेत् ।
रूपकादिसमावृत्त[4]मार्यावृत्तसमाश्रयम् ॥

शृङ्गारे च रसे कार्यं काव्यं यन्नाटकाश्रयम् ।
[5]उत्तरोत्तरसंयुक्तं वीरे काव्यं तु यद्भवेत् ॥

जगत्यतिजगत्योस्तत्संकृत्या[6] वापि तद्भवेत् ।
तथैव युद्धसम्फेटावुत्कृत्या[7] सम्प्रकीर्तितौ ॥

करुणे शक्करी[8] ज्ञेया तथैवातिधृतिर्भवेत् ।
यद्वीरे कीर्तितं छन्दः तद्रौद्रेऽपि प्रयोजयेत् ॥

शेषाणां चा[9]र्थयोगेन छन्दः कार्यं प्रयोक्तृभिः ।
उपसर्गविशेषाः स्युर्नाटकाद्युपयोगिनः ॥

कवेर्विवक्षितार्थस्य सूचकांस्तान्ब्रुवे[10]ऽधुना ।
समुच्चया नि[11]पातानामित्येवं के[12]चिदूचिरे ॥

निरर्थकास्तु शब्दा ये उपसर्गा इति स्मृताः ।
ते परस्परसंसर्गाद्धातुसंसर्गतः क्वचित् ॥

---

1 A B वित । 2 A वा सूचि । 3 A भ्याम । 4 A B वर्त । 5 C omits this line । 6 A संस्कृत्या । 7 A म्भेदावुत्कृत्याः । 8 C त्वपरिज्ञे । 9 B षेणान्वर्थ । 10 A न्त्रवदे । B र्थान्ब्रुवे । 11 C D यानि । 12 A B तान्के ।

तत्तदर्थविशेषस्य वाचकाः स्युर्न तु स्वतः ।
प्रत्यभिज्ञात दृष्टार्थस्मृतेषु स्यादये इति ॥

प्रार्थनाभिमुखीकारचिन्ताह्वानोपलब्धिषु ।
अये खल्वाभिमुख्ये च क्रोधे हर्षवितर्कयोः ॥

यदृच्छानुनयप्रीतिविषादो[1]द्वाक्यसिद्धि[3]षु ।
प्रागुक्तसूचने प्रश्ने विचारे नन्वितीर्यते ॥

सम्भाव्यातीतसिद्धार्थचिन्तासु ननु खल्विति ।
अपि किञ्चिदिति प्रश्ने स्वल्पे हेयेऽप्यनादरे ॥

अपि नाम प्रसिद्धं स्यादपि खल्विति काकुवाक् ।
किमिति प्रश्नयोगे स्याद्गौरवे लाघवेऽपि च ॥

किञ्चिच किमप्रीति स्यादौदासीन्यविचारयोः ।
वृत्ते यदपि किञ्चित्स्यात्प्रसिद्धे प्रार्थनाल्पयोः ॥

कर्तव्येऽपि च वक्तव्ये चिन्तायामपि किञ्चन ।
सापेक्षसिद्धकथने प्रसिद्धे गोपनेऽपि च ॥

साम्ये प्रसिद्धे सम्भाव्ये स्वाभिलाषवितर्कयोः ।
अपि नाम भवेत्प्रश्नो वृत्तवर्तिष्यमाणयोः ॥

काकामपि खलु प्रश्ने[4] प्रहर्षे प्रग्रहेऽपि च ।
विस्मये यदि किञ्चित्स्याद्वितर्केऽनुशयेऽपि च ॥

उदर्कचिन्ता कर्तव्या काम[5]कारपराभवे[6]( ? ) ।
यदि नाम प्रसिद्धे स्याद्यदुतेति च वा(विचा)रणे ॥

प्रवृत्ताद[7]न्यचिन्तायां तद्यद्धेति[8] निश्चये ।
यदि किञ्चन संसिद्धे समृद्धे साम्यबाध्य[9]योः ॥

1 A य । 2 A भाव्यो । 3 A नीति । 4 C श्नो । 5 A कु । 6 B D वेत् । 7 A व ।
8 B D यद्वेतिवि । 9 A भ्यतौद्धयोः । B श्यंसिद्धयोः ।

यदिदं खल्विति गते प्रभूते हृद्गते कृते।
कारणेऽपि कथं तर्के विस्मये सम्पदुद्भवे ॥

इष्टार्थोपगमेऽशक्ये भाविकार्यप्रयोजने[1]।
नूनं प्रायोऽसमासेऽर्थे नूनं खल्विति च[2] स्मृते ॥

प्रायः खलु परामर्शे कृत्याकृत्यविचारणे।
किन्तु खल्विति सम्भाव्ये किं खलु प्रश्नतर्कयोः ॥

तद्यावदिति निष्कर्षे वृत्तवर्तिष्यमाणयोः।
आज्ञाकृत्ये यावदहं यावत्खल्विति चिन्तने ॥

यावन्नामेति साध्ये स्याद्यावन्नामेति निश्चये।
यावदागामिकाले स्यात्कर्मारम्भावसानयोः ॥

तद्यावदिति सन्देशे तन्निर्देश[3]नियोगयोः।
कर्मविघ्नवितर्के स्याद्दुष्करेऽपि कथंचन ॥

इत्थमन्योन्यसंसर्गादुपसर्गाः पृथक्पृथक्।
यथाविशेषार्थकृतस्तथा कविभिरूह्यताम् ॥

नायकादेः परीवारसहितस्य च नाटके।
पात्रस्य योग्यनामानि शास्त्रोक्तान्यभिदध्महे[4] ॥

प्रतापवीर्यविजयमानविक्रमसाहसाः।
पराक्रमादयोऽन्तेऽङ्के[5] भूषणोत्तंसशेखराः ॥

अङ्कुरा इति नेतृणामाह्वया विजयावहाः।
धीरोद्धतादयश्चात्र नायकाः कविभिः स्मृताः ॥

दिव्या कुलस्त्री गणिकेत्येतास्तेषां च नायिकाः।
ताश्च वीरावती वीरसेनाख्या विजयाह्वयाः ॥

---

1 B गतः। 2 A वि। 3 C देशे। 4 B शये। 5 A वसानके।

भोगावती कान्तिमती कमला कामवल्लरी ।
इत्यादयो भोगिनीनामाख्याः स्युर्नाटकाश्रयाः ॥

दत्तांसेनान्तनामानि वेश्यानां कल्पयेत्सुधीः ।
गम्भीरार्थानि नामानि चोत्तमानां प्रयोजयेत् ॥

य[1]स्मान्नामानुसदृशं कर्म चैषां भविष्यति ।
महिषी भोगिनी नाम्ना व्याहार्या दिव्ययोषितः ॥

सिन्धुदत्तादि[2]नामानो वणिजो[3] नाटकाश्रयाः ।
शशिलेखा कुन्द[4]लेखा मदलेखा मनोहरा ॥

कर्पूरमञ्जरीलेखा रैवत्या[5](चन्द्रलेखेत्या)व्याह्वयाः स्मृताः ।
लताकुसुमनामानि चेटीनामानि कारयेत् ॥

सिद्धानन्ददृष्टिसिद्ध[6]सुखाख्या योगिनः स्मृताः ।
यो[7]गसुन्दरिका वंशप्रभा विकटमुद्रिका[8] ॥

कल्पसुन्दरिकेत्याख्या योगिन्यो नाटकाश्रयाः ।
कालप्रियश्चित्रवर्णः कपटेश्वर इत्यपि ॥

गन्धके[9]श्वर इत्याख्या नाटके नान्दिदेवताः ।
वर्णकश्च प्रस्तरको नन्दकः करभोऽपि च ॥

तथा भासुरकश्चेति व्याहार्या हीनपूरुषाः ।
गोमायुको गोण्डक(मुख)श्च बिल्वकश्चित्रकोऽपि च ॥

इत्यादिनामभिर्भाष्याश्चण्डाला नाटकाश्रयाः ।
चित्राङ्गदो रत्नचूडः तथा रत्नशिखण्डकः ॥

इत्यादिनामभिर्वाच्या नाट्ये विद्याधराश्च ये ।
कपालशेखराद्याख्याः पाषण्डा नाटकाश्रयाः ॥

---

1 B त। 2 C दत्तक D सिद्धा दत्ता। 3 A विज्ञेया। 4 C कान्ति। 5 A वद्यात्या। 6 B नां हष्टिबद्ध। 7 A B D भो। 8 C वटकमूलिका B ताः। 9 D गण्डाके। or गण्डेके।

निर्ग्रन्थो गन्ध[1]को वैद्यः कायस्थश्च कृषीवलः ।
शाक्यश्च कारुर्वन्दी च स्मृता ह्यधमनायकाः ॥

क्षीरोदस्तैत्तिलश्चैव जाल्म[2]लिविंन[3]यन्धरः ।
इत्यादिनामभिर्भाष्या नाट्ये कञ्चुकिनो जनाः ॥

वात्स्यायनश्च शाकल्यो मौद्गल्यश्च वसन्तकः ।
गालवश्चेत्येवमादिनामानः स्युर्विदूषकाः ॥

विपुला वत्सलेत्यादि नाम धात्र्याः प्रकल्पयेत् ।
हिरण्यशृङ्गोऽञ्जनाद्रिरित्याख्याः स्युर्महीधराः ॥

आर्येति वाच्या विद्वांसो ब्राह्मणा गुरवोऽपि च ।
भगवन्निति वाच्याः स्युर्देवता मुनयोऽपि च ॥

सम्भाष्याः शाक्यनिर्ग्रन्था[4] भदन्तेति प्रयोक्तृभिः ।
सेनापतिरमात्यश्च स्यालो भावेति भाष्यते ॥

नाट्यवित्कर्मकुशलः किञ्चिन्न्यूनस्तु मारिषः ।
समानस्तु वयस्येति सखे हण्डेति भाष्यते ॥

वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः ।
शिष्यश्चार्थोपकारी च व्याहार्यो गुरुभिस्सदा ॥

स्वभावचपलो नेतुः प्रियायाः कलहप्रियः ।
दक्षिणः कार्यविच्चैव सर्वदा भोजनप्रियः ॥

सर्वभाषाविकल्पज्ञः सर्वेषां परिहासकः ।
सत्यासत्य[7]वचोवक्ता पण्डितः स्याद्विदूषकः ॥

अनिबन्धनमर्थानां सतामपि विशेषतः ।
निबन्धनं पदार्थानामसतामपि तत्त्वतः ॥

---

1 B निशान्धोऽनन्ध । 2 A ज । 3 A B C विज । 4 C ण्ड्रा । 5 C ह्रा । 6 B शेष
7 C प्रणांसक ।

सतो निबन्धनं तद्वदसतोऽप्यनिबन्धनम् ।
एवं कवीनां समयस्त्रिधैव परिकल्प्यते ॥

वसन्ते चूतपुष्पादेरनुत्पा[1]दो न दुष्यति ।
अनिबन्धनमेतत्स्यात्सतोऽप्यर्थस्य[2] तत्त्वतः ॥

समुद्रनद्योः[3] शैवालपद्मादेरप्यवर्णनम् ।
अयशःपापयोः कार्ष्ण्यं हासकीर्त्योश्च शुक्लता ॥

य[4]दप्यवर्णनीयं स्याल्लौहित्यं क्रोधरागयोः ।
भूभृन्मात्रे सुवर्णादिवर्णनं न नि[6]बध्यते ॥

उदकाशयमात्रेऽपि हंसादिर्नैव वर्ण्यते ।
[7]कुमुदादिविकासस्तु रात्रावेवेति वर्ण्यते ॥

शिखण्डिताण्डवं वर्षास्वेवेति परिकल्प्यते ।
अथ शिल्पकडोम्ब्योस्त्वङ्गानां लक्षणमुच्यते ॥

उत्कण्ठा माधवस्यापि तत्पश्येयमितीर्यते ।
अवहित्थं तदेव स्याद्यत्पाणिर्न निवारितः ॥

इत्यादि(?)प्रणयक्रोधाच्छादनं तद्विभाव्यते ।
स प्रयत्नोऽ[8]निरुद्धस्य दर्शने चित्रलेखिता[9] ॥

दम्पत्योर्योग्यसम्पर्कप्रार्थनाऽऽशंसनं भवेत् ।
यथा कुलेन कान्त्या च वयसेत्यादि कथ्यते ॥

वितर्कः कास्विदित्यादि दुष्यन्तवचनं यथा ।
किमेषा कौमुदी किंवा लावण्यसरसी सखे ॥

इत्यादि रामाराधायां[10] संशयः कृष्णभाषिते ।
विशेषोऽनुशयोक्तेर्यस्सन्ताप इति कथ्यते ॥

---

1 A षा। 2 A र्थेन। 3 A मध्ये। 4 A स। 5 B D बभ्रू मातु A भूभृण्मा। A तमि। 7 A Comit this line। 8 C प्रेयसो। 9 C का। 10 A स्याभिरामराधायां।

तं विना कैकयीपुत्रमिति रामेण भाषितम्।
उद्वेगो हा हतोऽस्मीति कपिंजलवचो यथा॥
मौढ्यं स्रगि[1]यमित्यादि यदजेनापि भाषितम्।
अङ्गानि चन्दनाम्भोभिः सिञ्चेत्यादिवचो यथा॥
वैवर्ण्यं यन्मनोऽङ्गानां तदालस्यमुदाहृतम्।
तद्दृश्यते[2] परीवारप्रार्थनाभिः क्रियास्विति॥
मनसश्चलनं कम्पोऽकाण्डेनाकामतो भवेत्।
अकामोपनतेनैव साधोरित्यादिनोच्यते॥
यथा वामेन वानीरमि[3]त्याद्यनुगतिस्स्मृता।
यथैव कुलपत्यङ्के[4] दोर्दण्डाः के[5]ऽत्ति विस्मयः॥
प्राणैस्तपोभिरित्यादि यद्वचः साधनं भवेत्।
आश्वासनं विह्वलस्य यत्स उच्छ्वास ईरितः॥
प्रीतिर्नाम सदस्यानामित्यादिवचनं यथा।
क्रूरक्रमकृतत्रास[6]: सुकुमारस्य वस्तुनः॥
यत्स आतङ्क इत्युक्तो[7] राहोश्चन्द्रकला[8]दिवत्।
यथा सीतापि तत्रासे[9]त्यादावपि च दृश्यते॥
शून्यता विस्मृतिः सर्वकर्मणां सर्वदा स्मृता।
माधवस्य परिच्छेदातीत इत्यत्र दृश्यते[10]॥
प्रलोभनं गुणाख्यानपूर्वमि[11]ष्टार्थलम्बनम्।
विजित्य पृथिवीं सर्वामित्यादौ तद्विलोक्यते॥
नाट्यं स्वपौरुषोत्कर्षावेशस्य प्रतिपादनम्।
तद्रामोऽहं यदीत्यादि महानाटककल्पितम्॥

1 A स्वकी। 2 A ददृश्य। 3 A B रइ। 4 B C कौलपत्यन्ते। 5 A B C हे। 6 B C D भयत्रा। 7 A उत्कोपो 8 A रादि। 9 D सिमाकुतत्रा। 10 A दृव्यक्तिर्न भवतीतिवत्। 11 A वा॰ ?।

सम्फेटः[1] कथितः सद्भिः क्रोधादिभिरतिक्रमः ।
यथार्घ्यमर्घ्यमित्यादौ जामदग्न्यव्यतिक्रमः ॥

शोकप्रणोदनं वाक्यं यत्स आश्वास उच्यते ।
शपे सत्येन ते देवि क्षिप्रमेष्यति राघवः ॥

चमूं प्रकर्षन् मह[2]तीमित्यादि हनुमद्वचः ।
सन्तोषातिशयो हर्षाद्व्यापारो निस्त्रपाभरः ॥

तं दृष्ट्वा शत्रुहन्तारमित्यादौ स तु दृश्यते ।
मदप्रकर्षः प्रमदः पुरस्तात्स च वर्णितः ॥

प्रियप्राये[3]ति वाक्यादौ मदस्त्रैण उदाहृतः ।
प्रमादः स्यात्पिशाचादेर्यदृच्छागमजं भयम् ॥

सत्त्वान्तैः कल्पितेत्यादि मालतीमाधवादिवाक्[4] ।
योग्यतापादनं युक्तिरन्योन्यस्य पदार्थयोः ॥

तुल्यशीलवयोजातामित्यादौ तद्विलोक्यते ।
गुणैरतिशयारोपः पदार्थस्य प्ररोचना ॥

नेदं मु[5]खमितीत्यादौ दृश्यते सा प्ररोचना ।
स्तुतिर्विद्याभिजात्यादेः प्रशस्तिरिति कथ्यते ॥

उत्पत्तिर्देवयजनादित्यादौ सा विलोक्यते ।
इत्थमर्थान्विचार्याथ शिल्पका[6]ङ्गानि योजयेत् ॥

राज्याद्भ्रंशो[7]वने वासेत्यादौ विन्यास उच्यते ।
कार्याख्यानमुपन्यास इति विद्वद्भिरुच्यते ॥

एष कञ्चुकिना तातस्तिष्ठतीत्यादिनोच्यते ।
पापैर्निवृत्तिरेषा[8]त्र विबोध इति कथ्यते ॥

---

1 B संवेगः । 2 A जविनीं । 3 B प्रियप्रिये । C पिपीक्ये । 4 B वत् । 5 A सीदन्मु ।
6 B घ्रान्य । 7 B भ्रष्टो । 8 A B C चा क्षलेवृत्तिरेषा ।

सन्देहनिर्णयो जात इत्यादौ सा विलोक्यते[1] ।
........................................................................... ॥

सा व्याहृता प्रतिवचो न सन्दध इतीर्यते ।
निदर्शनस्योपन्यासो ह्यनुवृत्तिरुदाहृता ॥

नीलमेघाश्रिता विद्युदित्यादौ सा विलोक्यताम् ।
क्रियासमाप्तिः संहारः फलस्यावाप्तिरेव वा ॥

देवताभ्यो वरं प्राप्येत्यादौ संहार इष्यते ।
लीला[3]दिभिरुपालम्भः समर्पणमुदाहृतम् ॥

धन्या केयं स्थितेत्यादौ दृश्यते तत्समर्पणम् ।
भाण्य[4](डोम्ब्य)ङ्गान्येवमालोच्य यथार्थानि प्रयोजयेत् ॥

देवा धीरोद्धता ज्ञेया धीरोदात्ता नृपादयः ।
अमात्यसेनापतयो ललिताश्च स्वभावतः ॥

धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजश्च ये ।
कथारसवशात्तेऽपि व्य[5]त्यस्ताः स्युः क्वचित्कचित् ॥

नायकानामथैतेषां चत्वारः स्युर्विदूषकाः ।
विदूषकस्तु[6] देवानां सत्यवाक्च त्रिकालवित् ॥

कृत्याकृत्यविशेषज्ञ ऊहापोहविशारदः ।
यथादृष्टार्थवादी च नाट्यवित्परिहासकः ॥

विदूषकस्तु भूपानामग्राम्यपरिहासकः ।
अर्थेषु स्त्रीषु[7] शुद्धश्च देवीपरिजनप्रियः ॥

ईर्ष्याकलहकारी स्यादन्तःपुरचरः सदा ।
नर्मवित्प्रणयक्रोधे[8] देव्याः किञ्चित्प्रसादकः ॥

भूपतेर्भोगिनीनां च मिथः प्रीति रतिं तथा[9] ।
क्वचिच्च घटयत्येव क्वचिद्विघटयत्यपि ॥

---

1 one line is lost after this in all Mss 2 A B omit three lines
3 B व्रीडा । 4 A बाह्य । 5 B प्र । 6 A श्च । 7 A त्रिषु । 8 A क्रुद्धे । B क्रुद्धो ।
9 C तिकरस्तथा । D प्रीतिरतिर्यथा ।

विदूषकश्च भूपानामेवमादिगुणो भवेत् ।
अश्लीलवाक्च दम्पत्योरपराधं व्यनक्ति च ॥

भक्ष्याभक्ष्यप्रियो नित्यं मर्म[1]स्पृङ्नर्म वक्ति च ।
अर्थलाभे प्रीतिदानं[2] रमयत्येव भोगिनी:[3] ॥

परिहासप्रायवाक्यः परिहासकथारुचिः ।
एवमादिरमात्यादेर्विदूषकगुणक्रमः ॥

शठो विरूपवेषश्च विरूपाङ्गवचःक्रमः ।
विरूपपरिहासश्च विरूपाभिनयान्वितः ॥

इत्यादिभिर्गुणैर्युक्तो वणिजश्च विदूषकः ॥
दिव्यमर्त्यमयी यत्र क्रियते कविभिः कथा ।
आख्यायिकैव सोच्छ्वासाऽथाङ्कावन्दुरिति स्मृता[4](?) ॥

यत्र श्रुती[5]तिहासार्थाः पेशला वाप्यपेशलाः ।
निबद्धा[6] वर्णनोपेताः सर्गबन्धः स इ[7]ष्यते ॥

सर्गबन्धेन तुल्यो यः[8] प्राकृतेन निबध्यते ।
आश्वासबन्धः स इति सेतुबन्धवदुच्यते ॥

अपभ्रंशेन बद्धो यः मात्राच्छन्दोभिरन्वितः ।
स सन्धिबन्धो विज्ञेयो यथाऽब्धिमथनादिकः[9] ॥

वृत्तान्ता विप्रकीर्णाः स्युः संहिता यत्र कोविदैः ।
सा संहितेत्यभिहिता रघुवंशो यथा कृतः ॥

यत्र श्लोककृतो युक्तिसमुदायो रसान्वितः ।
एकप्रघट्टके सो[10]ऽयं सङ्घात इति कथ्यते ॥

---

1 A द। 2 A हस्य। 3 B नि। 4 B D साकाचापुरिति स्मृता। 5 A स्युरि। 6 B न्धा। 7 A न्धे स। B न्धेन। 8 A ल्योऽयं। 9 B D तः। 10 B तत्प्रकट्टके सैको।

नानाप्रघट्टकैर्बद्धः कोश इत्यभिधीयते ।
आख्यायिका च शास्त्रं च गद्येनैवाभिधीयते ॥

महाका[1]व्यादि पद्येन ताभ्यां चम्पूर्निबध्यते ।
प्राकृतेन कृते काव्ये लम्बच्छेद[2]ः प्रशस्यते ॥

विवक्षितार्थक्रमवत्कोशे पद्धतिरिष्यते ।
मन्त्रार्थगुम्फनप्राये सन्दर्भे पटलं[3] भवेत् ॥

यत्र लक्षणमुच्येत परिच्छेदोऽत्र ल[4]क्ष्यते ।
ग्रन्थस्य दुर्बोधार्थस्य व्याख्या यत्राभिधीयते ॥

तत्राधिकार इति च[5] विच्छेदः कथ्यते बुधैः ।
शास्त्रेषु तत्तदर्थस्य नाम्ना वाद इतीरितः ॥

अध्यायैर्वा पर्वभिर्वा पुराण[6]च्छेदकल्पना ।
अध्यायैरितिहासादौ विच्छेदः कथ्यते बुधैः ॥

उच्छ्वासाश्वासविच्छेदग्रन्थाः स्युर्यमकादयः ।
अङ्कच्छेदो विधातव्यः प्रबन्धेऽभिनयात्मके ॥

इत्यादिभेदा दृश्यन्ते विच्छेदस्य क्वचित्क्वचित् ।
केचिद्दर्शनसिद्धाश्च केचित्सामयिका अपि ॥

इत्यादि सर्वमवधार्य कविः प्रबन्धं
कुर्याद्यथा बुधजनः शृणुयात्सुखेन ।

विद्वज्जनश्रवणवर्त्मसुखात्प्र[7]बन्धो
नेतुः कवेरपि विधास्यति भुक्तिमुक्ती ॥

इति श्रीशारदातनयविरचिते भावप्रकाशने
नृत्यभेदस्वरूपप्रकारनिर्णयो
नाम नवमोऽधिकारः ।

---

1 A नाक्का । 2 B D प्राकृतेन तु काव्येन लंभच्छेद् । 3 A ऽवजलं । 4 B व । 5 B हि । 6 पैः । 7 A बं ।

॥ श्रीः ॥

# अथ दशमोऽधिकारः ।



[1]उक्ता नाट्यस्य नृत्तस्य भेदाः सर्वे यथार्थतः ।
भरतादिभिराचार्यैः प्रणीतेनैव वर्त्मना ॥

मार्गदेशीविभागेन ते द्वि[2]धा परिकीर्तिताः ।
तेषां प्रबन्धभेदानां प्रयोगक्रम उच्यते ॥

पुरा मनुर्मही[3]पालः सप्तद्वीपवतीं[4] भुवम् ।
पालयन्दुर्भरेणास्या भारेण श्रान्तचेतनः ॥

केनास्य भूमिभारस्य विश्रान्तिसुखमाप्नुयाम् ।
इति सञ्चिन्त्य पितरं सवितारमुदैक्षत ॥

तदैवाभ्यागमत्तत्र भास्करः पुत्रवत्सलः ।
मनुर्न्यवेदयत्तस्मै भूभारक्लेशमात्मनः ॥

स मनोर्भारखिन्नस्य विश्रामोपायमब्रवीत् ।
पुरा दुग्धाब्धिनाथस्य नाभीकमलसम्भवः ॥

ब्रह्माऽसृजदिमान् लोकान् जङ्गमस्थावरात्मकान् ।
एतेषां पालनायासव्यापारपरिखेदितः ॥

विश्रान्तिसुखमन्विच्छन्नुपागच्छच्छ्रियः पतिम् ।
प्रजापालनखेदस्य विश्रामाय व्यजिज्ञपत् ॥

---

1 C omits three lines 2 A तद्दि । 3 B वै भूपा । 4 B पतिः ।

अचिन्तयद्देवदेवः[1]श्रान्तं वीक्ष्यात्मसम्भवम्।
के[2]नैवास्य विनोदेन विश्रामः सम्भवेदिति ॥

विचिन्त्य भावं स्वक्षेत्र[3]भाविनं विधिम[4]ब्रवीत्।
गच्छ ब्रह्मन् पुरारातिमम्बिकापतिमीश्वरम् ॥

स ते विश्रान्तिसुखदमुपाय[5]मुपदेक्ष्यति।
इत्थमाज्ञा[6]पितो ब्रह्मा देवदेवमुमापतिम्[7] ॥

अभिष्टूयात्मनः खेदं सर्वं तस्मै व्यजिज्ञपत्
विज्ञाय शम्भुस्तत्खेदं नन्दिकेश्वरमभ्यधात् ॥

मत्सकाशादधीतं त्वं नाट्यवेदमशेषतः।
अध्यापयैनं ब्रह्माणं सप्रयोगं सविस्तरम् ॥

स तथेत्यब्ज[8]जन्मानमध्यापयदशेषतः।
अध्याप्यावोचदे[9]तस्य वेदस्यैव प्रयोगतः ॥

जगतां पालनायासविश्रान्तिसुखमाप्नुहि।
इत्थं स नन्दिनाऽऽज्ञप्तः[10]समागम्य स्वमन्दिरम् ॥

नाट्यवेदप्रयोक्तारं भारतीसहितोऽस्मरत्।
स्मृतमात्रे मुनिः कश्चिच्छिष्यैः पञ्चभिरन्वितः ॥

पुरोऽवतस्थे भारत्या सहितस्याब्जजन्मनः।
तानब्रवीन्नाट्यवेदं भरतेति पितामहः ॥

तेऽधीत्य नाट्यवेदं तत्प्रयोगांश्च पृथग्विधान्।
पुरावृत्तानि देवानां प्रबन्धेषूपदिश्य ते[11] ॥

रसैर्भावैरभिनयैः प्रयोगैश्च पृथग्विधैः।
नाट्यवेदोदितैः सम्यक्पद्मयोनिमतूतुषन् ॥

---

1 A B च्च देवेश। 2 A B C ते। 3 A स्यात्क्षात्रं। 4 B र। 5 A विनोद। 6 A ख्या। 7 C पागमत्। 8 B C D म्बु। 9 A अध्यवोचचै। 10 B सानन्दिनाज्ञप्ता। 11 B षेत्र्यच।

तुष्टस्तेभ्यो वरं प्रादादभीष्टं पद्मविष्टरः ।
नाट्यवेदमिमं यस्माद्भरतेति मयेरितम् ॥

तस्माद्भरतनामानो भविष्यथ जगत्त्रये ।
नाट्यवेदोऽपि भवतां नाम्ना ख्यातिं गमिष्यति ॥

इत्यादिश्य ततो ब्रह्मा तैरेव भरतैः सह ।
विनोदयति लोकानां रक्षाव्यसनजं श्रमम् ॥

त्वमप्याराध्य तं देवं मनो ब्रह्माणमच्युतम् ।
विज्ञाप्य वसुधाभारक्लेशविश्रामहेतवे ॥

तेन प्रणीतैर्भरतप्रयोगैर्भुवि[1]कल्पितैः ।
आत्मानं भूभरश्रान्तं विनोदय यथासुखम् ॥

इत्थमादिश्य च मनुं[2] दिनेशस्त्रिदिवं ययौ ।
मनुर्ब्रह्मसदोऽभ्येत्य प्रणिपत्य पितामहम् ॥

आत्मनो भूभरश्रान्तिं व्यजिज्ञिपदशेषतः ।
चतुर्मुखोऽपि विज्ञाय मनोर्भूमिभरक्लमम् ॥

आहूय भरतान् सर्वानिदं वचनमब्रवीत् ।
यात यूयं महीं विप्रा मनुना त्रिदिवादितः ॥

भारतं वर्षमाश्रित्य वर्तध्वं मनुना सह ।
इति सम्योदितास्तेन भरताः पद्मयोनिना ॥

अयोध्यां मानवेन्द्रेण मनुना सार्धमाययुः[3] ।
तत्र राजर्षिचरितं पुरा कल्पान्तरे कृतम् ॥

प्रबन्धेषूपदि[4]श्यैतत्तत्तन्नेतृपरिच्छदम् ।
रसैर्भावैरभिनयैः प्रयोगैश्च विचित्रितैः ॥

---

1 C बंहु । 2 A इत्यादिश्य मनुः पुत्रं । 3B मध्ययुः । 4 B, प्रचण्डेषूपवे ।

नाट्यवेदोपदिष्टेन सदा सङ्गीतवर्त्मना ।
भूभारवहनश्रान्तिं मनोः सम्यगपानुदन्[1] ॥

परिगृह्य ततः शिष्या[2]न्भरतान्कांश्चन द्विजान् ।
देशे देशे नरेन्द्राणां विनोदं तैरचीकरत् ॥

तत्र प्रयुक्तसङ्गीतं देशरीतिपरिष्कृतम् ।
प्रयोगाणां च वैचित्र्याद्देशीत्याख्यामुपागमत् ॥

नाट्यवेदाच्च भरताः सारमुद्धृत्य सर्वतः ।
सङ्ग्रहं सुप्रयोगार्हं मनुना प्रार्थिता व्यधुः ॥

ए[3]कं द्वादशसाहस्रैः श्लोकैरेकं तदर्धतः ।
षड्भिः श्लोकसहस्रैर्यो नाट्यवेदस्य सङ्ग्रहः ॥

[4]भरतैर्नामतस्तेषां प्रख्यातो भरताह्वयः ।
यदिदं भारते वर्षे मनुना सुप्रकाशितम् ॥

सङ्गीतशास्त्रं सर्वत्र राज्ञां विश्रान्तिसौख्यदम् ।
तस्मादिदं[5]विनोदार्थं राज्ञामेव पुरा कृ[6]तम् ॥

विश्रमाय महीभारविश्रान्तानां सुखप्रदम् ।
अस्य सङ्गीतशास्त्रस्य प्रयोक्तॄणां च लक्षणम् ॥

स्वरूपं कर्म चैतेषां यथावत्प्रतिपाद्यते ।
सूत्रधारः प्रथमतो नटः पश्चात्ततो नटी ॥

स पारिपार्श्विकः पश्चात्ततस्ते च कुशीलवाः ।
विदूषकेण सहिता नाट्यकर्मो[7]पयोगिनः ॥

नाट्यकर्मप्रयोक्ता यः स तद्विद्भिरुदीर्यते ।
शैलूषो भरतो भावो नट इत्यादिनामभिः ॥

1 B नुदत् । C सदत् । 2 D च तच्छिष्या । 3 C सा । 4 D भा । 5 A दुःख । 6 C रक्ष । 7 C वेदो ।

नानाशीलस्य लोकस्य भावान् भास[1]यतीह यः ।
भूमिकास्ताः प्रविश्यातः[2] शैलूष इति कथ्यते ॥

भाषा[3]वर्णोपकरणैर्नानाप्रकृतिसम्भवम् ।
वेषं वयः कर्म चेष्टां बिभ्रद्भरत उच्यते ॥

अतीतं लोकवृत्तान्तं रसभावसमन्वितम् ।
स्वभाववन्नाटयति[4] यतस्तस्मान्नटः स्मृतः ॥

सूत्रयन्काव्य[5]निक्षिप्तवस्तुनेतृकथारसान् ।
नान्दीश्लोकेन नान्द्यन्ते सूत्रधार इति स्मृतः ॥

आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधन[6]प्रौढः सूत्रधार इहोच्यते ॥

भरतेनाभिनीतं यद्भावं नानारसाश्रयम् ।
परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्विकः ॥

चतुरातोद्यविद्वाग्मी प्रियवाग्गीततालवित् ।
उपधार्य प्रयोक्ता यः स सूत्रधृगितीरितः ॥

उज्ज्वला रूपवन्तश्च नृपोपकरणक्रियाः ।
मेधाविनो विधानज्ञा[7] स्वस्वकर्मणि पण्डिताः ॥

सूत्रधारहिता दक्षा[8]यथोद्देशप्रयोगिनः ।
एभिरेव गुणैर्युक्ता नटा नाट्ये भवन्ति हि ॥

भूमिकाभिरनेकाभिः कर्मवागङ्गचेष्टितैः ।
यथाप्रकृतिसन्धानकुशलास्ते कुशीलवाः ॥

चतुरातोद्यभेदज्ञास्तत्कलासु विशारदाः ।
करणाभिनयज्ञाश्च सर्वभाषाविचक्षणाः ॥

---

1 A व । 2 B शु । 3 A ण्ड । 4 A संभावयन्नाटयन्ति । 5 A तैर्यत्कार्यं । 6 B दनः । 7 C दग्धाश्च । 8 A वस्था ।

नटानुयोक्त्री[1] कृत्येषु नटस्य गृहिणी नटी ।
विदूषकोऽपि सर्वत्र विनोदेषूपयुज्यते ॥

विटश्च काम[2]साचिव्यकरणेनोपयुज्यते ।
तदात्वप्रतिभो नर्मचतुर्भेद[3]प्रयोगवित् ॥

वेदविन्नर्म[4]वेदी यो नेतुः स स्याद्विदूषकः ।
खलतिः पिङ्गलाक्षश्च हास्यानूक[5]विभूषितः ॥

पिङ्गकेशो हरिश्मश्रुर्नर्तकश्च विदूषकः ।
वेश्योपचारकुशलो मधुरो दक्षिणः कविः ॥

प्रतिपत्तिपरो वाग्मी चतुरश्च विटो मतः ।
माल्यभू[6]षोज्ज्वलः कुप्यत्यनिमित्तं प्रसीदति ॥

विटः प्राकृतवादी च[7] प्रायो बहुविकारवान् ।
एते नाट्यप्रयोक्तारो राज्ञां स्युः सुखभो[8]गिनाम् ॥

प्रथमं तस्य(त्व)राजानं[9] प्रकृतिं च[10] त्रिधा स्थिताम् ।
महिषीश्च महादेवीं देवीश्च सहभोगिनीम् ॥

आश्रितां नाटकीयाश्च कामुकां शिल्पकारिकाम् ।
विज्ञाय चान्तःपुरिकाः पश्चाच्च परिचारिकाः ॥

शय्यापालीं छत्रपालीं तथा चामरधारिणीम् ।
संवाहिकां गन्धयोक्त्रीं माल्याभरणयोजिके ॥

एता विज्ञाय तत्पश्चाद्विद्यात्तदनुचारिकाः ।
नानाकक्ष्यामधिष्ठात्र्यः[11] तथोपवनभूमिकाः[12] ॥

[13]देवतायजनक्रीडाहर्म्यप्रासादमा[14]लिकाः ।
एता विज्ञाय भूपानां विद्यात्सञ्चारिका अपि ॥

---

1 B क्तृ । 2 C कर्मं । 3 A B यौंग । 4 A B त्कर्मं । 5 B तुक । 6 B भा । 7 A भाषश्च । 8 A भा । 9 B नः । 10 B तिश्च । 11 C त्रीं । 12 C कां । 13 C omits this line 14 B D ला ।

वीटि[1]कादायिनीर्वेत्रधारिणीरसिधारिणीः ।
आह्वायिकाः प्रेक्षणिकास्तथा यामिनिकीरपि ॥

एताः सञ्चारिका राज्ञस्तथैता ह्यनुचारिकाः ।
अवियुक्ताश्चरन्त्येताः सर्वास्वस्थासु भूभृतः ॥

महत्तर्यः प्रतीहार्यो वृद्धा आयुक्तिका अपि ।
कञ्चुकीया वर्षवराः किराताः कुब्जवामनाः ॥

औपस्थापकिनिर्मुण्डा अभ्यागाराश्च सूक्तिनः ।
एते ह्यन्तःपुरचरास्तेषां लक्षणमुच्यते ॥

अभिगम्यगुणोपेतो नेता वा[2] प्रेक्षकोऽपि वा ।
विजिगीषुर्महोदात्तः सम्यक्सङ्गीतवेदिता ॥

चतुर्णामपि वर्णानां राजा सङ्गीतमर्हति ।
तस्य त्रिधा स्यात्प्रकृतिरुत्तमाधममध्यमा ॥

स्त्रीणां तथा स्यादेतासां शीलं भावान्विशेषतः ।
ज्ञात्वा ततस्ताः[3] प्रकृतीः सुखेनाभिनयेन्नटः ॥

मूर्धाभिषिक्ता महिषी तुल्यशीलकुलान्विता ।
अनभि[4]ज्ञा सपत्नीनां सहधर्मचरी भवेत् ॥

अन्तःपुरहिता साध्वी शान्तिस्वस्त्ययनैर्युता ।
अनीर्ष्या पतिशीलज्ञा महादेवी पतिव्रता ॥

एभिर्गुणैर्युता किञ्चित्तत्सत्का[5]रविवर्जिता ।
गर्वि[6]ता रतिसम्भोग[7]तत्परा च समत्सरा ॥

रूपयौवनसम्पन्ना राज्ञा[8] देवीति कथ्यते ।
नित्यं प्रसाधनवती शीलरूपगुणान्विता ॥

1 B पीठि । 2 D नैतावान् । 3 B स्तत्प्र । 4 A वधि । 5 A त्पदै । 6 B हिं । 7 A गे 8 A ज्ञो ।

स्वयं प्रवृत्तसुरता प्रवृत्ते भोगवर्त्मनि ।
सपत्नीनामसहना भोगिनीति निगद्यते ॥

भोगोपस्करसंस्कर्त्री नृपतेश्छन्दवर्तिनी ।
गतेर्ष्या भोगकुशला दयालुश्चाश्रिता भवेत् ॥

नृपतेर्गीतवस्तूनि गायिनी रतिमन्दिरे ।
स्वाभिः शृङ्गारचेष्टाभिः पत्युर्मन्मथवर्धिनी ॥

मुखपाठेन नृत्यन्ती नाटकीयेति कथ्यते ।
निषीदन्तं निषीदन्ती गच्छन्तमनुयायिनी ॥

भुञ्जानमनुभुञ्जाना शयानमनुशायिनी ।
सा कामुकेति विज्ञेया देशकालानवेक्षिणी ॥

वासोऽङ्गरागाभरणमाल्यशिल्पविधायिनी ।
विचित्रसुरतक्रीडा पत्युर्वैचित्र्यदायिनी ॥

शयनासनशिल्पज्ञा सा भवेच्छिल्पकारिका ।
आसां स्वभावमालोच्य यथाभावं प्रयोज[1]येत् ॥

राज्ञो महिष्यास्सर्वत्र सर्वावस्थासु सर्वदा ।
स्वाधिकारैर्यथायोगं घटन्ते परिचारिकाः ॥

आसां शीलं स्वभावञ्च यथाभावं प्रयोजयेत् ।
सञ्चारिकाणां कर्माणि तत्र तत्र प्रयोजयेत् ॥

सञ्चारिका यथा योज्यास्तथा स्युरनुचारिकाः ।
कामोपभोगसम्भोगगुह्यागुह्यसमर्थने ॥

या राज्ञा विनियुज्यन्ते ताः स्युः प्रेक्षणिकाः स्त्रियः ।
प्रीत्याऽऽन्तःपुरिका[2] नित्यमाशीःस्वस्त्ययनादिभिः ॥

---

1 B चोद । 2 A भत्यन्तःपुरिकं ।

पृच्छन्त्यः कुशलं देवीस्ता महत्तर्य ईरिताः ।
ता नियोज्यास्सदा[1] राज्ञा सर्वान्तःपुररक्षणे ॥

याः पञ्चमाब्दादधिका दशमाब्दावराः स्त्रियः ।
कुमार्यस्ताः कुमारीणां प्रतीहार्य इति स्मृताः ॥

प्रत्यन्तःपुरिकं ता[2]स्तु सुखदुःखसमन्विताः ।
निवेदयन्ति वृत्तान्तं कुमार्यो[3] सह सर्वदा ॥

अजात[4]रतिसम्भोगा निभृता लज्जयाऽन्विताः ।
अन्तःपुरविहारिण्यः कुमार्यः कुलजाः स्मृताः ॥

ता लालनीया नृपतेरवरोधवधूजनैः ।
पूर्वराजनयज्ञाश्च तैः क्रमेणैव मानिताः ॥

पूर्वराजोपचारज्ञा यास्ता वृद्धा इतीरिताः ।
कथयन्त्यः कथाश्चित्रा वाक्यैः प्रहसनैरपि ॥

विनोदयन्ति ता राज्ञः स्त्रियोऽन्तःपुरवर्तिनीः[5] ।
फलमूलौषधीमाल्यगन्धाभरणवाससाम् ॥

भाण्डायुधासनानां[6]स्युरष्टावायुक्तिकाः स्मृताः ।
ताश्चान्तःपुरचारिण्यः नियोज्यास्तेषु कर्मसु ॥

अकामा ब्राह्मणाश्चैव[7] कञ्चुकोष्णीषवेत्रिणः ।
ज्ञानविज्ञानसम्पन्नाः कञ्चुकीयाः स्मृता बुधैः ॥

अल्पसत्त्वाः स्त्रीस्वभावाः क्लीबा निष्कामिनः स्वतः ।
जात्या वा कामनिर्मु[8]क्तास्ते तु वर्षवराः स्मृताः ॥

वन्यमूलफलाहाराः पल्लीपर्वतवासिनः ।
चित्रस्त्रीकाः[9] सु[10]भाषाज्ञाश्चिबुकाः कर्कशाङ्गकाः ॥

---

1 A न नियोज्याः सदा । B अतु । 2 B अत्यन्तःपुरिकान्ता । 3 A र्यः । 4 A B ज्ञात । 5 A न्ती सा राज्ञः प्रियाऽन्तःपुरवर्तिनी । 6 B D यूथसपानाः । 7 A णानाश्च । B णाश्चैव । 8 B D मिनीश्च । 9 A ह्रिसूत्रिका; । B D ह्रित्रात्रिका । 10 A B D स्व ।

ते किराता बलाद्राज्ञा वारं वारं नियोजिताः ।
कञ्चुकीया नृपाभ्याशवर्तिनोऽन्तःपुराश्रयाः ॥

भवनान्तरकृत्येषु नियोज्याः प्रेष्यकर्मणि ।
साहाय्ये कामचारस्य राज्ञः प्रच्छन्नकामिनः ॥

वार[1]व्यत्यासकथने स्त्रीणां वर्षवराः स्मृताः ।
राजावरोधभो[2]ग्यानां भाण्डाभरणवाससाम् ॥

सद्योऽन्तःपुरदण्डेषु किराता योजिता नृपैः ।
परिहासविनोदेषु स्त्रीणां स्युः कुब्जवामनाः ॥

अविद्धकर्णः क्लीबश्च ह्रस्वो विकटदन्तकः ।
तुन्दिलोऽभ्यन्तरचर औपस्थापि[3]क उच्यते ॥

[4]अज्ञातकामा निष्कोशा निर्मुण्डा इति च स्मृताः ।
वधू[5]पस्थापने राज्ञामौपस्थापिक उच्यते ॥

प्रस्थापने वधूनां स निर्मुण्डो योज्यते नृपैः[6] ।
पुंस्त्रीलिङ्गविलुप्ताङ्गाः स्वल्पश्मश्रुस्तनान्विताः ॥

अभ्यागारा इति ज्ञेया अभ्यागाराधिकारिणः ।
नियोगकारका राज्ञां सर्वावस्थासु सर्वदा ॥

मूकाः[7]कुहकलीलाभिः सर्वत्र परिहासकाः ।
तेषां भावं परिज्ञाय तथैवाभिनयेन्नटः ॥

राजा सेनापतिश्चैव युवराजः पुरोहितः ।
प्राश्निकाः प्राड्विवाकास्त आयुक्ताः सचिवास्तथा ॥

एते सभासदः कार्याः प्राश्निकाः प्रागुदाहृताः ।
नानाभावविशेषज्ञा नानाशिल्पविचक्षणाः ॥

---

1 A द । 2 C यो । 3 A यि । 4 C omits two lines । 5 B वद्ग । 6 B बुधैः ।
7 A मूवाः ।

शयने चासने वाऽपि[1] लेख्येऽलङ्कारयोजने ।
परिहासेङ्गितज्ञाने चतुरातोद्यवेदने ॥

नृत्ते गीते च कुशला नानाभावविचक्षणाः ।
मनस्विनो मानधना ऊहापोहविशारदाः ॥

अर्थेषु स्त्रीषु शुद्धाश्च सदस्याः कथिता बुधैः ।
वैतालिका बन्दिनश्च नान्दीमङ्गलपाठकाः ॥

सूताश्च मागधाश्चैव सदस्याः स्युः कदाचन ।
तत्तत्प्रहरकयोग्यै[2]रागैस्तत्कालवाचिभिः श्लोकैः ।
सरभसमेव वि[3]तालं गायन्वैतालिको भवति ॥

वक्त्रं वाऽपरवक्त्रं वा नेपथ्ये गातुमर्हति ॥
वन्द्यमानेश्वरक्ष्माप[4]वंशवीर्यगुणस्तवैः ।
वन्द्य[5]भूभृद्गुणोत्कर्षश्रावका बन्दिनः स्मृताः ॥

आशीःपुरस्कृतैर्वाक्यैर्मङ्गलार्थप्रकाशकैः ।
मङ्गलानि प्रशंसन्तो नान्दीमङ्गलपाठकाः ॥

[6]नन्दनीयानि वाक्यानि मङ्गलानि च भूभृताम् ।
पठन्ति भोगार्थानीति नान्दीमङ्गलपाठकाः ॥

सुखस्वापविदो राज्ञां सुप्रभातप्रशंसकाः ।
सूताः सवनयोग्यानां कर्मणां बोधकाः स्मृताः ॥

राज्ञः पुरजनस्यापि मङ्गलाचारशंसिनः ।
मान्यैर्मागधिकागीतैर्मागधा इत्युदीरिताः ॥

एवं सपरिवारस्य नेतुश्च[7] प्रेक्षकस्य च ।
स्वभावमवगम्यैव नाट्येनाभिनयेन्नटः ॥

---

1 C D लेख्या । 2 D योगै । 3 B D स । 4 A वंशमाने ततक्ष्मा च । 5 B C वंद्य । 6 D omits two lines । 7 C तुः सभे ।

वर्णकैरञ्जनैः स्नानैर्भूषणैश्चाप्यलङ्कृतः।
गाम्भीर्यौदार्यसम्पन्नो राजवत्तु भवेन्नटः॥

एवं स्वभावतो राज्ञां नित्यमेवो[1]ज्ज्वलो भवेत्।
राजोपचारोऽभिनेयो यथाभावं यथारसम्॥

राजा स[2]परिवारश्च भरत[3]श्च कुशीलवैः।
नाट्यकृत्याभिनिष्पन्नं (विशन्तो रङ्गमण्टपम्[4])॥

यत्र रज्य[5]न्ति भावेन (गानवादननर्तनैः[6])।
सभ्याः सभापतिसखाः स देशो रङ्गमण्टपः॥

चतुरश्रत्र्यश्रवृत्तभेदात्सोऽपि त्रिधा भवेत्।
परमण्टपिकैः सद्भिः पौरजानपदैः सह॥

राज्ञः सङ्गीतकं यत्र वृत्ताख्यो रङ्गमण्टपः।
वारकन्याऽमात्यवणिक्सेनापतिसुहृत्सुतैः॥

यत्र सङ्गीतकं राज्ञां चतुरश्रः स कथ्यते।
ऋत्विक्पुरोहिताचार्यैः सहान्तःपुरिकाजनैः॥

महिष्या सह यत्र स्यात्त्र्यश्रोऽसौ रङ्गमण्टपः।
मार्गप्रक्रियया कार्यं सङ्गीतं त्र्यश्रमण्टपे॥

चतुरश्रे मार्गदेशमिश्रं सङ्गीतकं भवेत्।
मिश्रे तु चित्रं संयोज्यं वृत्ताख्ये रङ्गमण्टपे॥

ये नाट्यभेदाः कथितास्तेषु सङ्गीतकक्रियाः।
त्रिमार्गतालनियमसिद्धत्वान्मार्गसंज्ञिताः॥

नृत्तभेदाः क्वचिन्मार्गाः क्वचिद्देश्या भवन्ति ते।
मार्गप्रक्रियया शुद्धं सङ्गीतं यदि कल्प्यते॥

---

1 B वेषो। 2 B च। 3 A भारतैश्च। 4 A धिशताङ्गं समण्टपम्। B विशतां रङ्गमण्टपम्। C विशतारंगमण्डलम्। 5 B ज्ञ। 6 A तत्रवादकनर्तकाः। B गात्रवादननर्तकाः। C गातव्यानटनर्तकाः।

शुद्धप्रयोक्ता भरतः सूत्रधृक्सकुशीलवः ।
देशरीतिविमिश्रं चेच्छुद्धं मिश्रा[1]ख्यतामियात् ॥

नटनर्तकनर्तक्यः चित्र[2]सूत्रभृता सह ।
नाट्यं शुद्धमिति ख्यातं नृत्यं चित्रमिति स्मृतम् ॥

नाट्यस्य प्रविभागस्तु यथाशास्त्रं प्रदर्श्यते ।
नाटकस्थितवाक्यार्थपदार्थाभिनयात्मकम् ॥

नटकर्मैव नाट्यं स्यादिति नाट्यविदां मतम् ।
[3]पदार्थमात्राभिनयरूपं नर्तककर्म यत् ॥

तन्नृत्तनृत्यभेदेन तद्द्वयं द्विविधं भवेत् ।
तत्र भावाश्रयो मार्गो देशी तद्रहिता मता[4] ॥

त्रिमार्गतालनियतं मार्गमित्यभिधीयते ।
देशीभवत्पुनस्तालललयैराश्रयमिष्यते ॥

पुनरेतद्द्वयं द्वेधा मधुरोद्धतभेदतः ।
मधुरं लास्यमाख्यातमुद्धतं ताण्डवं विदुः ॥

सर्वं त्रिधा भवेदेतद्गीतवाद्योभयान्वयात्[5] ।
रसप्रधानाभिनयं मार्गं नृत्तं नटाश्रयम्[6] ॥

भावाभिनेयं मार्गं तन्नृत्यं[7] यन्नर्तकाश्रयम् ।
रसभावसमायुक्तमङ्गचालनसंश्रयम् ॥

मार्गदेशीविमिश्रं तु नटनर्तकसंयुतम् ।
ललितैरङ्गहारैश्च निर्वर्त्यं ललितैर्लयैः ॥

वृत्तिः स्यात्कैशिकी गीतिर्यत्र तल्लास्यमुच्यते ।
उद्धतैः करणैरङ्गहारैर्निर्वर्तितं यदा ॥

---

1 B चित्रा। 2 A त्रे। 3 C D omit this line। 4 भिदा स्मृता। 5 A न्वितम्। 6 B यमार्गनृत्तनटाश्रया। 7 A नय यन्मार्गं तन्नृत्यं।

वृत्तिरारभटी गीतकाले तत्ताण्डवं विदुः ।
उभयं पूर्वरङ्गस्य ना[1]टकादौ भविष्यतः ॥

नटकर्मात्मकत्वात्त[2]द्वयं नाट्यमितीरितम् ।
ताले गीते च वाद्ये च नृत्ते चाभिनयक्रमे ॥

सुकुमारप्रयोगो यो नियतो लास्यमुच्यते ।
तच्छृङ्खलाल[3]तापिण्डीभेद्यकैः स्याच्चतुर्विधम् ॥

लता रासकनाम स्यात्तत्त्रेधा रासकं भवेत् ।
दण्डरासकमेकन्तु तथा मण्डलरासकम् ॥

एकन्तु योषिन्नियमान्नाटयरासकमीरितम् ।
शृङ्खला भेद्यकश्चापि दशधा भिद्यते पुनः ॥

तद्गेयपदमित्यादिलास्याङ्गत्वेन कथ्यते ।
पिण्डीबन्धे तु बहुधा भेदस्तत्ताण्डवस्य तु ॥

पिण्डीबन्धात्मकं नृत्तं तदेवत्वप्रहर्षणम्[4] ।
भवेज्जर्जरपूजायां तत्तद्गतिपरिक्रमे ॥

भावभेदात्[5] लास्यभेदो[6] बहुधा कथ्यते बुधैः ।
तदेव नियमैर्हीनं देशे रुच्या[7] प्रवर्तितम् ॥

गु[8]ण्डलीनृत्तमित्युक्तं तत्स्याद्देशेष्वनेकधा ।
देशीतालैश्च वाद्यैश्च देशीगीतैश्च कल्पितम् ॥

चतुष्षष्ठ्यङ्गसंयुक्तगतिश्चा(?)ल[9]यरीतिमत् ।
शुद्धं चित्रं च मिश्रञ्च गुण्डलीनर्तनं त्रिधा ॥

कदाचित्कन्दुकक्रीडा कदाचिद्वर्णमानतः[10] ।
तत्तद्देशगुणोत्थाभिर्लीलाभिः परिकल्प्यते ॥

---

1 C र्णखे स्यान्ना । 2 B कं तत्त । 3 C व । D लास्य । 4 A त्तदेवत्वहर्षणम् । 5 A दे । 6 A दे । 7 B मे हीनदेशरुच्या । 8 B C कु । 9 A श्चाप । 10 A नामता । C नामतः ।

[1]नाट्यं नृत्यञ्च नृत्तञ्च वृन्दहीनं न शोभते ।
अतो वृन्दं प्रकल्प्यं स्यादित्याहुर्भरतादयः ॥

नटाश्च नर्तकाश्चैव गायका वादकादयः ।
यस्मिन्प्रयोगे मिलितास्तत्र तद्वृन्दमुच्यते ॥

तदेवाभ्यन्तरं बाह्यमिति द्वेधा विभिद्यते ।
अभ्यन्तरे स्यात्स्त्रीवृन्दं बाह्ये स्त्रीमर्त्य[2]मिश्रितम् ॥

ज्येष्ठमध्यकनिष्ठादिभेदाद्वृन्दं त्रिधा भवेत् ।
अङ्गैरुपाङ्गैः प्रत्यङ्गैर्गीतमात्रानुगामि[3]भिः ॥

पदार्थाभिनयो नृत्यं डोम्बीश्रीगदितादिषु[4] ।
अङ्गविक्षेपमात्रं यल्लयतालसमन्वितम् ॥

तन्नृत्तं नाटकाद्येषु रूपकेषु प्रयुज्यते ।
अङ्गप्रत्यङ्गविक्षेपशून्यो योऽभिनयेन च ॥

तन्नृत्तं [5]तत्र नृत्यन्तु यथोक्ताभिनयान्वितम् ।
ताण्डवं तत्त्रिधा चण्डप्रचण्डोच्चण्डभेदतः ॥

तत्र ह्यारभटी वृत्तिस्तथैव परिकल्प्यते ।
विलम्बितो लयो यत्र नृ(ग्र)हश्चातीतकल्पितः ॥

तद्व[6]दारभटी यत्र तत् ख्यातं चण्डताण्डवम् ।
समग्रहो मध्यलय[7]स्तथैवारभटीयुतः ॥

प्रचण्डताण्डवं तत्स्यादिति तत्र प्रयोजि[8]तम् ।
अनागतो ग्रहो यत्र लयो यत्र द्रुतो भवेत् ॥

तादृश्यारभटी यत्र तत्स्यादुच्चण्डताण्डवम् ।
एतत्त्रयं भवेत्त्रे[9]धा गीतवाद्योभयान्वयात् ॥

---

1 D omits four lines। 2 A र्त्यं स्त्रीवृन्द। 3 A रागि। 4 C कम्। 5 B D त्तम। 6 B यंच। 7 B वय। 8 B चोदि। 9 A द्वेधा।

करणाद्यङ्गहाराश्च गीतवाद्यल(द्योभ)यान्विताः।
यत्रोद्धतं प्रयुज्यन्ते क्रमा[1]त्तत्ताण्डवत्रयम् ॥

चण्डाख्यं ताण्डवं वीररौद्रमिश्ररसे भवेत्।
प्रचण्डताण्डवं ख्यातं रौद्रबीभत्समिश्रणे ॥

उच्चण्डं रौद्रबीभत्सभयानकसमुच्चये।
करणैरङ्गहारैश्च द्रुतं त्रिगुणवेगतः ॥

आकाशचारीभ्रमरीयुतमुच्चण्डताण्डवम्।
प्लुतलङ्घितभूयिष्ठकरणं भ्रमरीयुतम् ॥

प्रचण्डताण्डवं भौमचारीयुग्द्रुतमानतः।
नृत्ताङ्गैः करणैरङ्गहारैर्युक्चण्डताण्डवम् ॥

हास्यश्रृङ्गारसंसर्गे लास्यनृत्तं प्रशस्यते।
श्रृङ्गारे चाद्भुते चापि तद्विदा विनियुज्यते ॥

उद्धतप्रायकरणं रुच्या यद्देश्यकल्पितम्।
करणं वक्तृगं[2] चेति तद्देशीताण्डवं विदुः ॥

देशीताललयोपेतं देशभाषाविमिश्रितम्।
तद्वीराद्भुतश्रृङ्गारहास्येषु विनियुज्यते ॥

नृत्यभेदे क्वचित्कैश्चित्प्रायो देश्युपयुज्यते।
न कदाचन सर्वत्र रूपकेषूपयुज्यते ॥

ईदृक्ताण्डवलास्यादिभेदाङ्गेषूपयोगिनाम्[3]।
समाजं श्रृङ्ग(वृन्द)मित्याहुः तत्त्रि[4]धा पञ्चधाऽपि वा ॥

उत्तमोत्तममाद्यं स्यादुत्तमाख्यमतः परम्।
मध्यमोत्तममध्यं च कनिष्ठं चेति पञ्चधा ॥

---

1 B.D तस्मा। 2 D वेरणं पेतिनं। 3 B ताम्। 4 A स त्रे।

श‍ृङ्ग(बृन्द)मेतत्समुद्दिष्टं कोलाहलमतः परम् ।
मुख्या द्वादश गातारो द्वादशैव तु गायिकाः ॥

अष्टाविहालका(?)श्चापि ततः षड्विंश(ड्वांशि)का अपि ।
ओता[1]काराश्च पञ्च स्युः ततः पाटहिकास्त्रयः ॥

यत्र मार्दङ्गिकाः षट् स्युर्बृन्दं[2] स्यादुत्तमोत्तमम् ।
षड्गातारोऽष्ट गायिन्यः पञ्च षड्‍वा विहालकाः[3] ॥

चत्वारो वांशिकाश्चापि चोताकारचतुष्टयम् ।
मार्दङ्गिकाश्च चत्वारः ततः पाटहिकद्वयम् ॥

इदमुत्तममाख्यातं बृन्दं बृन्दवि[4]शारदैः ।
पञ्च स्युर्मुख्यगातारः पञ्चापि समगायिनः ॥

गायिकावांशिकीनां च यत्र स्युः षट् च पञ्चकम् ।
ओताकारत्रयं चापि तथा पाटहिकत्रयम् ॥

मार्दङ्गिकत्रयं यत्र बृन्दं स्यान्मध्यमोत्तमम् ।
द्वौ गायकौ[5]च गायिन्यौ तिस्रः स्युस्स[6]मगायिकाः ॥

त्रयो विहालका वंश्याः तिस्रश्चापि विहालिकाः ।
ओताकारत्रयं यत्र मार्दङ्गिकचतुष्टयम् ॥

यत्र पाटहिकद्वन्द्वं बृन्दमेतत्तु मध्यमम् ।
एको मुख्यो भवेद्गाता द्वौ स्यातां समगायकौ ॥

गायकौ वांशिकौ द्वौ द्वावोताकारद्व(त्र)यं तथा ।
एकः पाटहिको यत्र मार्दङ्गिकयुगं तथा ॥

एको विहालको यत्र कनिष्ठं बृन्दमुच्यते ।
द्विपञ्चाशच्चतुस्त्रिंशत्त्रिंशत्षड्विंशतिस्तथा ॥

---

1 A ओत । 2 A BC मृंद । 3 B मिहाल्ता: । 4 A मृदवं मृड्ड । 5 B न्तौ ।
6 B त्रीस ।

चतुर्दशाष्टादश वा सङ्ख्या वृन्देषु पञ्चसु ।
मुख्यगाता समं गाता गायिनी वांशिकस्तथा ॥

ओताकारः पाटहिको यत्र मार्दङ्गिकद्वयम् ।
हुडुक्किकाकोहलिकौ[1] यत्र जर्झ[2]रिकाद्वयम् ॥

वैणिकौ यत्र सुसमौ वृन्दं तत्स्यात्कनिष्ठकम् ।
मुख्यानुवृत्तिचातुर्यं तत्प्रयोगप्रगल्भता ॥

तालानुवर्तनन्यूनपदपूरणनैपुणम् ।
लयतालावधानं[3] च साद‍ृश्यैक्यविभावना ॥

भिन्नरागज्ञता[4] स्थानत्रितयप्राप्तिशक्तता[5] ।
एते वृन्दगुणाः प्रोक्ता वृन्दकोलाहलं विना ॥

एतन्मार्गस्य देश्याश्च सामान्यमभिधीयते ।
नाट्याभिधाननिष्पत्तेरेतद्वितयमीरितम् ॥

नृत्तनृत्यविभागेन द्विधा मार्ग उदाहृतः ।
नृत्तं तु ताण्डवं नृत्यं लास्यमित्यभिधीयते ॥

अङ्गविक्षेपमात्रं यत्तालमानलयैर्युतम् ।
नृत्तं तदुद्धतैरङ्गहाराद्यैस्ताण्डवं भवेत् ॥

प्रेरणं प्रापणं देशी[6]ताण्डवं स्यादनुद्धतैः ।
लास्यं लताभेद्यकादि लास्याङ्गसहितं विदुः ॥

तदे[7]व भूमिचारीभिर्मृद्वीभिर्ललितालयैः[8] ।
देशीलास्याङ्ग[9]संयुक्तं देशीलास्यमितीरितम् ॥

प्रायेण तत्कुण्डलीति दे[10]शरीत्यैव कल्प्यते ।
भाणादिनृत्य[11]भेदेषु प्रायो लास्यं प्रयुज्यते ॥

---

1 A कीकौकालकीकौ । 2 A घर्घ । 3 A तानावधानं । B याना । C तालावलम्बं । 4 B स्तथा । 5 B क्तिता । 6 A करणं नेनृदेश । C प्रेरणं पेषणं देशी । 7 A तथै । 8 A पालकैः । 9 D स्यांश । 10 B D द । 11 B C त ।

ताण्डवं पूर्वरङ्गे स्याद्रू[1]पकेषु रसानुगम् ।
यत्र ध्रुवाः प्रयुज्यन्ते चतस्रो गीतयोऽपि च ॥

तालमार्गाश्च सलयाः स मार्ग इति कथ्यते ।
ध्रुवाः पञ्च प्रयोक्तव्या रसाभिनयसिद्धये ॥

प्रावे[2]शिकी तु प्रथमा द्वितीयाऽऽक्षेपिकी स्मृ[3]ता ।
प्रासादिकी[4] तृतीया तु चतुर्थी चान्तरा ध्रुवा ॥

नैष्कामिकी पञ्चमीति ज्ञेयाः क्वापि क्वचिद्ध्रुवाः ।
नानार्थरससंयुक्ता[5] पात्राणां नाट्यकर्मणि ॥

प्रवेशसूचनी गाथा या सा प्रावेशिकी स्मृता ।
उल्लङ्घितक्रमो य[6]स्यामन्य आक्षिप्यते लयः ॥

ध्रुवा साऽऽक्षेपिकी नाम विज्ञेया नृत्त[7]वेदिभिः ।
आक्षेपवशतो यासामन्तरं स[8]मुपागता ॥

रङ्गं प्रसादयति या सैव प्रासादिका ध्रुवा ।
सर्वासामन्तरा वस्तुरसादिवशकल्पिता ॥

आन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जनी ।
प्रस्तुतार्थस्य नियोगे सर्वस्याक्रान्तनिष्क्रमे ॥

या निष्कामगुणोपेता सैव नैष्कामिकी ध्रुवा ।
अलङ्कारा लया वर्णा गीतयो यतिपाणयः ॥

अपरस्परसम्बन्धा यस्मात्तस्माद्ध्रुवा स्मृता ।
जातिः स्था[9]नं प्रमाणं च प्रकारो नामकल्पना ॥

ज्ञेया ध्रुवाणां नाट्यज्ञैर्विकल्पाः प[10]ञ्चहेतुकाः ।
वृत्ताक्षरप्रमाणं यत्सा जातिरिति संज्ञिता ॥

---

1 B ह्रस्य रू । 2 A B दे । 3 B णीम । 4 A प्रावारिका । 5 A युक्तानां । 6 A क्रमैर्य । 7 C वृत्ति । 8 A रंज । 9 A मा । 10 A त्पास ।

प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ।
इति पञ्चविधं गा(स्था)[1]नं केचिदाहुर्मनीषिणः ॥

षट्कलाऽष्टकला चेति प्रमाणमिति कथ्यते ।
प्रकारः स प्रयोगो यः समार्धविषमादिकः ॥

ध्रुवाविधाने कथितं नाम ज्ञेयं ध्रुवागतम् ।
स्वेच्छा[2]नामानि कतिचिद्विद्यावृत्तविशेषतः ॥

गीतरोदनसम्भ्रान्तिप्रेषणोत्पात[3]विस्मयाः ।
यत्र यत्र ध्रुवास्तत्र न योज्या नाट्य[4]योक्तृभिः ॥

यानि गीतकलाङ्गानि नाना[5]तोद्यानि तान्यथ ।
विज्ञेयानि ध्रुवासुष्ठु[6]वृत्तैश्छन्दोगतैरिह ॥

नास्ति किञ्चिदवृत्तं यद्वाद्यमान[7]कृताश्रयम्[8] ।
गानं यद्वृ[9]त्ततो वाद्यं तद्वृ[10]त्तेन प्रयोजयेत् ॥

छन्दोवृत्तानि सर्वाणि विज्ञेयानि ध्रुवास्विह ।
यद्वृत्तप्रभवं [11]वाद्यमङ्गवाद्यसमं तथा ॥

पूर्वरङ्गान्त[12]तो वाद्यं ततो नृत्तं प्रयोजयेत् ।
गीतवाद्याङ्गसंयोगः प्रयोग इति कथ्यते ॥

भाषा च शौरसेनीति ध्रुवाणाम[13]भिधीयते ।
दिव्यानां सप्रमाणं च ज्ञेयं संस्कृतभाषया ॥

गानं मर्त्यस्य कथितमर्धसंस्कृतभाषया ।
छन्दःप्रमाणसंयुक्तं स्तुत्याशीर्वादसंयुतम् ॥

देवद्विजमहीपानां संस्कृतं गानमिष्यते ।
वैश्यानां तु भवेद्गानमर्धप्राकृतसंस्कृतैः ॥

---

1 A ज्ञा। D धाङ्गानां गानमा। 2 B स्वैश्व। 3 A प्रोक्षणोक्त्या। 4 D योज्या नाट्यप्रयोक्तृभिः। 5 C म्ना। 6 A B D स्वादु। 7 A वाभ्यङ्गादि। 8 B याः। 9 B म्नृ। 10 A यद्वृ। 11 A तंतु भवेद्वा। 12 A वै गानन्त। 13B C नामा।

पैशाच्या भाषया गानं शूद्राणां मागधी तु वा[1] ।
इतरेषामपभ्रंशभाषया गानमिष्यते ॥

अपभ्रष्टा विभाषा वा शकारादेरुदीर्यते ।
उपमेयगुणा ये स्युः[2] नेत्रादीनां गुणाश्रयाः ॥

उत्तमाधममध्यानां स्त्रीणामपि च तत्त्वतः ।
यथावदवगम्यैते प्रयोज्या नाट्यकोविदैः ॥

नेत्रादेर्दैवतौपम्ये सूर्याग्निपवनाः स्मृताः ।
रक्षोदैत्योद्धतानां च मेघपर्वतसागराः ॥

सिद्धगन्धर्वयक्षादेः कुञ्जरर्षभशाखिनः ।
राजहंसर्षभगजशार्दूलाः पृथिवीभुजाम्[3] ॥

एत एव प्रयोज्याः स्युरुदात्तोत्तम[4]योरपि ।
नागशार्दूलवृषभान्न दिव्येषु प्रयोजयेत् ॥

क्रव्यादा महिषर्क्षाश्च विप्रा[5]णां रुरवः स्मृताः ।
सारसाः शिखिनः क्रौञ्चाश्चक्राह्वाः कुमुदाकराः ॥

[6]मध्यमैरुपमेयाः स्युः प्रयोज्या नाट्यकर्मणि ।
कोकिलाः षट्पदाः काका बकाश्चाषाश्च कौशिकाः ॥

अध[7]मैरुपमेयाः स्युस्तत्तदर्थानुकूलतः ।
शर्वरी वसुधा ज्योत्स्ना पद्मिनी द्यौः करेणुका ॥

नायिकानामुदात्तानामुपमेयगुणाः स्मृताः ।
दीर्घिका कलिका मल्ली सारसी शिखिनी मृगी ॥

नायिकानां मध्यमानामुपमेयाः स्युरर्थतः ।
भ्रमरी कुररी काकी परपुष्टा च मालिका ॥

---

1 A B C च तु । 2 B णे येस्युः । 3 B जः । C भृता । 4 B C न्मत्त । 5 B C हिंस्रा । 6 C omits two lines । 7 C उत्त ।

वेश्यानामधमानां स्युरुपमेयगुणा अमी।
यद्वस्तु सुभगं हृद्यम्मतं दैवतमानुषैः॥

उपमेयं भवेत्तच[1] गीतवृत्ति[2]षु गायनैः।
एवं विभाव्य भरतैर्यथाभावं यथारसम्॥

यथार्थमेतन्नाट्यं च प्रयोज्योऽभिनयः सदा।
वृक्षत्वशिंशुपात्वादेर्यथा तादात्म्यमुच्यते॥

तथा[3] भवेत्काव्यबन्धे तादात्म्यं रसभावयोः।
वागङ्गसत्त्वाभिनया[4] भावाः स्युर्नाट्यकोविदैः॥

रसोऽभिनेयो वागङ्गसत्त्वाहार्य[5]समुच्चयात्।
उभौ पदार्थवाक्यार्थवाच्यौ भवितुमर्हतः॥

स्थायी वा सात्त्विको वापि सञ्चारी वा क्वचित्क्वचित्।
भावो वाक्यार्थतामेति तत्तद्भावविशेषतः॥

केवलं न रसः काव्ये वाक्यार्थत्वमुपैष्यति।
अलङ्कारोऽपि वाक्यार्थः स्याद्गुणोऽपि च वाक्यतः[6]॥

वाक्यवाक्यार्थवशतो ध्वन्यन्ते तेऽपि कुत्रचित्।
भावा रसाश्च योज्यास्स्युर्नृत्यनृत्तात्मना नटैः[7]॥

उदाहरणमेतेषां दिङ्मात्रमभिधीयते।
तादात्म्यं भावरसयोर्भारविः स्पष्टमूचिवान्॥

यथा—

'प्रियेऽपरा यच्छति वाचमुन्मुखी
निबद्धदृष्टिः शिथिलाकुलोच्चया॥
समादधे नांशुकमाहितं वृथा
विवेद पुष्पेषु न पाणिपल्लवम्॥'

---

1 D नाट्ये। 2 A नृत्ते। 3 A यथा C तदा। 4 A यो C ये। 5 B भाव। 6 A कार्यतः। C काव्यतः। 7 B नुगैः।

वाचं यच्छतः प्रियस्यावलोकनायोन्मुख्या निबद्धदृष्टित्वश्लथकेशपाशत्वपुष्पस्पर्शानभिज्ञत्वविभाव्यमानस्तम्भसम्भ्रमाङ्गसादादि-भावैः सम्भोगश्शृङ्गारः प्रकाश्यत इति तादात्म्यम् ॥

वाक्यार्थता स्थायिनोऽपि कालिदासेन दर्शिता ॥

'व्याहृता प्रतिवचो न सन्दधे गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥'

एभिर्भावविशेषैरेषा रतयेऽभूदिति स्थायिनो वाक्यार्थता।
सात्त्विकभावस्य वाक्यार्थता यथा—

'प्रयच्छतोच्चैः कुसुमानी'ति भारविदर्शिता।

बाष्पाकुललोचनत्वं सात्त्विको भावः।

बृहद्कुलवीथ्यां सञ्चारिणां वाक्यार्थता यथा—'गमनमलसं शून्या दृष्टि'रित्यादि अत्र सञ्चारिण एव वाक्यार्थः। 'पाणिपीडनविधेरनन्तर'मित्यत्र कामदौहृदसुखमन्वभूदिति सम्भोगश्शृङ्गारो वाक्यार्थः। 'गगनं गगनाकारं सागरः सागरोपमः' इत्यत्र उपमाऽलङ्कार एव वाक्यार्थः। 'अधरः-किसलयरागः कोमलविटपानुकारिणा'वित्यत्र रूपकालङ्कार एव वाक्यार्थः। एवमुभयालङ्कारा ऊह्याः ॥

शब्दो गुणी भवेत्स्वस्ववाच्यार्थगुणगौरवात्।

यथा—'तन्वी श्यामा शिखरिदशने'त्यत्रालम्बनगतविशिष्टगुणाभिधायकतया प्रसादाख्यः शब्दो गुणविशेषो वाक्यार्थ इत्यवगम्यते।

यथाक्रममथैतेषां ध्वनिवाक्यार्थतोच्यते ॥

---

A स्यसात्विक।

'यान्त्या मुहुर्वलितकन्धरमाननं त'दित्यत्र 'हृदये गाढं निहितः कटाक्ष' इत्यत्र च वाक्यार्थ उभयोरपि स्थायिनी रतिर्वाक्यार्थतया व्यज्यते।

[1]जाओ सोवि विलक्खो मए वि हसिऊण गाढमुपगूढो।
पढमोसरिअस्स णिअसणस्स गण्ठिं विमग्गन्तो ॥

अत्र सोऽपि विलक्षो जात इति वाक्यार्थादङ्गसादवैवर्ण्यादि सात्त्विकविशेषो व्यज्यते।

निशि निशि विरहे तव प्रियाया
भवति विलोचनमिन्दुकान्तली[1]लम्।
भवति च वदनं सरोजमस्या
बिसतनुसूत्रसमा तनुश्च तन्वी[2] ॥

अत्र लोचनमिन्दुकान्तं भवति वदनं सरोजं भवति बिससूत्रसमा तनुरिति वाक्यैः बाष्पजाड्यकार्श्यपाण्डिमोद्वाव्यव्याध्यादयो भावा व्यज्यन्ते इति सञ्चारिणां ध्वनितास्थितिः प्रदर्श्यते॥

[2]अहअं लज्जालुइणी तस्सअ उम्मच्छराइ[3] पेम्माइ।
सहिआअणो वि णि[4]उणो हलाओ किं पाअराएण ॥

अत्र सख्यः किं पादरागेणेति निषेधरूपाद्वाक्यादुभयोरपि सम्भोगसम्पद्व्यज्यत। इति रसध्वनिः।

---

१. जातः सोऽपि विलक्षो मयाऽपि हसित्वा गाढमुपगूढः। प्रथमापसृतस्य निवसनस्य ग्रन्थिं विमार्गयमाणः॥ २. अहं लज्जालुस्तस्य चोन्मत्सराणि प्रेमाणि। सखीजनोऽपि निपुणोऽपगच्छ किं पादरागेण॥

1 A नी। 2 C न पाण्डुगात्रम्। 3 A उम्मुत्त चरा। C इमस्सि परा। 4 C अं भणिउ।

'लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥'

अत्रोपमानभूतोत्पलशशिद्विरदकुम्भकदलकाण्डमृणालदण्डै-रुपमेया नेत्रवक्त्रस्तनोरुबाहा[1] व्यज्यन्त इति कदाचिदलङ्कारोऽपि ध्वनिर्भवति ॥

'समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ।
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ॥'

एतैरुपमानैः सर्वसत्त्वाश्रययोग्यत्वस्थिरप्रतिज्ञत्वविपत्प्रतीकारसामर्थ्यसर्वाभिगम्यत्वादयो व्यज्यन्त इत्यलङ्कारोऽपि व्यञ्जकः ।

'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥'

अत्रार्थगुणना[2]म्ना शब्दविशेषेण स्वस्ववाच्य[3]गुणाश्रयभूतसमवायिमहाबलत्वदुरवगाहत्वापराधसहत्वसत्यवादित्वानतिलङ्घनीयत्वसर्वस्वदानक्षमत्वाभेद्यत्वादयोऽर्था व्यज्यन्ते । अत्र गुणगुणिनोस्तादात्म्याद्गुणा अपि व्यज्यन्त इत्यर्थः ।

ईदृगर्थाश्च दृश्यन्ते प्रबन्धेषु महाकवेः ॥
नृत्तनृत्त्यविभागोऽयं विज्ञेयो नाट्यकोविदैः ॥
नृत्तनृत्त्यविभागात्मा नाट्ये योऽभिनयो भवेत् ।
स मार्गसंज्ञां लभते सर्वातोद्यसमन्वितः ।
सुकुमारप्रयोज्यं यत्तनृत्य[4]मिति कथ्यते ॥
[5]प्रयोज्यमुद्धतं यत्तु तन्नृत्तमिति कथ्यते ।
नृत्यप्राधान्यतो नाट्यप्रयोगो रूपकादिषु ॥
प्रयोगस्तोटकादीनां नृत्यप्राधान्यतो भवेत् ।
उभयत्र प्रयोक्तव्यं देशरीतियुतं नटैः ॥

1 B पादा । 2 A व्यक्तिना । 3 C व्यञ्जयत्व । 4 A त्त । 5 B omits this line ।

विशेषतस्तोटकादि देशरीतिमिदुच्यते।
देशभाषाक्रियायुक्तं गीते वाद्ये च नर्तने॥

तोटकादि प्रयोक्तव्यं नटैर्नाट्यविशारदैः।
देशान्पृथग्विजानीयान्नटस्तद्रीतिवित्तये॥

देशो भारतवर्षाख्यो नवसाहस्रयोजनः।
आसेतोरा हिमगिरेरायामः परिकीर्तितः॥

तारः पूर्वापराद्यन्तः सप्तसाहस्रयोजनः।
वसन्ति मर्त्याः सर्वत्र प्राप्ते कृतयुगे सुखम्॥

त्रेतायुगे द्वापरे च हिमाक्रान्तिभयाज्जनाः।
पादं पादं विसृज्यैते श्रयन्ते दक्षिणापथम्॥

योजनानां सहस्रे द्वे सपञ्चाशच्छतद्वयम्।
प्राप्ते कलियुगे मर्त्याश्चरन्ति वसुधातले॥

यक्षा विद्याधराः सिद्धा गन्धर्वाश्च महर्षयः।
क्रीडन्ति स्त्रीगणैः सार्धमुत्तरापथभूमिषु॥

अस्य भारतवर्षस्य चतुर्थो दक्षिणापथः।
चतुष्षष्टिभिदाभिन्नो नानाजनपदाश्रयः॥

पाण्ड्याः सकेरलाश्चोलाः सिन्धुसिंहलपामराः।
कलिङ्गयवनम्लेच्छपारसीकशकाह्वयाः॥

गौडलाटविदर्भाश्च कामरूपान्ध्रकोङ्कणाः।
कर्णाटसुह्मकाम्भोजहूणकारूशगुर्जराः॥

ससौराष्ट्रमहाराष्ट्रहिम्मीरावन्त्यनूपजाः।
अङ्गा वङ्गाश्च बङ्गालाः काशीकोसलमैथिलाः॥

किरातवर्ध्रकारट्टकुरुपाञ्चालकेकयाः ।
औद्रमागधसौवीरदशार्णमगधाह्वयाः ॥

नेपालजैनबाह्लीकपल्लवक्रथकैशिकाः ।
सुशूरसेनकाजानकारूशयवनादयः ॥

यदवश्वक्रकुरवपार्वतीयाः सहैमनाः ।
काश्मीरमरुकेङ्का[1]णनग्नाश्च सहमङ्कणाः ॥

महेन्द्रदुहितुस्सेतोरेते मध्यमुपाश्रिताः ।
एतेऽष्टादशभिर्भाषाभे[2]दैर्व्यवहरन्ति च ॥

ता भाषास्तेषु केषाञ्चिद्देशानां नामभिः कृताः ।
द्रमिडाः कन्नडान्ध्राश्च हूणहिम्मीरसिंहलाः ॥

पल्लवा यवना जैनाः पार्वतीयाः सपामराः ।
कषवर्ध्रककाम्भोजशकनग्नाः सवाकटाः ॥

एतेऽष्टादशभाषाणामाश्रयाः सहकोङ्कणाः ।
एता भाषाश्च सर्वत्र म्लेच्छभाषेत्युदाहृताः ॥

तत्तद्देशेषु सङ्गीतं तत्तद्भाषाभिरन्वितम् ।
देशीति देशिकमपि कथयन्ति मनीषिणः ॥

भाषा नाट्योपयोगिन्यः स्युः षट्पञ्चाथ सप्त वा ।
संस्कृतप्राकृताख्या च पैशाची मागधी तथा ॥

शौरसेनीति पञ्च स्युरपभ्रंशयुताश्च षट् ।
अपभ्रंशाह्वयां भाषां सप्तमीमपरे विदुः ॥

एता नागरकग्राम्योपनागरकभेदतः ।
त्रिधा भवेयुरेतासां व्यवहारो विशेषतः ॥

एवं देशविभागांश्च देशभाषा दशाष्ट च ।
देश्योपचारान्देश्यांश्च तालान्सङ्गीतकानि च ॥

---

1 A कोङ्क । 2 A B D भाषाणां भे ।

सङ्ख्याश्च परिवर्तानां गीते मात्राः कलाकृताः ।
विश्रामानपि तत्सङ्ख्यान् गीते वाद्ये कलावशात् ॥

गीते धातुषु सर्वत्र समार्धविषमादिषु ।
प्रवेशांश्च विदारीणां कालसङ्ख्याः समात्रिकाः ॥

वितालमनुतालांश्च भग्नतालक्रमानपि ।
यथावदभिगम्यैतान्प्रयुञ्ज्यान्नाट्यकोविदः ॥

पौरजानपदानाञ्च देशे देशे महीभृताम् ।
आचारश्चोपचारश्च व्यवहारा अलङ्क्रियाः ॥

आकाराश्चैव वेषाश्च विहाराश्च पृथक्पृथक् ।
तांस्तान्विशेषान् जानीयात्तत्तद्देशानुरूपतः ॥

तां तां प्रकृतिमास्थाय नाट्येनाभिनयेन्नटः ।
वैभाषिकाद्विभाषाश्च यथावत्परिकल्पयेत् ॥

शकाराभीरचण्डालपुलिन्दाश्शबरास्तथा[1] ।
हालिका भैरवाश्चेति सप्त वैभाषिकाः स्मृताः ॥

विश्रामे गीतपाठ्यादेः[2] सदस्यानां नटादिभिः ।
परिहासाय योक्तव्या देशभाषाभिरन्विताः ॥

शकारा गिरिकुञ्जेषु शकारप्रायभाषिणः ।
रक्ताक्षाः कृष्णकेशाश्च तुन्दिला दन्तुरास्तथा ॥

कार्पासकर्पर[3]प्रायवसनाः सहयोषितः ।
आभीराः काननस्रोतस्विनीतीरनिवा[4]सिनः ॥

सगोकुला ह्रस्यवेषाः सहपुत्रकलत्रिणः ।
भाषां चषभषप्रायां व्याहरन्ति यतस्ततः ॥

ग्रामोपान्तवने वासः क्रूरवेषा गवाशनाः ।
ह्रस्वकालाङ्गतेजाश्च(?) श्वपचप्रायभाषिणः ॥

---

1 C दयः । 2 A B मगीतपाठ्यानाम् । 3 A B सिकर्वर । 4 A B D काननस्रोत-न्धिनीतीरवासिनः । C आभारीः कान्तवेतस्विनी ।

